# विज्ञापनम् ।

---

ग्रन्थोऽयं चतुर्व्वर्गचिन्तामणिर्नाम सुविख्यातकीर्त्तिना पण्डितकुलतिलकेन महामहोपाध्यायेन श्रीमता हेमाद्रिणा विरचित । स किल दाक्षिणात्यजनपदे वात्सगोत्रीयात् कामदेवनायकाद्विजात्समादुद्भूत । वासुदेव वामनदेवश्च क्रमेणास्य पितामह प्रपितामह आसीत् । हेमाद्रिस्तु देवगिरिनगरीपते यादववंशावतंसस्य सुगृहीतनामधेयस्य महादेवभूभुज सकलकार्याधिकृत-पण्डित आसीत् । स राजा सहस्रद्वयरेन्दुमिते शकनृपतिसंवत्सरे समुल्लसितवान् । हेमाद्रिश्च तत्समकालिक एवासीत् ।

चतुर्व्वर्गचिन्तामणि व्रतखण्ड दानखण्ड तीर्थखण्ड-मोक्षखण्ड परिशेषखण्डात्मकपञ्चावयवसम्पन्न । तत्र व्रतखण्ड दानखण्डञ्च आसियाटिक-सोसाइटीसमाजाध्यक्षमहोदयानामनुमत्या तत्रभवतां पण्डिताग्रगण्यानां ॐ भरतचन्द्रशिरोमणिमहोदयानां परिशोधनपरत्वेन च मुद्रित । अत एक-महोदयानां परलोकयात्रानन्तरं परिशेषखण्डान्तर्गतश्राद्धखण्ड कालखण्डञ्च अस्य समाजाध्यक्षमहोदयानां अनुमत्या आवयो परिशोधनपरत्वेन च मुद्रित । परिशोधने कीदृशि आदर्शपुस्तकानि सहायभूतानि आसन् । तेषां सूच्य च सं-चिह्नित आसियाटिकसोसाइटीस्थानात्प्राप्त अपरञ्च कलिकातास्थसंस्कृतविद्यामन्दिरपुस्तका-लयादधिगतम् । कोऽपीय पुस्तकानि ग्रन्थकालत अपरिशुद्धानि पूर्वापरसङ्गति-रहितानि च अतो बहुषु स्थानेषु स्मार्त्त मूलपाठ मन्वादिस्मृतिनिबन्धतो याथार्थ्यमवलम्बित तथापि —

> अहहरण्यकुहरात् पवनोऽपि किमप्युद्भवत
> गतार्थस्तु दोषा न हि भवन्ति भान्ति हि विषये ।
> अनन्यायाद्य कुचिदपि भवतु पुनः
> तत्र सन्त यान्ति जितिनितिपूर्व्वे हि कृतिन इति ॥

यदनन्तरं परिशेषखण्डान्तर्गतप्रायश्चित्तखण्डस्य मुद्रणं भविष्यति, सम्भाव्यते एतत्पुस्तक महाजनसमाजोपकाराय कल्पते इत्यलं पल्लवितेन ।

श्रीयज्ञेश्वरशर्म्मण —

श्रीकामाख्यानाथशर्म्मण —

---

# सूचीपत्रम् ।

## ( अ )



## ( आ )

## ( उ )



## ( ए )



## ( क )

## ( त )



## ( द )



## ( न )

## ( प )

( ब )

## ( भ )



## ( म )



## ( य )



## ( र )

## ( व )



## ( श )

# पुराणनामानि ।



## अ ।

अग्निपुराणम् १५५ । १७,

## आ ।

आग्नेयपुराणम् १५२ । ७ १५६ । १३ १६० । १६ ।

आदित्यपुराणम् २८७ । २, ४६३ । १०, ४६७ । १५, ४५ । ८ । ११, ५८२ । १९, ६५६ । ७, ६६६ । २ । १६,

## क ।

कालिकापुराणम् १८१ । २, २०१ । ११, २०८ । १८, २८७ । ११ ४०१ । ११, ४१२ । ३, ५७५ । ४, ८०८ । २,

कूर्मपुराणम् ६ । २, ४२ । १२, १६२ । ८, १७७ । १०, १८० । १८, १८२ । १५, १८३ । ३, २१२ । ८, २१८ । ८, २२३ । १०, २३० । १६, २३१ । १०, २३८ । ७, २४० । १३, २४८ । १४, २६४ । ८, २६५ । १५, २६७ । २, २८० । ८, २८१ । १०, २८५ । १०, २८६ । १६, २८७ । ७, ४५२ । ७, ५५६ । १५, ५५८ । ६, ५६० । २१, ७३० । ३, ७८३ । ६ ८०८ । १३, ८२० । ३, ६ । १४,

## ग ।

गरुडपुराणम् १५२ । ४, १६० । २, १८२ । ८, ३१२ । ११, ३५० । १४, ३५३ । ८,

## द ।

देवीपुराणम् २८५ । २२, ६८५ । ४, ४०७ । ३ ४११ । १८, ४१६ । १३, ४२४ । १६, ६१५ । १४, ६१७ । ८, ६१८ । १४ ६३० । १७, ६३१ । ६, ६३३ । १५, ६३७ । १०, ६३८ । १६, ६७७ । २१, ८४१ । ३, ८५३ । ८,

देवीरहस्यपुराणम् १५० । १८, १८२ । १८,

## न ।



## प ।

ब ।



भ ।

म ।



र ।

## ल ।



## व ।

## श ।



## स ।

# ऋषिनामानि।

## अ।



## आ।



## उ।



## ऋ।



## क।

## प ।

ब ।

## य ।

## ल ।



## व ।

## ह ।

# स्मृतिग्रन्थनामानि।

## आ ।



## क ।



## ख ।



## ग ।



## च ।



## छ ।



## त ।



## द ।

## ष ।



## स ।

# संग्रहकारनामानि ।

---

ॐ श्रीगणेशाय नमः ।

## चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये

सम्वत्सरायण मासविशेषाख्य कार्य्यविशेषोपयोगनिरूपणम् ।

## प्रथमोऽध्यायः ।



कल्याणानि ददातु वो गणपतिर्यस्मिन्नतुष्टे सति
क्षोदीयस्यपि कर्म्मणि प्रभवितुं ब्रह्मापि जिह्मायते ।
जाते यच्चरणप्रणामसुलभे सौभाग्यभाग्योदये
रङ्कस्याङ्कमनङ्कुशा निविशते देवेन्द्रलक्ष्मीरपि ॥ १ ॥
शश्वत्पुण्यहिरण्यगर्भरसनासिंहासनाध्यासिनी
सेयं वागधिदेवता वितरतु श्रेयांसि भूयांसि वः ।
यत्पादामलकोमलाङ्गुलिनखज्योत्स्नाभिरुद्वेल्लित
शब्दब्रह्मसुधाम्बुधिर्बुधमनस्युच्छृङ्खलं खेलति ॥ २ ॥
नमस्तस्मै विश्वोदयविलयरक्षाप्रकृतये
शिवाय क्षोणीधच्छिदुरपदपद्मप्रणतये ।
अमन्दस्वच्छन्दप्रथितपृथुमौलानुसृते
त्रिवेदीवाचामप्यपथनिजतत्त्वस्थितिभृते ॥ ३ ॥

रागः क्वाप्य नवस्तन श्रुतिरियं चेतश्चमत्कारिणी
सुग्धे वेत्थ यथा मयाद्य भरते वैदग्ध्यमाविष्कृतम् ।
आमीरे दयितेव सा शुभरते यद्यद्विधत्ते मया-
नियुक्तो मधुभिद्विवृत्तरसुधः चिन्वन् प्रियां पातु वः ॥ ४ ॥
ते देवस्य गभस्तयो दिनपतेरापन्नखेदच्छिदो-
निष्कृन्तन्तु कृतान्तपत्तनपथप्रस्थानदौस्थ्यानि वः ।
यैः सौवर्णमिवाखिलं करुणया निर्मातुमभ्युद्यतैः
कौर्णस्वर्णपरागरागघटितं दिक्चक्रमालक्ष्यते ॥ ५ ॥
राजा राजीवबन्धुर्विजयति जगति स्फीतगीतांशुवंश-
प्रादुर्भूतः त्रिलोकक्षितिपतितिलकः सिंघणः सिंहशक्तिः ।
तत्पुत्रो जैत्रपालः समभवदवनीमण्डलाखण्डलश्री-
रस्माद्दिग्व्यापकानां समजनि यशसां भाजनं कृष्णभूपः ॥ ६ ॥
अस्ति प्रत्यक्षमाभृन्मुकुटमणिशिरोरत्नांशुदक्ष-
श्रेणीवेणीविराजत्पदयुगलगलद्वर्णिवैरिवीरः ।
तादृग्भिः श्रीमहीमाह्नुतचरितगतारम्भदम्भाद्भुताभि-
र्भिस्तिर्न्यस्तप्रशस्तिर्द्रुततनुजः श्रीमहादेवभूपः ॥ ७ ॥
आ कैलासाद्विलासालसगणतरुणीगीतगौरीशकीर्त्तेः
आ च प्रेङ्खोलपाथोनिधिजललहरीखेदवेलाभुवेलात् ।
आ पूर्वस्मात्परस्मादपि धरणिभृतः कम्पमाना यदीयाम्
आज्ञां राज्ञामधीशाः करमुकुलमिलन्मौलयः पालयन्ति ॥ ८ ॥
संग्रामेष्वधमर्णतामुपगता वीराः परद्वीटयः
सेवा-श्रीमुपपादनेन विविधानाधीमिरस्य धनात् ।

यस्मादाददते निरत्ययसुखं नवैनदीयं यशो-
दिक्पालानिव याचितां गमयितुं दिङ्मण्डलीमद्गुनि ॥९॥
हेलायादितलब्धमार्गणगणं श्रुत्वैतदीयं गुणं
येषां श्रीहरसुधारनन्यहरहस्तुष्टावदानाद्भुतम् ।
तेषामेव महाहवेषु मिलतां प्रत्यर्थिनामर्थिना-
मप्याशाय भुजं भजन्ति विलयं सैन्यानि दैन्यानि च ॥१०॥
यस्योर्वीभीमभूमीरुहगहनगुहागर्त्तगर्जन्मृगेन्द्र-
श्रावव्याघ्रप्रघ्नोर्ध्वलनकुलकुलव्याकुलव्यालमालाम् ।
वारं वारं स्वनीतद्रुतजगयुगैः स्फीतभीतप्रतीपा
मूर्च्छामृच्छन्ति हन्त क्षितिधरधरणौ सञ्चरन्तोऽरिपक्षाः ॥११॥

अनेन चिन्तामणिकामधेनु-
कल्पद्रुमानर्थिजनाय दत्वा ।
विलोक्य शङ्के किममुष्य सर्वं
गीर्वाणनाथोऽपि करमदोऽभवत् ॥१२॥

तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः ।
निजोदारतया यस्य सर्वश्रीकरणप्रभुः ॥१३॥

तस्मादनुष्ठितचरित्रपवित्रकीर्त्ते-
र्वंशे हिमांशुविशदद्युतिराविरासीत् ।
लीलावतारमकरोदिह वासुदेव
ग्रामाद्विजातिवरजन्मत कामदेव ॥१४॥

हेमाद्रिरित्यधिगतभुवनगीतकीर्त्ति
स्पष्टाय तत्सुरजनिष्ट वरिष्ठमूर्त्तिः ।

नाथ्या समोऽपि विजितत्रिदिवेन येन
श्लाघामुपैति नहि काञ्चन काञ्चनाद्रिः ॥१५॥
तस्य श्रीकरणेऽस्य कापि लेखनचातुरी ।
यत्र प्रशस्तिभिस्तुल्यं येन दिग्भित्तयो मताः ॥१६॥
लिपिं विधाता लिखितां जनस्य
भाले विभूत्या परिमृज्य दुष्टाम् ।
कल्याणिनीमेष लिखत्यदैन्याम्
चित्रं प्रमाणीकुरुते विधिश्च ॥१७॥
सञ्चिन्त्य सञ्चिन्त्य तदेतदीय
धत्ते मनोविस्मयमस्मदीयम् ।
प्रागजन्मविद्याभरणचमोऽयम्
क्षणेन यद्विस्मृतिमेति दत्वा ॥१८॥
मन्ये तत्तत्पदाम्बर्गरिलहरीपूर्यमानोऽम्बुधिः
कल्पान्तेऽपि न शोषदोषविषयतां धत्ते कदाचिद्यतः ।
किञ्चैव जलाधिपाधिपप्रतिभुवं निधिश्य दैत्यारिणा
निश्चिन्तेन भुजङ्गपुङ्गवतनूतल्पेषु संसुप्यते ॥ १९ ॥
चित्रं तत्तत्पदाम्बरदिपपयसत्यस्य किं ब्रूमहे
यस्मिन्नन्यतदान्यकीर्त्तिरतुला धत्ते हमश्रेणिताम्
यङ्गमी पतित यदिष्णु जनतापङ्कानि याथार्थिनाम्
न्यस्तं दुस्तलेषु भालफलके पापां लिपिं लुम्पति ॥२०॥
तत्तर्पितोद्देवगण. स नून-
मरीचकी चन्द्रमस सुधायाः ।

जयन्तु चन्द्रस्य तदीयकीर्त्ति-
स्पर्द्धास्पद्धानि फलन्त्यघानि ॥२१॥

शूराणामवधिर्निधिश्च यशसामेकाश्रयः सम्पदाम्
दातॄणां प्रथमः कलाकुलगृहं वैदग्ध्यमार्गे गुरुः।
धौरेयश्च विपश्चितां सुकृतिनामद्वैतवादास्पदम्
नैवासीत [illegible] वर्त्तते न भविता हेमाद्रिसूरेः परः ॥२२॥

बिभर्त्ति नूनं द्विजवेषमेष
स एव हेमाद्रिरिति प्रतीतः।
यदाश्रयन्नामयतो यदस्य
कल्पद्रुमं दक्षिणबाहुमाहुः ॥२३॥

अथामुना धर्मकथादरिद्रम्
त्रैलोक्यमालोक्य कलेर्बलेन ।
लोकोपकारे दधतानुचिन्ताम्
चिन्तामणिः प्रादुरकारि चारुः ॥२४॥

तत्र च ।

खण्डैश्चतुर्भिर्व्रत-दान-तीर्थ-
मोक्षाभिधैर्धर्मचतुष्कमुख्यम् ।
निरूप्यते तत्परिशिष्टवस्तु-
व्यावर्णनार्थे परिशेषखण्डम् ॥२५॥

तत्रादौ देवताकाण्डं ततः कालविनिर्णयः ।
विपाकः कर्मणां पश्चाल्लक्षणानां समुच्चयः ।
महाप्रकरणानीह चत्वार्येतान्यनुक्रमात् ॥२६॥

नत्वोक्तव्रत-दानादिकर्म्मजातोपयोगिनम् ।
कुरुते करणाध्यक्षो हेमाद्रिः कालनिर्णयम् ॥१७॥

तत्र कालस्वरूपं कूर्म्मपुराणे दर्शितम् ।

अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः ।
सर्व्वगत्वात् स्वतन्त्रत्वात् सर्व्वात्मत्वान्महेश्वरः ॥
ब्रह्माणो बहवो रुद्रा ह्यन्ये नारायणादयः ।
एको हि भगवानीशः कालः कविरिति स्मृतः ॥
कालेनैव च सृज्यन्ते स एव ग्रसते पुनः ।
ब्रह्म-नारायणेशानां त्रयाणां प्राकृतोलयः ॥
प्रोच्यते कालयोगेन पुनरेव च सम्भवः ।
परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः ।
तस्मात् कालात्मकं विश्वं स एव परमेश्वरः ॥

विष्णुधर्म्मोत्तरे ।

अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः ।
कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः ॥
अनादिनिधनत्वेन स महान् परमेश्वरः ।
निमेषादपि सूक्ष्मत्वात् सूक्ष्मात्सूक्ष्मतरो ह्यति ॥
तस्य सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः ।
दुर्व्विज्ञेया महाभाग योगिनामपि सूक्ष्मता ॥
पद्मपत्रशतस्यन्तु सूच्या वै भिद्यते यदा ।
समकालन्तु तद्भिन्नमबुधो मन्यते जनः ।
कालक्रमेण तद्भिन्नं सा तस्य द्विज सूक्ष्मता ॥

एवंविधस्यानादिनिधनस्यापि सूक्ष्मस्य यद्यप्यपरिच्छिन्नता तथा-प्याद्यन्तवतीभिः सूर्य्यादिग्रहक्रियाभिः परिच्छिन्नतोपपद्यते तासां क्रियाणां सन्तानस्य बीजाङ्कुरसन्तानवदनाद्यनन्तत्वादनादिनिधन-स्यापि कालस्य परिच्छेदः सम्भवति ।

तथाच विष्णुधर्म्मोत्तरे ।

तस्य सूक्ष्मातिसूक्ष्मस्य तथापि महतो द्विजाः ।
कालसंज्ञा बुधैर्ज्ञेया ग्रहगत्यनुसारतः ॥

तथाक्षरादिमत्यक्षनिमेषादिक्रियाद्वारेण परिच्छेदः कालस्य तत्रैवाभिहितः ।

लघ्वक्षरसमा मात्रा निमेषः परिकीर्त्तितः ।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥
नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः ।
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः ॥
विनाडिका तु षट्प्राणास्तत्षष्ट्या नाडिका स्मृताः ।
अहोरात्रन्तु तत्षष्ट्या नित्यमेव प्रकीर्त्तितम् ॥
त्रिंशन्मुहूर्त्ताश्च तथा अहोरात्रेण कीर्त्तिताः ।
तेऽत्र पञ्चदश प्रोक्ता राम नित्यं दिवाचराः ॥
उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः ।
तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज ॥
दिवसस्य यथा राम वृद्धिं समधिगच्छति ।
तदाश्रितमुहूर्त्तानां तथा वृद्धिः प्रकीर्त्तिता ॥
दिनवृद्धिर्यथा राम दोषाहानिस्तथा तथा ।

तदाश्रितमुहूर्त्तानां हानिर्ज्ञेया तथा तथा ॥
दक्षिणाञ्च यदा काष्ठां क्रमादाक्रमते रविः ।
दिवसस्य तथा हानिर्ज्ञातव्या तावदेव तु ॥
क्षीयन्ते तस्य सामी तु तन्मुहूर्त्तास्तथैव च
रात्र्याश्रिताश्च वर्द्धन्ते रात्रिवृद्धिस्तथा तथा
यदा मेष महस्रांशुस्तुलाश्चैव प्रपद्यते ।
समरात्रिन्दिवं कालो विषुवच्छब्दवाचकः ॥

एवञ्च निमेषादिक्रियाकालद्वारेणावच्छिन्ना या सूर्य्यक्रिया तादृश्यौ द्वे क्रिये यस्याः क्रियायाः अवयवौ तत्क्रियया अवच्छिन्न कालस्त्रुटिरिति व्यवहारस्य विषयो भवति। एवमन्येऽपि प्राण-विनाडिकादयो व्यवहारा ज्ञेयाः, एवं सूर्य्याद्यवयवद्वारेणाहोरात्र निष्पद्यते। तच्च त्रिविधं दर्शितं ब्रह्मसिद्धान्ते।

सावनं स्यादहोरात्रमुदयादोदयाद्रवेः ।
रवेस्त्रिंशांशः (?) राक्षसस्तिथिसम्भोगमैन्दवम् ॥

विष्णुधर्म्मोत्तरे त्वहोरात्रञ्च चतुर्धा दर्शितम्।

तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः ।
अहोरात्रेण चैकेन सावनोदिवसः स्मृतः ॥
आदित्यभागभोगेन सौरोदिवस उच्यते ।
चन्द्रनक्षत्रभोगेन नाक्षत्रोदिवसः स्मृतः ॥

तिथिभागयोर्लक्षणं तत्रैव दर्शितम्।

चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत् ।
तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य भार्गव ॥

भगणेन समग्रेण ज्ञेया द्वादश राशयः ।
त्रिंशांशस्तु तदा राशेर्भाग इत्यभिधीयते ॥
आदित्याद्विप्रकृष्टन्तु भागं द्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥

स्कान्दपुराणे प्रभासखण्डेऽपि ।

अमाषोडशभागेन(१) देवि प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ॥

एवं मासोऽपि पितामहेन त्रिविधो दर्शितः ।

दर्शाद्दर्शस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिविचिह्नः सौरोऽपि निगद्यते तज्ज्ञैः ॥

'दर्शादिति ल्यब्लोपे पञ्चमी दर्शात्परतः शुक्लप्रतिपदमारभ्य अमावास्यान्त इत्यर्थः ।

तथा च ब्रह्मसिद्धान्तेऽभिहितम् ।

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्तावत्कालं सभास्करः ॥

ज्योतिःसिद्धान्ते [illegible] मासश्चतुर्विधो दर्शितः ।

प्रथमः सावनो मासो द्वितीयश्चान्द्र उच्यते ।
नाक्षत्रस्तु तृतीयः स्यात्सौरो मासश्चतुर्थकः(२) ॥

---

(१) अमाषोडशभेदेनेति ख० ।
(२) चतुर्विध इति ख० ।

विष्णुधर्मोत्तरेऽपि मासस्य चातुर्विध्यमावेदितम्।

चन्द्रमाः पौर्णमास्यन्ते भास्करादतिरिच्यते।
राशिषट्कं तथा राम माधार्द्धेन न संशयः॥
भागद्वादशकेनैव तिथ्यां तिथ्यां क्रमेण तु।
चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते॥
सन्निकर्षाद्यारभ्य सन्निकर्षाद्यापरम्।
चन्द्रार्कयोर्युधैर्मासश्चान्द्र इत्यभिधीयते॥
मासने [redacted] तथा मासि त्रिंशत् सूर्य्योदयाः स्मृताः।
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः।
सर्व्वर्क्षपरिवर्त्तैस्तु मासश्चो माम उच्यते॥

चान्द्रस्तु देशव्यवस्थया चिकाषड्मण्डलेन निवन्धकृता द्विधा दर्शितः।
चान्द्रोऽपि शुक्लप्रथमादिः कृष्णादिर्वेति च द्विधा।

कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन।
येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे॥

तथा च तैत्तिरीयके श्रूयते।

*अमावास्यया मासान् सम्पाद्याहरुत्सृजन्त्यमावास्यया हि मासान् सम्पश्यन्ति पौर्णमास्यया मासान् सम्पाद्याहरुत्सृजन्ति पौर्णमास्यया हि मासान् सम्पश्यन्तीति।*

तथा पौर्णमासादिचिकनर्षाम्प्राद्यावार्त्तिके पूर्णमासोऽसिन्निति शब्दविक्षिरुक्तवात्। अश्वयुक् कृष्णपक्षे च श्राद्धं कार्य्यं दिने दिने। इति लिङ्गदर्शनाच्च।

अतएव द्विविधचान्द्रमासग्रहाय "यस्मिन्मासे दिने यस्मिन् विप-

त्तिरुपजायते । पर्व्वान्तः स तु विज्ञेयो मासो नैमित्तिकं प्रति" ॥ इति ज्योतिर्गर्गेणापि पर्व्वान्त इति सामान्येनोक्तं । नैमित्तिकं च प्रतिसांवत्सरिकमुच्यते, सांवत्सरिके च चान्द्रमास एव विनियुक्तः । "आब्दिके पितृकार्य्ये च चान्द्रो मासः प्रशस्यते" । इति वचनात् ।

मानभेदेन मास-दिनसङ्ख्या विष्णुधर्म्मोत्तरे दर्शिता ;

माने मासस्तु मासचः सप्तविंशतिभिर्दिनैः ।

परिशेषेषु मासेषु मासस्त्रिंशद्दिनः स्मृतः ॥

मासशब्दो यथोदितानां चतुर्णामपि मासानामनेकार्थगवादि-शब्दवद्वाचको द्रष्टव्य इति केचित् । अपरे त्वाहुः मासशब्दश्चान्द्र-मासविशेषवचनः "त्रयोदशमासाः संवत्सरः अस्ति त्रयोदशो मासः अर्द्धमासे देवा इज्यन्ते मासि मासि पितृभ्यः क्रियन्त इत्यादि-वैदिकप्रयोगस्य चान्द्रविषयत्वात्तेन यव-वराहादिशब्दवत् सर्व्वत्र मुख्यत्वं । पक्षौ पूर्व्वोत्तरौ शुक्ल-कृष्णौ मासस्तु तावुभावित्यमरसिंहे-नाभिधानात् । इतरथा चान्द्रमास इत्यभिदध्यात् । एवमन्येष्वभि-धानेषु चान्द्र एव मासशब्द इति निरूपितं । "मासः पक्षद्वयमिति पुराणाद्यभिधानाच्च । न च चतुर्षु मासेष्वनुगतं मासत्वसामान्यम-नुभूयते उपपद्यते वा, मासान्तरे प्रयोगस्तु प्रकारान्तरेणाप्युपपन्न-स्तथानेकार्थशक्तिकल्पनाभयाच्चान्द्र एव मुख्यो मासशब्द इति । अत्र केचिदाहुः चैत्र-वैशाखादिशब्दाश्चित्रा-विशाखानुराधादिनक्षत्राणा-मेकतरनक्षत्रयुक्तपौर्णमासीयुक्तमासवचनाः पाणिनेरनुशासनादिति यथोक्तं "नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति संज्ञायामिति" 'नक्षत्रेण' विशाखाद्यन्यतरेण, युक्ता पौर्णमासी वैशाखादिव्यपदेशभाक्

नक्षत्रयोगस्य न कार्त्स्न्येन किन्त्वेकदेशेनापि व्यपदेशे हेतुः।

तथाच शङ्करगीता।

आदिपादार्द्धमात्रेण नक्षत्रस्यान्वये सुधीः।

तिथिरर्द्धेऽपि संयुक्ता विपरीता न सा पुनरिति ॥

सा पौर्णमासी यस्मिन्मासे स वैशाखादिपदाभिधेयः, 'संज्ञायामिति रूढिशब्दतां पुरस्करोति।

तथाच च्यवनः।

अश्वयोषाढयौ चित्रौ ज्ञेयौ फाल्गुनश्च चित्रो मतः।

शेषा मासा द्विभा ज्ञेयाः कार्त्तिकादिव्यवस्थयेति ॥

सङ्कर्षणकाण्डेऽपि।

द्वे द्वे चित्रादितारात्र्ये परिपूर्णेन्दुसङ्गते।

मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः ॥

तेन विशाखादियोगाद्वैशाखादित्वमिति नक्षत्रयोगः आदरणीयः। तथाच विष्णुः। माघी चेन्मघायुक्ता स्याद्वैशाखी चेद्विशाखायुक्ता स्यादिति। यत्तु वृत्तिकारेण पुष्ययोगात् पौषीत्याद्युदाहृतं तच्छिष्याणां सुखबोधार्थं नायमपकर्णादिवत्संबन्धी शुभावयवार्थः किन्तूद्दिष्टादिवदवयवार्थः कश्चिदवान्तरप्रवृत्तिनिमित्त इति तस्याभिप्रायः, प्रकृति-प्रत्ययान्वाख्यानमपि गोशब्दस्येव गमेर्डो गच्छतीति गौरितिवदवमेयं। ततश्च वैशाखशब्देन पौर्णमासी वा नक्षत्रं वा तद्योगो वा तद्युक्ता वा पौर्णमासी नक्षत्रं वा तद्युक्तं पौर्णमासीयुक्तो वा तद्योग इत्यादिकल्पनावतारः। आगमप्रसिद्धिप्रायस्याद्यपकर्णादिशब्दतुल्यत्वानुपपत्तेः। तस्माद्वैशाख्यादिशब्दा

यथोदितनक्षत्रयुक्तपौर्णमासीलक्षणकालवचनाः, वैशाखादिशब्दाश्च तत्तन्नक्षत्रान्वितपौर्णमासीमध्यशुक्लप्रतिपदादिदर्शान्तचान्द्रमासवचनाः इति स्थितं। कथं तर्हि सौरमासे वैशाखादिपदप्रवृत्तिः तत्रापि प्रसिद्धिप्राबल्यमस्ति। तत्र केचिदाहुः अनेकशक्तिकल्पनादोषाद्गौणीति । चान्द्रे हि मासे वैशाखादिशब्दप्रसिद्धिः अभियुक्तानां शास्त्रस्था, सौरे तु मासे न शास्त्रस्था, शास्त्रस्था च प्रसिद्धिर्बलीयसी न लौकिकी, तथा गौणत्वेनाप्युपपत्तेः । तथाचाहुः "शास्त्रस्था तन्निमित्तत्वात् प्रतिपत्तेर्बलीयसी । लौकिकी प्रतिपत्तिस्तु गौणत्वेनापि नीयते" इति ॥

तदसत् प्रसिद्ध्योरविशेषात् । तथा च ज्योतिर्गार्ग्यः ।

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

बृहस्पतिः ।

विवाहे सौरमासे अधिकामर्थसिद्धिं प्राह वराहमिहिरः ।
नैवं प्राह पराशरः कथयते पौषञ्च दौर्भाग्यदम् ।
आषाढादिचतुष्टये न शुभदं कैश्चिन्निदिष्टं द्विजैरित्यादि ॥

बौधायनश्च ।

कर्कटे तु हरौ सुप्ते गजध्वजक्रियाश्विने इति ।
तुलायां बोधयेद्देवी वृश्चिके तु जनार्दनम् ।
दिवाषाढः स विज्ञेयः शेते च श्रावणेऽच्युत इति ॥

तेन बौधायनादयः सौरमासे श्रावणादिपदानि प्रयुञ्जते तेनोभयापि प्रसिद्धिः शास्त्रस्था न विशेषेण सौरमासमता गौणा इत्या

समाधीयते प्रसिद्धिप्रावल्याद्यनेकशक्तिकल्पना अश्वादिशब्दवन्न विरुध्यते, अगोपालाङ्गनाजनपुरस्कृता सौरमासे वैशाखादिपदप्रसिद्धिः, क्वचिदेव तु चान्द्रे। तस्मात् सौर-चान्द्रमासवचना एव मुख्यया वृत्त्या वैशाखादिशब्दा इति सिद्धमिति। तदयुक्तं उभयोरपि प्रसिद्धोः शास्त्रत्वाविशेषेऽपि चान्द्रमासे वैशाखादिपदप्रसिद्धिः सार्व्वत्रिकी प्रबला सौरे तु न तथा, यत्तूक्तं आगोपालाङ्गनाजनपुरस्कृता च सौरे मासे वैशाखादिपदप्रसिद्धिः क्वचिदेव तु चान्द्र इति, तदपि मिथ्यैव विपरीतस्यैव दर्शनात्। तथा च पाणिनिः "नक्षत्रेण युक्तः कालः अस्मिन् पौर्णमासीति संज्ञायामिति। न च सौर-चान्द्रयोरेविंवधास्ति संज्ञा, तस्माच्चान्द्रमासवचना एव चैत्र-वैशाखादिशब्दाः। एतावत्तु सौर-चान्द्रमासेनैव मासद्वयात्मकः। तत्र सौरमानेन विष्णुधर्म्मोत्तरे।

सौरमासद्वयं राम ऋतुरित्यभिधीयते।
चान्द्रमानेनापि चिकाऽसमझने।
श्रौत-स्मार्तक्रियाः सर्व्वाः कुर्य्याच्चान्द्रमासर्तुषु।
तदभावे तु सौरर्त्तुष्विति ज्योतिर्विदाम्मतम्॥
ऋतौ चान्द्रनिमित्तत्वं मन्त्रवर्णात्प्रतीयते।
ऋतुनन्योविदधज्जायते पुनरित्यतः॥
पुनः पुनर्य्यो जायते स एव विदधदृतून्।
चन्द्रः पुनः पुनर्जन्मा तस्माच्चन्द्रवशादृतुः॥
होतृप्रकरणे चन्द्रं प्रक्रम्य प्राह तित्तिरिः।
स ऋतून् कल्पयतीति चान्द्रोऽयं ऋतुकल्पकः॥

ते च षड् हेमन्त-शिशिरयोः समासेन पञ्च पञ्चवा ऋतवः पञ्चर्तवः हेमन्त-शिशिरयोः समासेनेति च श्रुतेः, ते च वसन्तोपक्रमाः मुखं वा एतदृतूनां यद्वसन्त इति श्रुतेः, ते च प्रत्येकं चैत्रादिमासद्वयात्मकाः, मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू, नभश्च नभस्यश्च वार्षिकावृतू, इषश्चोर्जश्च शारदावृतू, सहश्च सहस्यश्च हैमन्तिकावृतू, तपश्च तपस्यश्च शैशिरावृतू इत्याथर्वणवादिश्रुतेः। मधुमाधवादिशब्दाश्चैत्र-वैशाखादिषु ग्रन्थान्तरे प्रयुक्ताः।

चैत्रोमासोमधुः प्रोक्तो वैशाखो माधवो भवेत्।
ज्येष्ठमासश्च शुक्रः स्यादाषाढः शुचिरुच्यते॥
नभो मासः श्रावणः स्यान्नभस्यो भाद्र उच्यते।
इष आश्वयुजो मासः कार्त्तिकश्चोर्जसंज्ञकः॥
सहोमासो मार्गशिरः सहस्यः पौषमासकः।
माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः॥

बौधायनेन पुनर्मीन-मेषयोर्मेष-वृषयोर्वा वसन्त इत्यभिधानात् मीनादिकं मेषादिकं च वैकल्पिकं वसन्ताद्यङ्गीकृतं, यदा त्वधिकमासो भवति तदा चान्द्रमानेन मासत्रयात्मकोऽपि कश्चिदृतुः सम्पद्यते।

तथाच त्रिकाण्डमण्डनेनोक्तम्।

चान्द्रे मासे यदा चैत्रमासादिर्मलिनस्तदा।
शुद्धेऽपि मलिने चैत्रे वैशाखेऽपि वसन्तता॥
ननु सैवेयमायाता मासत्रयवसन्तता।
सत्यं मत्यन्तराभावात् सैवात्राभ्युपगम्यते।
अन्यत्रापि विकल्पः किं तदत्राभ्युपगम्यते॥

माघाद्वयो वसन्तस्याः त्यक्ताद्यमथवान्तिमम् ।
अचोद्यते विकल्पो हि सौरमासेषु युज्यते ॥
न तु चान्द्रेषु युक्तोऽसौ मलमासानुवर्त्तिषु ।
द्वादशैव हि ते मासाः सूर्यसंक्रान्तिसञ्ज्ञिताः ॥
द्वौ द्वौ मासाविर्त्तवैकैकस्तत्तं छला तु गण्यते ।
ऋतवस्तत्र मीनाद्या मेषाद्या वा षडेव हि ॥
चान्द्रस्तु मलिने माघे माघे मासास्त्रयोदश ।
विकल्पनेऽथ यत्किञ्चिन्मासमारभ्य युग्मतः ॥
ऋतुषु क्रियमाणेषु मास एकोऽतिरिच्यते ।
किमभावमृतुर्मासः किमर्द्धः सप्तमो भवेत् ॥
सप्तर्त्तुषु वा क्वापि प्रविशत्विति चिन्त्यते ।
ऋतुशून्यो न कालोऽस्ति मासृतुः सप्तमः श्रुतौ ॥
तथर्त्तुर्ऋतुनाऽयुग्मस्य दत्यृतुशून्यता ।
यद् वा चात्र दत्येषा श्रुतिः सप्तमवारिका ॥
अतः श्रुतेः स्मृतिर्बाधा द्वौ मासावृतुरित्ययं ।
तस्मादधिकमासः स्याद्वान्येष्वृतुषु कुत्रचित् ॥
यद्येषोऽन्तर्भवेन्मासः स ऋतुः स्यात् त्रिमासिकः ।
यद्वा षष्टिदिनैर्मास एक एवोभयात्मकः ।
अतोऽत्रापि वसन्तस्य स्याद्द्वयोरेव मासयोः ॥

अयनञ्च सौरमृतुत्रयेण तथा च सौरमानमधिकृत्य विष्णुधर्मोत्तरे "ऋतुत्रयञ्चायनं स्यादिति. तथाच संवत्सरोऽपि चान्द्रेर्मासैश्चान्द्रः सावनैः सावन. सौरैः सौर इति त्रिविध । तथाचोक्तं ब्रह्मसिद्धान्ते ।

चान्द्र-सावन-सौराणां मासानान्तु प्रभेदतः ।
चान्द्र-सावन-सौराख्यास्त्रयः संवत्सरा अपि ॥

ते च द्वादशमासात्मकाः "द्वादश मासाः संवत्सर इति श्रुतेः। चान्द्रस्तु संवत्सरः कदाचित्त्रयोदशमासात्मको भवति, अस्ति त्रयोदशो मास इत्याहुरिति श्रुतेः । चान्द्रमास एव त्रयोदशमासस्य सम्भवात् ।

तथाच विष्णुधर्मोत्तरे ।

सौरसंवत्सरस्यान्ते मानेन शशिनो यदा ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समादये साष्टमासे तदास्मासोऽतिरिच्यते ॥

चान्द्रसंवत्सरस्य चैत्रशुक्लप्रतिपदुपक्रमः ।

तथा ब्रह्मपुराणे संवत्सरारम्भविधिक्रमे ।

चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तथा सूर्य्योदये सति ॥
प्रवर्त्तयामास तथा कालस्य गणनामिह ।
ग्रहान्नागानृतून्मासान् वत्सरान् वत्सराधिपान् ॥

ब्रह्मसिद्धान्ते ।

चैत्रसितादेरुदयात् भानोर्दिन-मास-वर्ष-युग-कल्पाः सृष्ट्यादौ लङ्कायां सम प्रवृत्ता दिनेऽर्कस्य सौरः संवत्सरः, पुनर्मीनादिर्मेषादिर्वा समस्तस्य विकल्पेन मीनादित्वस्य मेषादित्वस्य चोभयत्रादर्शनाच्च च ऋतुमुख्यत्वात् संवत्सरमुखस्यैव ऋतुमुखत्वोपपत्तेः ।

यत्तु विष्णुधर्मोत्तरे ।

मासद्वयसमारम्भे चन्द्रार्कौ वासवर्क्षगौ ।

सौरस्य पक्षात् व्यवहारकार्य्यं ॥
स्यात् पूर्वकालक्षयपूरणाभ्याम्
चान्द्रेण मानेन युगस्य राशेः ।
नक्षत्रमानाद्ग्रहणानि चैन्द्री-
मानेन कुर्य्याद्गणनात्मकेन ॥

ऋष्यशृङ्गः ।

विवाह-व्रत-यज्ञेषु सौरं मानं प्रशस्यते ।
पार्वणेऽष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥

ज्योतिर्गर्गः ।

विवाहोत्सव-यज्ञेषु सौरं मानं प्रशस्यते ।

तथा स्मृत्यन्तरे ।

एकोद्दिष्टविवाहादौ क्षणादौ सौर-सावनौ ।
तद्वेव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः ॥

तथाच ज्योतिर्गार्ग्ये ।

सौरमासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च चान्द्रोमासः प्रशस्यते ॥

'आब्दिके' सांवत्सरिकमृताहश्राद्धे । 'पितृकार्य्ये' पाण्मासिकश्राद्धादौ, यज्ञाद्यारम्भ-संवत्सरकार्य्ये यज्ञव्यतिरिक्ते सर्व्वस्मिन् दैवकार्य्ये 'चान्द्रोमासः' प्रशस्यत इत्युक्तं ।

उक्तञ्च पितामहेन ।

दैवे कर्म्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ॥

ब्रह्मसिद्धान्ते ।

प्रतिसंवत्सरश्राद्धे मासश्चान्द्रमसः स्मृतः ॥

वृहस्पतिः ।

रवेरभ्युदये मानं चन्द्रस्य पितृकर्मणि ।
यज्ञे सावनमित्याहुराचे सर्व्वगतादिषु ॥

ज्योतिर्गार्ग्यः ।

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेनैव कर्त्तव्या शत्रूणां वाप्युपासना ॥

यथा पाण्डवैः कौरवाणां मन्त्रविद्धाम्नात् ।

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
संक्रान्ति-पौर्णमासाभ्यां तथैव नृप-वैश्ययोः ॥

अथादिशब्दार्थं श्रीधरेण दर्शितं ।

विवाहोपनयन-चूड़ा-व्रत-नियम-प्रतिष्ठा-गृहकरण-चौर-यात्रा-महाषष्ठी—महासप्तमी-विजयदशमी-दशहरा-युगादि-महाज्यैष्ठा-प्रभृत्यादिशब्देनोपादीयते, यज्ञादावित्यादिशब्देन याग-दान-होम-गर्भाधान-सीमन्तोन्नयन-जातकर्म-ऋण-क्रय-विक्रय-व्यवहार-ग्रहण । तथा—"सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः" इत्यत्र पितृकृत्यादावित्यादिशब्देन हद्याभिषेक-सवत्सरश्राद्ध-पार्व्वणाष्टकादे-ग्रयन-चूड़ा-व्रतनियम-प्रतिष्ठा-गृहकरण-चौर-यात्रा-शक्रोत्सवा-दिग्रहण । तथाच प्रथमराशित प्रसतिगोचराष्टवर्गानुसरणक्रमेण नक्षत्राग्निभोगसम्बन्धेन शुभाशुभोपभोगात् ।

मङ्गलेषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्र-पौषविवर्जिता इति ॥

मासोपदेशे सौरमासाश्रयणं सावनस्य च मासस्य नियतत्रिंश-द्दिवसत्वात्रिषेकदिवसात् प्रभृतिषु षष्ठाष्टमासेषु पुंसवनादेर्विधानात् "मासमग्निहोत्रं जुहोतीति "चातुर्मास्येन यजेतेत्यादिष्वनियतदिवस-मासपरिग्रहानुपपत्तेर्नियतपदेन सावनग्रहणं। तथा "मासि मासि पिण्डपितृयज्ञेन चरन्तीति। "नभस्यस्यापरे पक्षे तिथिषोडशकस्य यत्" इत्यादितिथिसम्बन्धेन विहितपितृकार्य्यसिताषितविधिनियम-मन्तरेण सांवत्सरिक प्रति नियमानुपपत्तेः सर्वत्र तिथिभोगे चान्द्र-मासाश्रयणमिति। अत्र पण्डितपरितोषकर्त्तोक्तं आदिशब्देन व्यव-स्थिताः यथा परिगणिता विवाहाद्यो गृहीतव्या इति कुतोऽवगतं अव्यवस्थितग्रहणबाधकप्रमाणाभावात्तथा हि सौरेदेवशयनादिषु विहितस्यान्द्रमासाश्रयणं च द्वादश्यादितिथिविशेषेण शयनादिषु क्रियायां दृश्यते, यदाह गार्ग्यः।

हिराषाढ़ा क्रिया तावद्यावद्विष्णोः प्रबोधनम्।
प्रसुप्ते तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया॥

अथ च "विष्णुः स्वपिति कर्कटे इति हिराषाढेऽपि राशिभोग-पुरस्कारो दृश्यते, न चोपनयनाग्न्याधानादिषु सौरमास इत्यैकान्ति-कगर्भादिसङ्ख्या वर्षाणां "गर्भाष्टमे ब्राह्मणमुपनयीतेति, "षष्ठेऽन्नप्राशनं मासि" "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी" इत्यादियौतिसव-चनैः सावनमासपुरस्काराच्च सावने मासि सिताषितपक्षपरिहरण-मस्ति। सति च तिथिपरिग्रहे चान्द्रमासाश्रयणमपि प्रवर्त्तते वस्तु। किञ्च "यासौ वैशाख्यमावास्या रौहिण्या सम्पद्यते तस्यामादधीतेति चान्द्रे मासाधानविधानाद्यज्ञादौ सावनविधिरनैकान्तिकः।

विवाह-व्रत-यज्ञेषु सौरमानं प्रशस्यत इति ।

यज्ञेष्वपि सौरं मानं दर्शयति ।

अनेन विधिना श्राद्धं त्रिपैचमिह निर्वपेत् ।

कन्या-कुम्भ-वृषस्थेऽर्के कृष्णपक्षेषु सर्वदा ॥

कन्यायोगात्प्रवितरि पितृयज्ञानुशासनात् ।

तावत्पितृपुरी शून्या यावद्वृश्चिकदर्शनमिति ॥

सौरमानेनापि पितृकार्य्योपदेशात् न च सांवत्सरश्राद्धे चान्द्र-मत्यैकान्तिक ।

यस्मिन् राशौ गते सूर्य्ये विपत्तिं यान्ति मानवाः ।

तेषां तत्रैव कर्त्तव्याः पिण्डदानोदकक्रियाः

इति व्यासवचनं हि सौरमानं दर्शयति ।

प्रचेताः पुनराह ।

प्रेतमासस्य यः पक्षस्तत्तिथौ प्रतिवत्सरम् ।

यावत् स्मरति पौत्रोऽपि तेषां तत्रैव दापयेदिति ॥

न च व्रतनियमादिकं सौरे क्रियते इत्यैकान्तिकं, चातुर्मास्य-व्रतानां हरिशयनवशेनारम्भसमाप्त्युपदेशात् आसोपवासस्य चाश्विन-पक्षशुक्लैकादश्यामुपक्रान्तस्य तथाविधैकादश्यन्तमुपवासात् सावन-चान्द्रयोरेकतममपि नियतं, न च देवशयनप्रबोधोत्सवादि चान्द्रमासे विहितमप्यैकान्तिकं, विष्णुः स्वपिति कर्कटे ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम् ।

कन्यायामम्बिका देवीं सिंहे चैव पुरन्दरम् ॥

तस्मिन् सुप्ते यदा विष्णुस्तुलायामपि वृश्चिके ।

इत्यादि बौधायनवचनवशेन हि सौरं प्रतीयते ।

यदपि पठन्ति ।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्म्म तथा षष्ठ्यां होमदिष्टं ह्युपास्ति इति ॥

तदप्यनैकान्तिकं प्रौष्ठपद्यां हस्तेनोपाकरणं श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधीत्यादिगोभिलादिवचनाच्चान्द्रमासावगतेः । यदपि पितामहवचनम् ।

कार्त्तिकस्य तु यत्स्नानं माघे मासि विशेषतः ।
कृच्छ्रादिनियमानाञ्च चान्द्रमानं प्रमाणतः ॥

इति तदनैकान्तिकं "तुला-मकर-मेषेषु प्रातःस्नानं विधीयते" इति पद्मपुराणवचनात् । न च कृच्छ्रादिनियमे चान्द्रमानमनैकान्तिकं तथा हि चान्द्रायणं प्रकृत्य मनुः ।

यथाकथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥

इति वदन् सावनमासं पुरस्करोति । "तिथिवृद्ध्या चरेत्पिण्डा-निति याज्ञवल्क्यश्चान्द्रायणं दर्शयति । तथा

पतितेन तु सम्पर्कं मासं मासार्द्धमेव वा ।
गोमूत्र-यावकाहारो मासार्द्धेन विशुध्यति ॥

इति सावनं मासं दर्शयति । अन्यथा तु कतिपयदिनाधिके मासंसंसर्गनिमित्तप्रायश्चित्तकल्पनामूलमासानुसारेण सौरचान्द्रयो-र्नियतदिवसतया कल्पनानुपपत्तेर्नियतदिनमात्रकमासग्रहोऽप्युच्यते । एवं वर्षमितेऽपि प्रायश्चित्ते सावनमासग्रहणं । तस्मात् सौरो मासो

विवाहादाविति। विवाहशब्देन यथापरिगणितेन विवाहादयो लक्ष्यन्त इत्यन्यथा वर्णनीयं। तथा हि यत्र मेषादिराशिभोगव्यपदेशेन कर्मविधि' तत्र सौरमासाश्रयणेन कर्माण्यनुष्ठेयानि, भाद्रपदादिव्यपदेशेन यदि तान्येव यथा "द्वादश्यां शुक्लपक्षे च मासि भाद्रपदे" इति,

तथा "शक्रमुत्थापयेद्राजेति, तथा "सिंहे शक्रध्वजक्रियेति। तत्र सिंहभाद्रपदयोः सामान्य-विशेषन्यायेनाविरोधादुभयसमावेशः सुकरः। यत्र सामान्येन "दश मासाः प्रशस्तास्ते चैत्र-पौषविवर्जिताः" इति श्रूयते तत्र चैत्रादिशब्दानां सौर-चान्द्रसाधारणत्वात् सन्देहे विवाहे सौरराशिर्गम्यते। तद्राशिवशेन हि शुभाशुभफलं श्रूयते। "सौरो मासो विवाहादाविति वचनात् सौर एव गृह्यते। सौरे च वैशाखे लक्ष्यमाणे यदि तत्र चित्रायुक्तपौर्णमासीसम्बन्धो दृश्यते तदा चैत्रव्यपदेशोऽर्हत्वात् निषेधविषयत्वं सौरस्यागमवलीयस्त्वेन निषेधस्य च पौर्णमासीसम्बन्धेनाप्युपपत्तेः। यदपि चैत्रत्वमयत्नकल्प्यमेव तथा "गर्भादिसंख्या वर्षाणामिति यद्यपि सावनपरिग्रहः तथाप्युपनयनादिषु राशिभोगजन्यशुभाशुभफलानुसारेण लग्नाद्युपपादनवशात् सौरपक्षोऽविरोधादुपपद्यत इत्यभिप्रायोक्तं। "सौरमासो विवाहादाविति न पुनरन्यस्य मासस्य विवाहादौ निराकरणमवगम्यते। तथाच वराहमिहिर। "वृहस्पतौ शोभनगोचरस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः" इति वृहस्पते शुद्धिं वदंश्चान्द्रमासं पुरस्करोति "भवत्सर गुरुस्तिष्ठति" "पतनय शुभिज" इति च सावन-चान्द्रमान सम्भवत्येव नियतदिवसकमासादावनधिकम-

त्वात् सावनवर्षस्य वृहस्पतिराशिगतभोगस्य च नियतदिवसकम-मासवादप्यविच्छिन्नत्वादङ्गारकागुरुंरपि सापेक्षितत्वाच्चन्द्रराशिभोगे-ऽपि चान्द्रमासग्रहणमेव तथा "संस्कृते भृगुसमये कन्या क्रियत इति, "वृहस्पतौ पुरुष इत्यादिवचनं क्वचित्सावनं क्वचिच्चान्द्रमासं पुरस्क-रोति। एवं यज्ञादेरपि सावनमासादेरनियम इति दर्शितं तस्मात् तदृवचनवशेन सर्व्वेष्वेव कर्म्मसु सर्व्वेषामेव चान्द्रादिमासानां सम्भवः किन्तु क्वचित् क्वचित्प्रशस्तं तदुक्तं प्रशस्यते इति। यत्र तु एकस्मिन् विषये चान्द्रप्रशंसा तत्रैव च सौरस्य यथा कार्त्तिकस्नाने, तत्रोदितानुदित-होमनिन्दा-प्रशंसान्यायेन व्यवस्थितशाखाविकल्पवदनुष्ठानं तस्मादा-दिग्रहणेन व्यवस्थिता विवाहादयो ग्राह्या इति वचनमशेषं यथो-क्तमेव साधीय इति। वयन्तु ब्रूमः यस्मिन् क्रियान्तरे वचनान्तरेण सौरादिमासा विनियुक्तास्तत्कार्य्यमादिग्रहणेनोपादीयते। यत्र तु मासविशेषग्रहणे कारणं न विद्यते तत्र चान्द्र एव ग्राह्यः। चैत्र-वैशाखादिपदानां चान्द्र एव मुख्यत्वादिति।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-सकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये संवत्सरायण-मासविशेषाणां कार्य्यविशेषोपयोगनिरूपणं नाम प्रथमोऽध्यायः॥

---

## अथ द्वितीयोऽध्यायः।

### अथ मलमासनिर्णयः।

तत्र मलमासस्वरूपं लघुहारीतेन दर्शितम्।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन।
आद्योमलिम्लुचोज्ञेयो द्वितीयः प्राकृतः स्मृतः इति॥

'इन्द्राग्नी यत्र हूयेते' इति शुक्लप्रतिपदुपलक्षणं, 'अग्नीषोमाविति' कृष्णप्रतिपदः, पितृसोमकाविति दर्शस्य। एतेन चान्द्रमास उपलक्षितः तं मासमतिक्रम्यान्यस्मिन् मासे यदा सूर्यो राश्यन्तरं गच्छेत्तदा पूर्वो मलिम्लुचः उत्तरः प्राकृतः।

तथाच ब्रह्मसिद्धान्ते।

चान्द्रो मासोऽह्यसंक्रान्तो मलमासः प्रकीर्त्तितः।

नन्दिपुराणे।

अमावास्यामहोरात्रे यदा संक्रमते रविः।
स तु मासः पवित्रः स्यादतीते ह्यधिको भवेत्॥

अमावास्यां प्राप्य यदाहनि वा रात्रौ वा रविः संक्रामति तदा स चान्द्रो मासः पवित्रः स्यात्। यदा पुनरमावास्याख्ये अहोरात्रे व्यतीते सति प्रतिपदि सङ्क्रामति तदा चान्द्रोमासोऽधिमासः स्यात्। ज्योतिःशास्त्रे।

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।

मलिम्लुचः स विज्ञेय उत्तरस्तूत्तमाभिधः ।
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ॥
वरुणः सूर्यो भानुस्तपनश्चण्डो रविर्गभस्तिश्च
अर्यमा हिरण्यरेता दिवाकरो मित्र-विष्णू च ।
एते द्वादशनामानः सूर्या माघादिषूदयन्ति मासेषु
निःसूर्योऽधिकमासो मलिम्लुचाख्यस्ततः पापः ॥
मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम् ।
नपुंसकेऽधिके मासि अण्डजं तपते रविः ॥
असंक्रान्तो हि यो मासः कदाचित्तिथिलङ्घितः ।
कालान्तरात् समायाति स नपुंसक उच्यते ॥

स तु कदा भवतीत्यपेक्षायां वसिष्ठसिद्धान्ते उक्तम् ।

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्यधिकमासकः ॥

अतीताधिकमासादारभ्य द्वात्रिंशन्मासादुपरि षोडशदिनेषु घटिकाचतुष्टयाधिकेषु गतेष्वधिकमासो भवतीत्यर्थः ।

यत्तु विष्णुधर्मोत्तरेऽभिहितम् ।

सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावने तु तदा माने दिनषट्कं प्रपूर्यते ॥
ऊनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाद्ये साष्टमासे तस्मान्मासोऽतिरिच्यते ।

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ॥

तथा काठकगृह्ये "माघे त्रिंशत्तमे भवेदिति ।

महाभारते ।

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायते ।

तेषां कालातिरेकेण ग्रहाणामतिचारतः ॥ इति ।

तदेतत्सर्वमसंक्रान्तमासो न सम्भवत्येवं परं । ननु एकस्मिन् वत्सरे संक्रान्तिरहितं मासद्वय ज्योतिःसिद्धान्तेऽभिहितम् । "असंक्रान्तमासोऽधिमासः स्फुटः स्यात् द्विसंक्रान्तिमासः कदाचित् क्षयाख्यः । क्षयः कार्त्तिकादित्रये नान्यतः स्यात् तदा वर्षमध्येऽपि मासद्वयं चेति तत्कथमुच्यते द्वात्रिंशन्मासादर्वागसंक्रान्तमासो न सम्भवतीति, उच्यते यद्यप्येकस्मिन् वत्सरे संक्रान्तिरहित मासद्वयं भवतीति तथापि तयोरेक एव मलमासः द्वात्रिंशन्मासादूर्द्ध्वं सम्पद्यते, अपरः संक्रान्तिरहितोऽपि न मलमासः अकालाधिक्यात्कालाधिक्यस्यैव मलत्वात् । तथाच ब्रह्मपरिशिष्टे ।

मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति ।

तथाच विष्णुधर्मोत्तरे ।

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हित इति ।

अधिमासेनावयवेनाधिक्यलक्षणयाधिक्यप्रतीतेः यथोक्तमिति क-ग-स्थेन मांसवाचककालशब्दलक्षणया मांसस्य तत्र मासस्वद्दत्तस्य एवास्ती

तथाच जाबालिः ।

एकस्मिन्नपि वर्षे च द्वौ मासावधिमासकौ ।

पूर्वो मासः प्रमाणः स्यादपरस्त्वधिमासकः ॥

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः ॥

इत्यादिपूर्वाधिकमासादारभ्य द्वात्रिंशन्मासादूर्द्धं पूर्वं योऽसंक्रान्तः स प्राकृतः शुद्ध इत्यर्थः, यस्ततः परः सोऽधिमासो मलमास इत्यर्थः। तथाच द्वात्रिंशन्मासादूर्द्धं योऽसंक्रान्तोमासः सोऽधिमासः, ततोऽर्वाग्योऽसंक्रान्तोमासः स प्राकृतोनाधिमास इत्यर्थः, न त्वत्र मासपौर्वापर्यं विवक्षितं वक्ष्यमाणवचनविरोधात्। यत्तु तदा वर्षमध्ये अधिमासद्वयं चेत्यभिधानं तदसंक्रान्तत्वादसंक्रान्तोमास "रविणा लङ्घितोमास इत्यादिवचनात् न तु कर्मानर्हत्वादिति। यदा त्वेकस्मिन् वत्सरे आश्विनादिषट्कमध्ये संक्रान्तिशून्य एकोमासः चैत्रादिषट्कमध्ये त्वपरः, तदा द्वात्रिंशन्मासादूर्द्धमपि भवेत् पूर्वोमासोनाधिकोमासः परस्तु भवति।

तथाच ब्रह्मसिद्धान्ते ।

चैत्रादर्वाङ्नाधिमासः परस्तादधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु तस्मिन्मूर्त्तिस्तथोदयौ ॥

तस्मिन्नुत्तरस्मिन्नेव मासे यथोदयौ मूर्त्तिः न तु पूर्वस्मिन्नपि विरोधादिति भावः। "चैत्रादर्वागित्यत्राश्विनादारभ्येति द्रष्टव्यम् । उक्तं हि ज्योतिःसिद्धान्ते ।

घट-कन्यागते सूर्ये वृश्चिके वाथ धन्विनि
मकरे वाथ कुम्भे वा नाधिमासो विधीयते इति ॥

यदि च सामान्यतोऽधिमासमात्रनिषेधपरं वचनद्वयं तदा

मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरव्ययम् ॥

इति ब्रुवोऽति पितामहस्मरणे विरुध्येत बहुबाधश्च स्यात्, तस्मादयो-ऽधिविषयमेवेति । यदा त्वेकस्मिन्नाश्विनादिपक्षे सङ्क्रान्तिरहितमास-द्वयं भवति तदा

प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तर ।

इत्येतदेव द्रष्टव्यं चैत्रादिपक्षे त्वधिकमासद्वयं न भवत्येव तस्य क्षयमासोभयपूर्वापरवर्त्तित्वात् क्षयस्य च कार्त्तिकादित्रयनियतत्व-श्रोतत्वादिति । तथा द्विसङ्क्रान्तोऽपि क्षयाख्योमलमास ।

तथा च काठकगृह्ये ।

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति ॥

अत्र केचिन्मासद्वयापि लक्षणान्तर्गतत्वात्, तत्र, स विज्ञेय इति लक्षणवाक्ये समाप्ते त्रिंशत्तम इत्यभिधानात् पूर्वोदाहृतवचनाच्च । अपि च यत्किञ्चिदपेक्ष्य त्रिंशत्तमत्वमथ क्षयण मलमासापेक्षया वा नाद्य अतिव्याप्तेः, न द्वितीय आत्माश्रयात् ष्ठाष्ठादिमासे व्यापकत्वाच्च तस्य त्रिंशत्तमत्वाभावादमलमासत्वाच्च तदुत्तरं सर्वो न मलमास-स्यादिति लक्षणव्याघातात्व सत्वर, यत्रैकस्मिन् वत्सरेऽसङ्क्रान्त मास-द्वय सङ्क्रान्तिद्वययुतोमासश्च तत्र यावसङ्क्रान्त-द्विसङ्क्रान्तौ तौ संस-र्पांहस्पतिसञ्ज्ञौ अन्यस्त्वधिमास ।

तथा बार्हस्पत्यज्योतिर्ग्रन्थे ।

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव च ।
संसर्पांहस्पती मासावधिमासश्च निन्दित ॥

श्रुतिरपि "संसर्पोऽस्यंहस्पतये त्वेत्याह अस्ति त्रयोदशोमास-

इत्याद्युक्तक्रमेण तत्क्षीणातीति। अत्र ज्योतिःशास्त्रे प्रसिद्धविवाहादि-कर्मसु त्रयोऽपि निन्दिताः तत्राधिकमासौ तु श्रौत-स्मार्त्तकाम्यकर्म-स्वपि निन्दितौ क्षयस्याऽहस्पतित्वेन कालमलरूपत्वादंहसश्च मल-त्वात् अधिकमासस्य कालाधिक्येनाऽपवित्रत्वात् ।

तथा च स्मृत्यन्तरे ।

अमावास्यामहोरात्रे यदा संक्रमते रविः ।
स तु मासः पवित्रः स्यादतीते अधिको भवेत् ॥

अत्र केचिदाहुः विश्वप्रकाशमतदूषणायोपन्यस्येदधिमासस्ताव-च्चैत्रादिसंज्ञां लभते। ननु चैत्रादिमाससंज्ञानां मेषादिसङ्क्रान्ति-निबन्धनत्वादधिमासस्य सङ्क्रान्तिरहितत्वाच्चैत्रोऽधिमासो वैशाखो-ऽधिमास इत्यादिव्यवहारो न स्यात्, तथाहि चैत्रादिरूपजात्या तावच्चैत्रादिशब्दप्रवृत्तावनुगतः कश्चिदुपाधिः स्वीकार्य्यः, यौगिक-त्वेऽपि चित्रायुक्तपौर्णमासीयुक्ते चैत्रपदप्रयोगार्थं उपाध्याश्रयणं तुल्यं। न च मेषादिसंक्रान्तियोगातिरिक्त उपाधिर्दृश्यते, न च फा-ल्गुनोत्तरत्वं उपाधिः, वैशाखपूर्वत्वस्यापि प्रसङ्गादविशेषात् द्वयोपा-धिकत्ववैयर्थ्यात् विकल्पेनोपाधित्वे अनेकार्थत्वापातात् फाल्गुना-नन्तरमधिमासे च तदुत्तरस्य चैत्रत्वं स्यात्। किञ्च चैत्रवत् फाल्गु-नस्य माघोत्तरत्वं तस्य पुष्योत्तरत्वमिति क्रमेण चैत्रोत्तरत्वं वैशा-खस्येति चक्रकदोषः अतो मेषादिसंक्रान्तियोग एवोपाधिः। किञ्च वेदे मधुश्चेति द्वादशमासाः संवत्सर इति द्वादश संज्ञा अनुक्रम्य संसर्पोऽहीति संज्ञान्तरत्वमर्थान्तरवियुक्तं त्रयोदशमासाः संवत्सर इति संज्ञा पृथक्के युक्ता तेन चैत्राद्याधिक्यस्य तत्संज्ञ इति, उच्यते

यदि ह्यधिकमासः ऋतुद्वात् पृथग्भूतः स्यात् स्यादेवं, न त्वेवमस्ति, किन्त्वसौ ऋतुद्वान्तर्भूत एव ।

तदुक्तं ।

"षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैरिति ।

"एवं षष्टिदिनोमासमृत्वर्द्धं च मलिम्लुच इति च । न च वाच्यं अत्र मासशब्द' एकशेषवृत्तिः यत् द्विवचनाभावेऽपि मासद्वितायगतैरेकवचनमेव संक्रान्तियोगोपाधिः तेनाधिमासो न चैत्रादिरिति, सकललोकसिद्धचैत्रादिव्यवहारस्याभावप्रसङ्गात् संसर्पशब्दस्यैकदेशवचनस्यार्थान्तरविषयत्वमस्य तत्पक्षेऽपि विद्यत एव । श्रुतिश्च त्रिंशद्दिनात्मकविवक्षयेति । अतो यदा यदा यदन्तर्भूतोऽसौ तदा तत्संज्ञया व्यपदिश्यत इति न दोषः । नन्वेवमधिमासस्य ऋतुमासद्वयमध्यपातित्वात् किमसौ पूर्वस्योत्तरार्द्धं किं वोत्तरस्य पूर्वार्द्धमिति निर्द्धारणकारणाभावात् संज्ञानिर्द्धारो दुर्घट', उच्यते अधिमासस्योत्तरमासपूर्वार्द्धत्वादुत्तरमाससंज्ञा ।

तदुक्तम् ।

आद्यो मलिम्लुचोज्ञेयो द्वितीयः प्राकृतः स्मृतः ।

षष्टिदिनात्मकमासस्य 'आद्य' पूर्वभागः, 'मलिम्लुच.' अशुद्धः कर्मानर्होऽज्ञेय, 'द्वितीय.' उत्तरोभागः, 'प्राकृतः' शुद्ध इत्यर्थः ।

ज्योतिःशास्त्रे पितामहोऽपि ।

षष्ट्या तु दिवसैर्मास. कथितो बादरायणैः ।
पूर्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥

एवं संव्याधिमासस्योत्तरमासपूर्वार्द्धत्वे प्राप्ते कश्चिदपवादमाह ।

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुच ॥

एकस्मिन् वर्षे यदा द्वौ मासावसंक्रान्तौ भवतस्तदा वैपरीत्यं, षष्टिदिनात्मकस्य मासस्य पूर्वोभागः 'प्राकृतः' शुद्धः, उत्तरोभागो मलिम्लुच इत्यर्थः । एकाब्दमध्यवर्त्तिनौ द्वावधिमासौ पूर्वमासोत्तरार्द्धत्वात् पूर्वमाससंज्ञावित्यभिप्रायः । युक्तं चैतत् अधिमासस्य पूर्वभागः प्राकृतः उत्तरोभागो मलिम्लुचः तस्य शुद्धिमादृत्वेव पूर्वनिष्ठत्वनियमात् । अन्यथा तिथिवृद्धेरप्युत्तरतिथिसंज्ञत्वापत्तेः एकाधिमासस्य तु "इन्द्राग्नी यत्र हूयेते" इत्यादिव्यासपादीयवचनेनोत्तरमाससंज्ञत्वमभिहितं । अतएवोक्तं ।

एकत्र मासद्वितयं यदि स्यात्
वर्षेऽधिकं तत्र परोऽधिमासः ।

नन्वेकस्मिन् संवत्सरे चतुर्दश मासाः श्रूयन्त आह,
त्रयोदशं तु श्रुतिराह मासं चतुर्दशः क्वापि न चैव दृष्टः ।

एकस्मिन्वर्षेऽधिमासद्वयेऽपि मासाक्रमयोर्द्वयोरेव "यद्वर्षमध्येऽधिक-मासयुग्मं तत्कार्त्तिकादित्रितये त्वनाद्य इति वचनादित्यभिप्रायः । केचित् "मासद्वयेऽब्दमध्ये" इत्यादिवचनानामेव व्याख्यानं कृतं यदेकस्मिन्वर्षे द्वौ मासावसंक्रान्तौ भवतस्तत्र तयोरसंक्रान्तयोर्मध्ये यः पूर्वोऽसंक्रान्तः स प्राकृतः शुद्धः कर्मार्हः, उत्तरस्त्वसंक्रान्तो मलिम्लुचः कर्मानर्हः, दुर्गन्धस्वरूपतोत्पत्ते न च वक्तिय:, "पूर्ववन्मलिपिद्धानि परतो न च दैविकम्" इति, तदुक्त "एकत्र मासद्वितयमित्या-दिनेति तदयुक्तं अनेकवचनविरोधात् । तथा हि,

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयः सर्वधर्मबहिष्कृतः ॥
सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
भानुना लङ्घितो मासो वर्ज्यः सर्वकर्मसु ॥
यस्मिन्वर्षे द्विसंक्रान्तोऽधिकमासद्वयं तदा ।
तद्धि मासत्रयं दुष्टं सर्वेषु शुभकर्मसु ॥
मध्यपातस्थितौ मासावधिमासस्य निन्दिता ।

यद्वर्षमध्येऽधिकमासयुग्मं
तत्कार्त्तिकादित्रितये यथाख्ये ।
मासत्रयं त्याज्यमिदं प्रयत्नाद्-
विवाह-यज्ञोत्सवमङ्गलेषु ॥

असंक्रान्तमुदिते सूर्ये भरताष्टमी भवेत् ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥

इति निर्णयामृतवचनमित्यादि । तस्मात् पूर्वा व्याख्या न्याय्या ।

यत्तु वचनम् ।

पौषाद्याद्धाधिमासे परतस्त्वधिको भवेत् ।
दृष्टा हि सर्वशास्त्रेषु सविस्मूर्त्तिस्त्रयोदशी ॥

यदपि ।

घटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि ।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते ॥

इति सद्भवसप्तर्षिमतादीनां फाल्गुनान्तानां पूर्वभागानामधि-
मासा न भवन्तीत्येवंपरं, न तु सर्वथैवाधिमासा न भवन्तीत्येवंपरं

“दर्शानां फाल्गुनादीनां प्रायोभावस्तु कचित् नपुंसकत्व भवतीति वचनविरोधादिति तदयुक्तं विश्वप्रकाशमतं दूषयति व्याख्यानानार्जवत्वात् पूर्वोत्तरशब्दाभ्यामुपान्तभागपरित्यागेनानुपान्तभागग्रहणस्यायुक्तत्वात् । यत्तूक्तं “चैत्रादर्वागधिमास इति “घटकन्यागते सूर्ये इति वचनद्वयमाश्विनादीनां फाल्गुनान्तानां पूर्वभागा अधिमासा न भवन्तीत्येवपरमिति तन्न। वचनाध्याहारादिप्रसङ्गात् “दर्शानां फाल्गुनादीनामिति वचनविरोधस्यास्मत्पक्षेऽप्यभावाच्च स्वरूपतोऽधिमास निषेधस्यानङ्गीकारात्। यच्चास्मत्पक्षे दूषणमभिहितं तदयुक्तं असंक्रान्त मासनिषेधस्य सामान्यशास्त्रस्य विशेषशास्त्रेण बाधस्य युक्तत्वादस्य दोषस्य भवत्पक्षेऽपि समानत्वात् सामान्यशास्त्रस्योत्तरमासपूर्वार्द्धस्यापवादाङ्गीकारान्मासचयस्य दुष्टत्वप्रतिपादकवचनस्य ज्योतिःशास्त्रप्रसिद्धविवाहादिशुभकर्मविषयत्वात्, तथाच तत्रैवोक्तं “विवाहव्रतोत्सवमङ्गलेष्वित्यादि, तस्मात्पूर्वैव व्याख्या न्याय्या ।

संक्रान्तिद्वयसंयुक्तः स मासोऽहस्पति स्मृत ।
चैत्रादिपञ्चमासेषु न कदाचिद्भवेदयम् ॥
ऊर्जादिपञ्चमासेषु कदाचन भवेद्यदा ।
तदा द्वावधिकौ स्यातां तस्मिन्वर्षादिपञ्चके ॥

इति मलमासस्वरूपनिर्णयः ।

## अथ मलमासे कार्य्याकार्य्यनिर्णयः।

तत्र शातातपः।

वत्सरान्तर्गतः पापोयज्ञानां फलनाशकृत्।
नैर्ऋत्य-यातुधानाद्यैः समाक्रान्तोऽधिमासकः॥
मलिम्लुचेः समाक्रान्ति सूर्य्यसंक्रान्तिवर्जिताम्।
मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु॥

सत्यव्रतः।

मलिम्लुचस्तु यो मासः स मासः पापसंज्ञकः।
वर्जितः पितृदेवानां सर्वकर्मसु तं त्यजेत्॥

पैठीनसिः।

श्रौत-स्मार्त्तक्रियाः सर्वा द्वादशे परिकीर्त्तिताः।
त्रयोदशे तु सर्वास्ता निष्फला इति संज्ञिताः॥
तस्मात् त्रयोदशे मासि कुर्य्यात्ता न कथञ्चन।
कुर्वन्नर्थमेवाप्नु कुर्य्यादात्मविनाशनम्॥

भृगुः।

एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत्।
हव्य-कव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः॥ इति
भविष्योत्तरेऽपि।
असंक्रान्तं तथा मासं देवे पित्र्ये च कर्मणि।
मलीमसमघौघं तु वर्जयेन्नतिमाचरः॥

सुमन्तुः।

'कर्म्माकर्म्मेतिशब्देन काम्यकर्म्मोच्यते, तद्धि फलकामैः क्रियमाणत्वात्कर्म, अफलकामैरक्रियमाणत्वादकर्म, कर्म च तदकर्म चेति कर्मधारयः । तथैवाह प्रजापतिः ।

न कुर्य्यादधिके मासि काम्यकर्म कदाचन ।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितं ॥

अत्र केचिदाहुः काम्यस्य कर्मणोऽधिमासे प्रारम्भसमाप्ती निषिध्येते। आरब्धे तु काम्ये कर्मणि समाप्तिकालादर्वाक् मध्यपतितेऽधिमासेऽपि काम्यं कर्म कार्य्यं। तथा चातुर्मास्यव्रतानामाषाढेऽधिमासे नारम्भः कार्त्तिके चाधिमासे न समाप्तिः । अन्तरापतिते त्वधिमासेऽप्यनुष्ठानं। अतएवान्तराधिमासपातेऽपि संक्रान्तियुक्ताषाढशुक्लैकादश्यां चातुर्मास्यव्रतानामारम्भोऽभिहितः संक्रान्तियुक्तकार्त्तिकशुक्लैकादश्यां समाप्तिरुक्ता । यथोक्तम् ।

एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य च ।
आषाढादौ नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥
ततो विबुध्यते देवः शङ्ख-चक्र-गदाधरः ।
कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहितः ॥
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विज ।
अधिमासे च पतिते एष एव विधिक्रमः ॥
अधिमासनिपातेऽपि क्रमादिन्द्राम्बिका-हरीन् ।
कन्या-तुला-वृश्चिकेषु नृप उत्थापयेद् भुवम् ॥

न चैवं सति मासपञ्चकव्रतानुष्ठानप्राप्तौ चातुर्मास्यव्रतमिति समाख्याविरोधः

वार्षिकांश्चतुरो मासान् मद्यं मांसं परित्यजेत् ।
स्वर्णदो परिशुद्धिश्च स भवेद्वेदविद्द्विजः ॥
यः पिबेत् कृच्छ्रपादेन आषाढादिचतुष्टयम् ।
विष्णुपूजनतत्पर्यः स सर्वेत्तमिवेतनः ॥

मेषादिपादे स्वपितीह विष्णु-
र्वृषाख्यमध्ये परिवर्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥

इत्यादिवचनविरोधश्चेति वाच्यं ।

पक्षा तु द्विमैर्मासः कपिलोवाद्रायणैः ।

इति वचनान्मासचतुष्टयोपपत्तेः ।

मध्यसिद्धान्ते ।

प्रारब्धं कर्म यत्किञ्चित्र तु कार्यं मलिम्लुचे ।
असूर्या नाम ये मासा न तेषु मम सम्मताः ।
मतामाद्यैव यज्ञानामारब्धानां समाप्तयः ॥

इत्यारब्ध-समाप्त्यादेरेवाधिमासे प्रतिषिद्धत्वात् चकारात् सर्वं-काम्यकर्मग्रहणमिति तदयुक्तम् ।

प्रत्यक्षं मलमासानामाद्यत्काम्यमसभाषितं ।
आगते मलमासेऽपि तत्समाप्यमसंशयम् ॥

इति काठकगृह्यपरिशिष्टवचनेन काम्यकर्मप्रारम्भेऽपि मल-मासेऽपि विधानात्तावदेव विषयव्यवस्था, "असूर्या नाम ये मासा इति वचनेन आरम्भन-यज्ञानां आरम्भ-समाप्त्योः प्रतिषिध्यते न तु

नित्यव्रत-यज्ञाना, "नित्य-नैमित्तिके कुर्यात् प्रयत मलमलिम्लुचे" इत्यादिवक्ष्यमाणनित्य नैमित्तिकविधायकवचनमहोषप्रसङ्गात् । तस्मादस्यैवैतस्य काम्यव्रत-यज्ञविषयतयासङ्कोचो युक्त' । ननु किमत्र मलमासात् प्रागारब्धस्य समाप्ति प्रतिषिध्यते, उतापि वारम्भ, न प्रथम "प्रवृत्त मलमासात् प्रागिति वचनविरोधात्, न द्वितीय आरम्भनिषेधादेव च समाप्तेरप्रसक्तेर्निषेधायोगादिति । उच्यते । मलमासमप्रारभ्यैव समाप्तिरत्र निषिध्यते यो ह्यज्ञानान्मलमासेऽपि काम्य कर्म प्रारभते तेन तत्र समाप्तो कृतायां दोषाधिक्य स्यादित्येतदर्थमिद वाक्यमिति न दोष' ।

बृहस्पति-दक्षस्मृति-पैठीनसि-ज्योति-पराशरा ।
अग्न्याधेय प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च ।
वेदव्रत-वृषोत्सर्ग-चूडाकरण-मेखला ।
माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥

क्वचिद्यज्ञ-दान-व्रतयज्ञानिति पाठ ।

ब्रह्मवाद ।

चन्द्र-सूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देय स्याद्दत्तमक्षयकारकमिति ॥
बाले वा यदि वा वृद्धे शुक्रे वास्तमुपागते ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥ इति

"अग्न्याधेय प्रतिष्ठाचेत्यावश्यकत्वे सतीति शेषोऽध्याहृत्य तेन मलमासेऽपि प्रायश्चित्तभूतमग्न्याधेयमभ्यनुज्ञायनन्तर कर्त्तव्य न प्रतिषिध्यते, एव प्रतिमादिसंस्कारनाशे पुन प्रतिष्ठा न प्रतिषिध्यते

यज्ञाः काम्या नित्या अपि वसन्तादिसम्बन्धेन विधीयमाना उत्तरे मलंकान्तेऽपि क्रियमाणा वे स्वकाले एव कृता भवन्ति, 'दानानि' महादानानि। केचिदव्रतानामपि महतामेव प्रतिषेधमाहुः वृषोत्सर्गस्य च नैकादशाहिकस्य च प्रतिषेधः षोडशश्राद्धादिवत्तस्यापि प्रेतोपकारित्वात्कुलाभावादावपि अनावश्यकत्वे सति अग्न्याधेयादि प्रतिषिध्यते "मलमास इवेत्यभिधानात्। 'देवदर्शनं' प्रसिद्धस्वयम्भूदेवतादर्शनं ।

तत्रापि प्रथमं विवक्षितं, "अनादिदेवता दृष्टा न शुभं नष्ट-भार्गवे" इति स्कन्दपुराणवचनात् मलिम्लुचेऽप्यनादृष्टतीर्थयात्रां विवर्जयेत् ।

अत्र केचिदाहुः । मल इवेति विद्वद्दृष्टान्तीकरणान्यथानुपपत्त्या मलमासे प्रथमदेवतादर्शननिषेधः सिद्धः। अपरे तु "मलमास इवे"त्यग्न्याधेयादिष्वेव योजयन्ति। यथा मलमासे चन्द्र-सूर्यग्रहादिकालव्यतिरेकेणैतेषां विधेयत्वमेव बाल्यादिष्वपि यथा स्यादिति, तस्मिन् पक्षे मलमासे देवतादर्शनस्य न प्रतिषेधः ।

वापी-कूप-तडागादिप्रतिष्ठां यज्ञकर्म च ।
न कुर्यान्मलमासे तु महादान-व्रतानि च ॥

महादानानि मत्स्यपुराणे दर्शितानि ।

मनुरुवाच ।

महादानानि यानीह पवित्राणि शुभानि च ।
रहस्यानि प्रदेयानि तानि मे कथयाच्युत ॥

मत्स्य उवाच ।

नोक्तानि यानि गुह्यानि महादानानि षोड़श ।
तानि ते सम्प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥
आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वत् हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोड़श परिकीर्त्तितः ॥
कूर्म्मपुराणे त्वन्यान्यपि दश महादानानि दर्शितानि ।
कनकाश्व तिला नागा दासी रथ मही-गृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥
काठकगृह्ये ।
चूड़ा मौञ्जीनिबन्धञ्च अग्न्याधेयं महालयं ।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते॥
कौथुमिः ।
अधिमासे न कर्त्तव्यं श्राद्धं सांवत्सरादिकम् ।
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिके न तु॥
हारीतः ।
अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।

तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ॥
सपिण्डीकरणादूर्द्धं यत्किञ्चित् श्राद्धिकं भवेत् ।
इष्टं वाप्यथ वा पूर्त्तं तन्न कुर्य्यात् मलिम्लुचे ॥

आभ्युदयिकं श्राद्धं आद्यवत्सरान्तर्गतजातकर्मादिनिमित्तव्यतिरिक्तं। अन्ये त्वेवं व्याचक्षते 'वत्सरात्प्रथमादृत' इति प्रथमं वत्सरं विहाय आभ्युदयिकं श्राद्धं मलमासे न कर्त्तव्यं प्रथमे तु संवत्सरे मलमासे प्राप्ते सपिण्डीकरणं विहितं तदुत्तरदिने यदाभ्युदयिकं विहितं तन्मलमासेऽपि कर्त्तव्यं। यथोक्तं।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च।
सपिण्डकक्रियां कृत्वा कुर्य्यादाभ्युदयं ततः ॥

इत्यत्र वचने आभ्युदयशब्देन आभ्युदयिकं श्राद्धं विभागप्रकरणे विश्वरूपाचार्य्येण व्याख्यातं। अन्ये तु उत्तरशेषत्वेनैवं व्याचक्षते सपिण्डीकरणादूर्द्धं यत्प्रथमे संवत्सरे प्रतिमासं पुनः क्रियमाणं चैयुदयिकं मासिकं श्राद्धं तन्मलिम्लुचेऽधिमासे कार्य्यमिति अतः 'वत्सरात्प्रथमादृत' इत्युक्तं एतच्चोपरिष्टाद्वक्ष्यते। असंक्रान्तं प्रकृत्य ज्योतिःशास्त्रे।

तत्र दन्तमदन्तं स्याद्धुतं चाकृतमेव च।
सुप्रजाप्रजस्व स्वाद्योपवासः क्रमोभवेत् ॥
न यात्रां न विवाहञ्च न च वास्तुनिवेशनम् ।
न प्रतिष्ठाञ्च देवानां प्रासाद्-ग्राम-भूरुहाम् ।
न हिरण्यं सुवासांसि कारयेदिति निश्चयः ॥

पराशरः ।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।

तत्र यदिष्टितं कर्म उत्तरे मासि कारयेत् ॥

प्रजापतिः ।

उपाकर्म च हव्यञ्च कव्य पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यात् पूर्वे तन्निष्फलं भवेत् ॥

पराशरः ।

यद्यदर्योऽकेसंक्रान्तिर्यदा न स्यात् सितासिते ।
तदा तन्मासिकं कार्य्यमुत्तरे मासि कारयेत् ॥
एवं षष्टिदिनो मासस्तद्वर्धश्च मलिम्लुचः ।
त्यक्त्वा तदुत्तरे कार्य्या पितृदेवादिका क्रिया ॥

सत्यव्रतः ।

मासि चवत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरोत्तमा ज्ञेया पूर्वा तु स्यान्मलिम्लुचः ॥

तथाधिमासे चक्रस्य तदाह शातातपः ।

एकमासौ यदा मासौ स्याता संवत्सरे क्वचित् ।
तयोर्हि पितृकार्य्याणि देवकार्य्याणि चोत्तरे ॥

अङ्गिराः ।

द्वौ मासावेकनामानावेकस्मिन् वत्सरे यदि ।
पूर्वस्मिन् पितृकार्य्याणि देवकार्य्याणि चोत्तरे ॥

ज्योतिःशास्त्रे ।

षष्टिभिर्दिवसैर्मासः कथितो वादरायणे ।
देवकार्य्याणि पूर्वस्मिन् पितृकार्य्याणि चोभयोः ॥

एवमादीनि मलमासे देवकार्य्यं पितृकार्य्यप्रतिपादकानि वच-

नान्यावश्यकदेवकार्य्य-पितृकार्य्यविषयाणि द्रष्टव्यानि ।

बृहस्पतिः ।

नित्य-नैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे ।
तीर्थश्राद्धं गजच्छाया प्रेतश्राद्धं तथैव च ॥

नित्यमावश्यकं यन्मासविशेषणमनिरपेक्षमेव विहितं यस्याकरणे कालात्ययनिमित्तं प्रायश्चित्तमाम्नायते तद्यथा "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् योदर्श-पूर्णमासयाजी स अमावास्यां वा पौर्णमासीं निर्वपेदिति। तथाभूतस्य नित्यस्यैवेदं न तु नित्यमात्रस्य। तेन दर्श-पूर्णमासाग्निहोत्र-पञ्चमहायज्ञादेरनुष्ठानं मलिम्लुचे कार्य्यं स्वकालातिक्रमे प्रायश्चित्ताम्नानात्। एवं च नित्याऽपि सोमयागक्रिया मलिम्लुचे मासि न कार्य्या मलिम्लुचमासातिक्रमेऽपि वसन्तादिकालस्य सोमयागाङ्गभूतस्यानतिक्रान्तत्वेनाच प्रायश्चित्तप्राप्तेरसम्भवात्। एवं यस्य नैमित्तिकस्य ग्रहदाहेष्ट्यादेर्निमित्तानन्तरकाले कर्त्तव्यस्य न मासान्तरे विहितकाललाभः तथाभूतावश्यक्रियाविषयम्, एवं "मलिम्लुचे मासि कुर्य्यादिति विधानं जातेष्ट्यादेर्नैमित्तिकस्यापि शिशुरक्षणार्थं निमित्तानन्तरकालमपहाय कालान्तरे कर्त्तव्यस्य यथा दशरात्रादिसूतककालस्य मध्येऽनुष्ठानमन्याय्यं तथा मलिम्लुचकालमध्येऽपि सति च मलिम्लुचेऽनुष्ठानं, एवञ्च नित्यस्य नैमित्तिकस्य चाविवक्षितं यस्यातिक्रमे प्रायश्चित्ताम्नानं यस्य च मासान्तरे विहितकाललाभेनावश्यकं मलिम्लुचेऽनुष्ठानं तत्सर्वं मलिम्लुचे कुर्य्यादिति बार्हस्पत्यवचनतात्पर्य्यार्थं प्रेतव्य. ।

तथा च स्मृत्यन्तरे ।

अनन्यगति यन्नित्यं कुर्य्यान्नैमित्तिकं तथेति।

यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्याननुज्ञातत्वादत्यन्तलोपे प्रायश्चित्तं प्रसज्यते तत्कर्मानन्यगतित्वान्मलमासेऽपि कार्य्यं।

गृह्यपरिशिष्टमपि।

मल वदन्ति कालस्य मासकालविदोऽधिकं।
गेहेताच विशेषेज्यामन्यत्रावश्यकादिधेः॥

आवश्यकाद्दर्शपूर्णमासादिविधेरन्यत्र विशेषेज्य मलमासे 'नेहेत' नाचरेत्, यस्मात् शुद्धे मासि क्रियमाणाया नास्ति विधिलोपः सा विधिविशेषेज्या यथा "वसन्ते वसन्ते ज्योतिषा यजेतेति, वसन्ते विहितस्य ज्योतिष्टोमस्य मलमासवैशाखपरित्यागेन शुद्धवैशाखे क्रियमाणस्य वसन्त एव कृतत्वान्नास्ति विधिलोपः अनेनावश्यको विधिरधिकमासेऽनुष्ठेय इत्यर्थादुक्तं।

उक्तञ्च याज्ञादपि तत्रैव।

अवपद्धारहोमाश्च पर्व चाग्रयणं तथा।
मलमासे तु कर्त्तव्यं काम्या इष्टीर्विवर्जयेत्॥

'अवपद्धारहोमाः' अग्निहोत्रोपासनवैश्वदेवादयः, 'पर्व' दर्शपौर्णमासौ पार्व्वणस्थालीपाकश्च, 'आग्रयणं आग्रयणेष्टिः', यद्यप्याग्रयणं वर्षासु श्यामाकैर्यजेतेति सावद्यात्मकवर्षाख्यकालविहितं मलिम्लुचमासेऽपि स्वकालसम्भवादनन्यगतिकं न भवति तथापि दुर्भिक्षेण श्यामाकव्यतिरिक्तधान्यासम्भवे जीवनार्थं श्यामाकान्नभोजनमत्यावश्यकमिति युक्तमुक्त-

ऽपि प्रवृत्तेः "अर्द्धरात्रादधश्चोर्द्ध्वं कलया वा यदा भवेत् । जयन्ती नाम सा प्रोक्तेत्युदाहृतवचनात् ।

यत्तु जयन्तीं प्रकृत्योक्तं "मुहूर्त्तमपि लभ्येतेति, तदर्द्धरात्रयोगेऽप्युपपद्यते जयन्तीशब्दस्य चान्यकालरोहिणीयुक्ताष्टमीवचनत्वे प्रमाणाभावात् प्रागुदाहृतसकलवाक्यपर्य्यालोचनया रोहिणीसहितकृष्णाष्टमीवचनत्वमतीते । यद्वा जनार्दन-जन्मोपलक्षित-रात्रिविशेषवचनो जयन्तीशब्दः ।

अभिजिन्नाम नक्षत्रं जयन्तीनाम शर्वरी ।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः ॥

इति ब्रह्माण्डपुराणवचनात् । यदा तु न रोहिण्यष्टमीयुक्ता तदा ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ॥

इत्यादिवचनेभ्य पूर्वविद्धैव ग्राह्या । अत्र केचित् सूक्ष्मानयनेन वक्तव्याः, तास्र स्थूलानयनेन विद्धतिथिकोत्तरार्द्धमध्यवर्त्तिन्यस्तदाभिप्रेताः । न च तासां रोहिणीत्वं मुख्यं सम्भवति, न ह्यन्यदन्यद्भवति, विरोधात् । यथा दिनार्द्धं दिनमेव न रात्रिस्तस्मात् छत्रिकार्द्धस्य सूक्ष्मानयनात् यद्रोहिणीत्वं तद्गौणरोहिणीफलसम्बन्धेन रौहिणीतुल्यत्वाद्देवदत्तस्य सिंहत्वमिव । एवञ्च सति मुख्यया सम्भवन्त्या रोहिण्या रोहिणीसहितत्वमष्टम्या ग्राह्यं मुख्यसम्भवे गौणाश्रयणस्यान्याय्यत्वात् । किञ्च प्रथमप्रतीतत्वेन स्थूलमार्गसिद्धस्य तिथिनक्षत्रादेर्ग्रहणं युक्तं । ज्योतिःशास्त्रमपि सूक्ष्मानयनेन मुख्यकालमेवानयति न मुख्यस्वरूपत्वम् ।

यदाह। स्थूलं कृतं भाक्तयनं यदेत-
ज्ज्योतिर्विदां संव्यवहारहेतोः।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतम्
विवाह-यात्रादि फलप्रसिद्धौ इति ॥

किञ्च सूक्ष्मादन्येन प्रकारेणादृष्टार्थेषु विधि-निषेधेषु नक्षत्रादीनां ग्रहणे व्यवस्था स्यात् वार-नक्षत्रादिविशेषविहितस्य प्रतिषिद्धस्य सूक्ष्मानयनसिद्धेः, तदंशेषु प्रसङ्गात् अविगीतशिष्टाचारविरुद्धश्चैतत्। तस्मात् सूक्ष्मानयनमेवाश्रयणीयम् ॥

इति जन्माष्टमीनिर्णयः।

---

## अथ जयन्तीपारणकालनिर्णयः।

तच्च तिथिभान्ते च कर्त्तव्यं प्रागुदाहृतवचनात्। यदा तु पारण-दिने अर्द्धरात्रादुपरि भान्तस्थियन्तौ वा भवति तदार्द्धरात्रे पारणं कार्य्यम्।

तिथ्यर्क्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा।
अर्द्धरात्रेऽथ वा कुर्य्यात् पारणं त्वपरेऽहनि ॥

इति वचनात्।

अत्र केचिदाहुः।

"नक्षत्रान्तमथापि वेति यच्चो जयन्ती-श्रवणद्वादशीव्यतिरेकेण।

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः।
ऋक्षान्ते पारणं कुर्य्याद्विना श्रवण-रोहिणीम् ॥

इति वचनात्।

ब्रह्मवैवर्त्तेऽपि ।

अष्टम्यामथ रोहिण्यां न कुर्य्यात् पारणं क्वचित् ।
हन्यात् पुरा कृतं कर्म्म उपवासार्ज्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कार्य्यं तिथि-भान्ते च पारणमिति ॥

तद्युक्तं केवलतिथ्यन्ते भान्ते वा जयन्तीव्रतप्रकरण एव वह्निपुराणे पारणविधानात् ।

भान्ते कुर्य्यात्तिथेर्वापि शस्तं भारत पारणमिति ।

तथा ।

रोहिणीसहिता चेयं विद्वद्भिः समुपोषिता ।
वियोगे पारणं कुर्य्युर्मुनयो ब्रह्मवादिनः ॥
सांयोगिके व्रते प्राप्ते यत्रैकापि वियुज्यते ।
तत्र पारणकं कुर्य्यादेवं वेदविदो विदुः ॥

तस्मात् केवलतिथ्यन्ते भान्ते च पारणविधानमसमर्थविषयं इतरत्तु समर्थविषयमिति ध्येयम् ।

इति जयन्तीपारणकालनिर्णयः ।

---

## अथ प्रसङ्गाज्जयन्तीव्रतनित्यत्वनिर्णयः ।

प्राजापत्यर्क्षसंयुक्ता श्रावणस्यासिताष्टमी ।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः ॥

इत्येतद्वचनात् "वसन्ते वसन्ते ज्योतिषा यजेतेतिवत् वीप्सायुक्तत्वात् नित्यत्वमवगम्यते, तेन ज्योतिष्टोमादिवदेकस्य द्वयमपि संयोग-

पृथक्त्वमितिन्यायेन नित्यत्वमपि स्वीक्रियते। यच्चोक्तं कैश्चित् नैतत्तेन तुल्यं। तत्र हि वाक्यान्तरेण फले विहिते ज्योतिष्टोमादिफलरहितमेव वीप्सया युक्तं वसन्तकाले विधीयते, तेन तस्य वाक्यस्य नित्यत्वावबोध एव फलं। इदन्तु "तुष्ट्यर्थं चक्रपाणिनः" इति तुष्टिसञ्ज्ञे फल एव व्रतं विधत्ते, तेन काम्यस्य सतो न शक्नोति नित्यतां बोधयितुं उभयपरत्वे वाक्यभेदप्रसङ्गात्। तस्मात् "वर्षे वर्षे" इति वीप्सा फलभूयस्त्वार्था न नित्यत्वार्था, अन्यथार्थसङ्गत्यभावात् प्राजापत्यर्क्षसंयुक्ताष्टमी वर्षे वर्षे यतो न सम्भवतीति, तदयुक्तं वीप्साश्रुतेरानर्थक्यप्रसङ्गात्। न च फलभूयस्त्वार्था चेति वाच्यं। फले सद्विधाने तद्भूयस्त्वे च तद्द्वयविधानमिति भवन्मतेऽपि वाक्यभेदप्रसङ्गात्। अत्र फले व्रतविधिरेव न समाप्तौ, फलभूयस्त्वसिद्धेन तत्परता वीप्साश्रुतेरिति मन्यसे। तथा सत्यानर्थक्यं दुष्परिहरं फलभूयस्त्वार्थत्वे च प्रतिवर्षमवश्यकर्त्तव्यतारूपस्य मुख्यार्थस्य हानिप्रसङ्गात्। न च तद्धानौ कारणमस्ति, यतोऽस्य वाक्यस्यायमर्थः, यच्छ्रावणस्यासिताष्टम्यां प्राजापत्यर्क्षसंयुक्तायां चक्रपाणितुष्ट्यर्थं व्रतं वाक्यान्तरेण विहितं तद्वर्षे वर्षे कर्त्तव्यमिति। न च मुख्यार्थपरित्यागेनाष्टमीप्रशंसेन लक्षणया व्रताभिधानमयुक्तमिति वाच्यं। अनुवादस्य प्राप्त्यनुरूपत्वात् भवतोऽपि समानत्वाच्च फले व्रतविधानाङ्गीकारात्। इयांस्तु विशेषः तव विधौ लक्षणा ममानुवादे, उक्तञ्च भाष्यकारेण "विधौ हि न परः शब्दार्थः प्रतीयत इति। अतोऽन्यथार्थसङ्गत्यभावादित्याद्युक्तं तत्परिहृतं नित्यस्यापि तुष्टिफलत्वोपपत्तेश्च।

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।

विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥

इति विष्णुपुराणवचनात् । किञ्च किमुपात्तदुरितक्षयफलं नित्यश्रुता-करणनिमित्तप्रत्यवायपरिहारार्थं, तत्राद्ये पक्षे नित्यत्वमप्यास्थविरुद्धम् ।

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

इति वचनात् । द्वितीये पक्षेऽपि नित्यत्वमविरुद्धं ।

तुष्ट्यर्थं देवकीसुनोर्जयन्तीसम्भवं व्रतं ।

कर्त्तव्यं वित्तमानेन भक्त्या भक्तजनैरपि ।

अकुर्वन् याति निरयं यावदिन्द्राश्चतुर्दश ॥

इत्यकरणे महादोषश्रवणात् ।

यत्तत्रोक्तं कैश्चित् नैतन्नित्यत्वमवबोधयितुमलं अन्यथैवोपपत्तेः. तथाहि ।

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।

तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥

इत्यादि । अनेन त्रिजन्मसञ्चितपापक्षयफलत्वमुक्तं प्रायश्चित्तवत् प्रतस्य तदाकरणे पापक्षयाभावे तस्मादेव त्रिजन्मसञ्चितात्पापान्नरकं यातीत्यर्थः ।

यथा याज्ञवल्क्यवाक्ये ।

प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।

अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥

इत्यत्र प्रायश्चित्ताकरणजनितात् पापान्न नरकपातः, किन्तु तद-करणे पापक्षयकरणाभावेन विद्यमानात्पापात्,एवमिहापीति । तद-

युक्त वीप्सावाक्येन नित्यत्वावधारणात्। व्रतस्याकरणे प्रत्यवायसिद्धौ तदकरणे दोषविधायकवचनस्य मुख्यार्थत्वसम्भवात्। तत्परित्यागेनार्थान्तरकल्पनाया प्रमाणाभावात्। यदि चैतद्व्रतचीर्णमेकमेव पापक्षयकर स्यात्तदैव भवेत्राम, यदा त्वन्यान्यपि प्रायश्चित्तादीनि पापक्षयकारीणि सन्ति तदा तस्यैवाकरणे कथं निरयपातः। एवं प्रायश्चित्तेऽपि प्रायश्चित्तं चरितव्यमतो नित्यमिति, "कृते नि मध्ये पापे न भुञ्जीतानुपस्थित.। भुञ्जानो वर्द्धयेत्पाप यावत्सात्मानि पर्वदि" ॥ इत्यादिवाक्यैरावश्यकत्वावगमादकरणे प्रत्यवायसिद्धौ तदकरणे दोषाभिधायकस्य "प्रायश्चित्तमकुर्वाणा." इत्यादिवाक्यस्य मुख्यार्थत्वसम्भवात्तत्परित्यागेनार्थान्तरकल्पने प्रमाणाभावात्। यदप्युक्तं यदि व्रतस्य नित्यत्वेनाकरणे निरयपात तर्हि तद्व्युदासार्थं प्रायश्चित्तमपि श्रूयते, यथा मात्यताना[?]दिताग्नियो.। तथाच नित्यैकादशीव्रतस्याकरणे।

अष्टम्याञ्च चतुर्दश्यां दिवा भुक्त्वैन्दवं चरेत्।
एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वसु ॥

इति तदप्ययुक्त सर्वत्रौपदेशिकप्रायश्चित्ताभावात्तथा सति।

प्रायश्चित्त मकस्थ स्यात् यत्र चोक्ता न निष्कृतिः।
प्राणायामव्रत कार्यं सर्वपापापनुत्तये।
उपपातकजातानामनादिष्टस्य चैव हि ॥

इत्यादिवचनानर्थक्यप्रसङ्गात्। यच्चान्यदुक्तं कैश्चित् यद्यकरणे प्रत्यवायोऽभविष्यत् अनुकल्पोऽपि व्यधास्यत।
यथा।

एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विज।

तथैकादशीव्रते नित्ये।

एकभक्तेन नक्तेन चौल्यश्रद्धातुरः क्षिपेत्।

इत्यसमर्थं प्रत्यनुकल्पो विधीयते न तथात्राप्युक्तं। तदप्ययुक्त मनुकल्पविधानाभावेऽपि नित्याकरणे प्रत्यवायस्यावश्यम्भावित्वात्। पुराणान्तरे साधारणोऽनुकल्पो दर्शितः।

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत्।
तावद्धनादि वा दद्याद्युक्तश्चेद्विगुणं तथा॥
सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमात्।
कुर्याद्द्वादशसंख्याकान् यथाशक्त्यानुरो नर इति॥

तस्मान्निरुपणमनवद्यमस्य नित्यतावबोधः फलमिति सिद्धं। स्कन्दपुराणे। अनाचरणे दोषवाक्यप्रतिपादनेन नित्यत्वमेव स्पष्टीकृतं। तथाहि।

शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने।
तत्पापं लभते कुन्तिर्भुक्त्वाकृष्णाष्टमीदिने॥
भूत्वा मांसं परं काक मेतद्धि मुनिसत्तम।
मांसं वा द्विपदां भुक्तं कृष्णजन्माष्टमीभवे॥
कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम।
त्रैलोक्यसम्भवं पापं भुक्तं तेन न संशयः॥
ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेऽपि वा।
न लोको मुनिशार्दूल जयन्तीविमुखस्य च॥
ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतं।
ते भवन्ति महाप्राज्ञ व्याला. क्रूरे हि कानने(१)॥

(१) व्याधाः क्रूरे हि इति ग०।

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्।
न करोति नरो यस्तु भवति क्रूरराक्षसः॥
श्रावणे बहुले पक्षे न करोति यदाष्टमीं।
क्रूरायुधा क्रूरमुखा हिंसन्ति यमकिङ्कराः॥
न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम्।
यमस्य वशमापन्नः सहते नारकीं व्यथां॥
जयन्तीवासरे प्राप्ते करोत्युदरपूरणम्।
पीड्यते निशमात्यन्तं यमदूतैः कलेवरम्॥
यो भुञ्जीत विमूढात्मा जयन्तीवासरे नृप।
नरकोत्तारो न तस्यास्ति द्वादशीष्वपि सङ्कुले॥
यदा सह जयन्त्या तु करोति द्वादशीव्रतम्।
तस्य श्रीहरिपुरे वासो यावदाभूतसम्प्लवम्॥
रटन्तीह पुराणानि भूयो भूयो महामुने।
अतीतानागतं तेन कुलमेकोत्तरं शतम्।
पातितं नरके घोरे भुञ्जता कृष्णवासरे इति॥

यत्पुनरत्र भोजनवाक्यं तदेतद्भोजनप्रतिषेधः "न हिंस्यात् सर्वा भूतानी"तिवत्, तेन जयन्त्या कथं नित्यता सम्पाद्यते च कथं तस्य पाठः तयोरसम्भवात्। अथ जयन्तीप्रकरणपाठसामर्थ्येन प्रतिषेधः क्षेप्यते। तथापि तेन न जयन्त्या नित्यता प्रकृते योद्धुं, न हि खलु 'नानृतं वदे'दित्यनेन कलञ्जप्रतिषेधेन व्रतोर्नित्यत्वं सिद्ध्यति। किञ्च उपवासो नाम नैतिकर्त्तव्यताकोऽभोजनसङ्कल्पः तन्निर्वाहार्थमेव भोजननिवृत्तौ सिद्धायां कोऽयं प्रतिषेधेनेति, तत् प्रतिषेधानभ्युपगमे-

नैव परिहृत, तस्मात् "न पृथिव्यामग्निश्चेतव्योनान्तरिक्षे न दिवीतिवत् प्राप्त्यभावात् यथा नित्यानुवादत्वेनास्य हिरण्यनिधानस्तुत्यर्थता-भूत् एवमिहापि भोजनप्रतिषेधस्य नित्यजन्माष्टमीव्रतस्तुत्यर्थता वेदितव्या प्रकरणे दोषाभिधायकत्वेन काम्यव्रतविधिस्तुत्यर्थतानुपपत्तेः, भोजननिन्दावाक्यानान्तु नित्यविधिशेषत्व स्पष्टमेव, फल सम्बन्धवचनात् काम्यत्वमप्येतद्व्रतस्यावगम्यते ।

तथया विष्णुरहस्ये ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला ॥

स्कन्दपुराणे ।

अनेनाराध्य तं देव देवकीप्रभवं हरिं ।
त्यक्त्वा यमपथं घोरं याति विष्णोः परं पदम् ॥
जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः ।
कारयन्ति च विप्रेन्द्र लक्ष्मीस्तेषां सदा स्थिरा ॥
स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने ।
सिध्यन्ति सर्वकार्य्याणि कृते कृष्णाष्टमीव्रते ॥
धर्मार्थश्च कामश्च मोक्षश्च मुनिपुङ्गव ।
ददाति वाञ्छितान् कामान् ये चान्ये चातिदुर्लभाः ॥

तथा ।

ममाज्ञया कुरुष्व त्वं जयन्तीं मुक्तयेऽनघ ।

भविष्योत्तरे ।

प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन ।

नरो वा यदि वा नारी यथोक्तफलमाप्नुयात् ॥
पुत्रसन्तानमारोग्यं सौभाग्यमतुलं भवेत् ।
इति धर्म्मरतिर्भुत्वा मृतो वैकुण्ठमाप्नुयात् ॥
तत्र दिव्येन मानेन वर्षलक्षं युधिष्ठिर ।
भोगान्नानाविधान् भुक्त्वा पुण्यशेषादिहागतः ॥
सर्व्वकामसमृद्धे तु सर्व्वदुःखविवर्जिते ।
धर्म्मधर्म्मयुते पार्थ धर्म्मगोकुलसङ्कुले ॥
कुले नृपवरिष्ठानां जायते कृष्णयोपमः ।
यस्मिन् चैव देशे तु लिखितं वा पटार्पितम् ॥
मम जन्मदिनं पुण्यं सर्वालङ्कारशोभितम् ।
पूज्यते पाण्डवश्रेष्ठ जनैरुत्सवसंयुतैः ॥
परचक्रभयं तत्र न कदाचिद्भवत्युत ।
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥
गृहे वा पूज्यते यस्मिन् देवक्याश्चरितं मम ।
तत्र सर्वसमृद्धिः स्यान्नोपसर्गादिकं भयम् ॥
पशुतो नकुलाद्व्यालात्पापरोगाच्च पातकात् ।
राजतश्चोरतो वापि न कदाचिद्भयं भवेत् ॥
तस्मादेतद्व्रतं नित्यं काम्यं चेति सिद्धम् ।

इति जयन्तीव्रतनित्यत्वनिर्णयः ।

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये जन्माष्टमीनिर्णयो नाम सप्तमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः ।

## अथैकादशीनिर्णयः ।

तत्रैकादशीमहिमा तत्त्वसागरे ।

मातेव सर्वबालानां औषधं रोगिणामिव ।
रक्षार्थं सर्वलोकानां निर्मितैकादशी तिथिः ॥

तथा ।

एकादश्युपवासी यः स धन्यः स च बुद्धिमान् ।

तथा ।

एकादशीं परित्यज्य योऽन्यद्व्रतमुपासते ।
स करस्थं महारत्नं त्यक्त्वा लोष्टं हि याचते ॥

तथा ।

एकामेकादशीं वापि समुपोष्य जनार्दनम् ।
कामेनापि समभ्यर्च्य समाराम्मुक्तिमाप्नुयात् ॥

पुराणान्तरे तु तोयेनापि समभ्यर्च्येति पाठः ।

प्रसङ्गाद्वाथ वा दम्भाल्लोभाद्वा त्रिदशाधिपम् ।
एकादश्यां नमस्कृत्य सर्वदुःखाद्विमुच्यते ॥
संसाराख्यमहाघोरदुःखिना सर्वदेहिना ।
एकादश्युपवासोऽयं निर्मितः परमौषधम् ॥
संसाररोगदुष्टानां नराणां पापकर्मणाम् ।

एकादश्युपवासेन मद्य एव सुखं भवेत् ॥

नारदीयपुराणे वसिष्ठः।

एकादशीसमुत्थेन वह्निना पातकेन्धनम्।
भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥
नेदृशं पावनं किञ्चिन्नराणां भूप विद्यते।
यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥
तावत् पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
एकादश्युपवासस्य कलां नार्हन्ति षोड़शीम् ॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो।
एकादश्युपवासेन तत् सर्वं विलयं व्रजेत् ॥
एकादशीसमं किञ्चित्परित्राणं न विद्यते।
स्वर्ग-मोक्षप्रदा ह्येषा राज्य-पुत्रप्रदायिनी।
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥
न गङ्गा न गया भूप न काशी न च पुष्करम्।
न चापि कौरवं क्षेत्रं न रेवा न च देविका।
यमुना चन्द्रभागा च तुल्या भूप हरेर्दिनात् ।
यासेनापि हता राजन दर्शयति मान्तकम्।
अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ॥
चिन्तामणिसमा ह्येषा अथवापि निधेः समा।
सङ्कल्पपादपप्रख्या वेदवेदोपमा तथा ॥

ब्रह्मवैवर्त्ते ।

सर्वप्रायश्चित्तमिदं संसारोत्तारकारकम् ।
एकादशीव्रतं विप्र कुर्व्वन्मुक्तिमवाप्नुयात् ॥
नरो दिनैर्यदष्टभिश्चतुर्भिश्च करोत्यघम् ।
उपोष्य पञ्चदशमं दिनं विष्णोर्विमुच्यते ॥
इति सर्व्वपुराणेषु मुनीनां निश्चितं मतम् ।
उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः ॥
कलावकिल्बनशीनामविद्यावितानशाम ।
एकादशीं विना विप्र न संसारादिमोचनम् ॥

पद्मपुराणात् ।

उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः ।
न याति यातनां यामीमिति नो यमतः श्रुतम् ॥

तथा ।

एकादशेन्द्रियैः पापं यत्कृतं वैश्य मानवैः ।
एकादश्युपवासेन तत् सर्व्वं विलयं व्रजेत् ॥
एकादशीसमं किञ्चित् पुण्यं लोके न विद्यते ।
व्याजेनापि कृता यैस्तैर्न यान्ति नं भास्करं ॥

स्कन्दपुराणे ।

विना हि चक्रयोगास्तु सदैवैकादशी नृणाम् ।
विनिहन्तीह पुण्यानि कुनृपो विषयं यथा ॥
कुपुत्रस्तु कुलं यद्वत् कुनारी च पतिं यथा ।
अधर्म्मेण यथा धर्म्मं कुधर्म्मेण यथा नयः ॥

कुज्ञानेन यथा ज्ञानं कुशौचे शुचिता यथा।
असद्वादे यथा वादः सत्यं चैवानृतेन हि॥
यथोष्णेन हिमं सुभ्रु अनर्थेनार्थसञ्चयः।
यथा प्रकीर्त्तनाद्दानं तपो विस्मयकारणात्॥
अशिष्टो हि यथा पुत्रो गावो दूरगमा यथा।
सद्वेतेन यथा श्राद्धं यथा वित्तमवर्द्धनात्॥
यथा समीहनाज्ज्ञानं फलानां वरवर्णिनि।
तथा दुष्कृतसङ्घानां प्रोक्तेयं द्वादशी शुभे॥
ब्रह्महत्या दुरापानं स्तेयं गुर्व्वङ्गनागमः।
अभावं समुपैष्यन्ति न तथा वै त्रिपुष्करम्॥
न चापि नैमिषं क्षेत्रं न च कौरवसंज्ञितम्।
प्रभासं न गया देवि न रेवा न सरस्वती॥
कालिन्दी यमुना चैव देविका न च काश्मीरे।
तथान्यत्तीर्थसङ्घातो नैव तुल्यो हरेर्दिनात्।
न दानं न तपः स्नानं न चान्यत्सुकृतं क्वचित्।
शृणुष्व प्रमवत्सुभ्रु सुश्लोकं हरिवासरं।
सहस्रोपोषणो वाप्या नश्यन्ते पापराशयः।
सफलः पृथिवीदानमेकतो हरिवासरः।
न सम कविभिः प्रोक्तो वासरो ह्यधिको मतः॥

विष्णुधर्म्मोत्तरे।

उपवासी हरिं यस्तु भक्त्या ध्यायति मानव।
मत्प्रणामी तत्कर्म्मरतस्तद्गतमानसः।

निष्कामोऽद्वैतवद्ब्रह्म पदमाप्नोत्यसंशयम् ।

भविष्यत्पुराणे ।

एकादशी महापुण्या सर्वपापविनाशनी ।
भक्तेरुद्दीपनी विष्णोः परमार्थगतिप्रदा ।
यामुपोष्य नरो भक्त्या न संसारे भविष्यति ॥
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
न स दुर्गतिमाप्नोति नरकाणां न संशयः ॥
कृत्वा पापसहस्राणि एकादश्यामुपोषितः ।
द्वादश्यामर्चयेद्विष्णुं न स दुर्गतिमाप्नुयात् ॥
एषा तिथिः परा पुण्या विष्णोरीशस्य तुष्टिदा ।
तस्यास्त्वेव जगन्नाथः अमूर्त्तो मूर्त्तिमान् स्थितः ।
तेन सा सर्वपापघ्नी सर्वदुःखविनाशनी ॥
या सा विष्णुमयी शक्तिरनन्ता छायया स्थिता ।
सा तेन तिथिरूपेण दृश्यैकादशी सती ॥

सनत्कुमारप्रोक्ते ।

कृत्वा पापसहस्राणि ब्रह्महत्याशतानि वै ।
एकामेकादशीं भक्त्या समुपोष्य शुचिर्भवेत् ॥
एकादशीव्रतादन्यद्व्रतं क्रियते नरैः ।
निष्फलं तद्विजानीयाद्रूपरोऽनृतमङ्कुरम् ॥

नारदीयपुराणे ।

सम्प्राप्य वासरं विष्णोर्यो नरः संयतेन्द्रियः ।
उपवासपरो भूत्वा पूजयेन्मधुसूदनम् ।

स हन्ति सर्वपापानि किं तपोभिः किमध्वरैः ॥
एकादशी प्रपन्ना ये नरा नरवरोत्तमाः ।
तद्वच्च बहवो भूत्वा नानारिक्तकेतनाः ।
चाश्वेण पीतवस्त्रा हि प्रयान्ति हरिमन्दिरम् ॥
एष प्रभावो हि मया द्वादश्याः परिकीर्त्तितः ।
पापेन्धनस्य घोरस्य पावकाख्यो महीपत इति ॥
देवीरहस्य-स्कन्दपुराणयोः ।
पापन्तु विविधं प्रोक्तं पातकञ्चातिपातकम् ।
उपपातकमन्यच्च महापातकमेव च ॥
प्रकीर्णकञ्च तत्सर्व्वमेकादश्यामुपोषणात् ।
विलयं याति तोयस्य यथा स्फुरणभाजनम् ॥
भविष्यपुराणे वैष्णवे महातन्त्रे ।
एकादश्युपवासी यः किं तस्यान्येन कर्मणा ।
नैकादश्युपवासी यः किं तस्यान्येन कर्मणा ॥
सौरधर्मेषु ।
एकतश्चाग्निहोत्रादि द्वादशीमेकतः प्रभुः ।
तुलयातोलयत्तत्र द्वादशी च विशिष्यते ॥
देवीरहस्ये ।
गायत्रीव यथा सर्वपापपञ्जरभेदिनी ।
एकादशी तथा सर्वपापपञ्जरभेदिनी ॥
स्कन्दपुराणेऽपि ।
अभोज्यभोजनाख्यातं अगम्यागमनाच्च यत् ।

अयाज्ययाजनाच्चैव अभक्ष्याणाञ्च भक्षणात् ॥
अस्पृश्यस्पर्शनाच्चैव परेषां निन्दनाच्च यत् ।
असत्संस्तवनाच्चैव पारदार्य्यात्ततश्च यत् ॥
विहिताकरणाच्चैव परवित्तापहारतः ।
ज्ञानाज्ञानकृतं यच्च पातकञ्चोपपातकं ।
तत्सर्वं विलयं याति एकादश्यामुपोषणात् ॥

वैष्णवतन्त्रे ।

एकादशी महापुण्या विष्णोरीशस्य वल्लभा ।
तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिं ॥
तस्य पापानि नश्यन्ति विष्णोर्भक्तिश्च जायते ।
ज्ञानञ्च प्राप्यते येन संसाराद्विच्यते नरः ॥

स्कन्द-भविष्यपुराणयोः ।

ये द्वादशीमुपवसन्त्यनिलाम्बुभक्षा
ये वा सवृन्तकुसुमैर्हरिमर्चयन्ति ।
ते धौतपाण्डुरपयोनिधिराजहंसाः
संसारसागरजलस्य तरन्ति पारम् ॥

वायुपुराणे ।

एकादशीव्रतं यस्तु भक्तिमान् कुरुते नरः ।
सर्वपापविनिर्मुक्तः स विष्णोर्याति मन्दिरम् ॥

विष्णुधर्मोत्तरे ।

एकादश्युपवासं यः श्रद्धया कुरुते नरः ।
स सर्वपातकादिभ्यस्तथैवाधिर्विमुच्यते ॥

न धर्मराजमाप्नोति नापि नरकं न च यातनाम् ।
स नमस्यः स पूज्यश्च वासुदेवप्रियो हि सः ॥

गरुडपुराणे ।

एकादशीव्रतं भक्त्या यः करोति नरः सदा ।
स विष्णुलोकं व्रजति याति विष्णोः सरूपताम् ॥

आग्नेयपुराणे ।

एकादश्यामुपवासं यः सदा कुरुते नरः ।
स याति परमं स्थानं यत्र देवो हरिः स्थितः ॥

स्कन्दपुराणे ।

यः करोति नरो भक्त्या एकादश्यामुपोषणम् ।
स याति विष्णुसालोक्यं याति विष्णोः सरूपताम् ॥

विष्णुपुराणे ।

ॐकारः सर्ववेदानां यथैवाद्यः प्रवृत्तिषु ।
तथा सर्वव्रतानान्तु द्वादशीव्रतमुत्तमम् ॥

इत्येकादशीमहिमा ।

## अथैकादशीविषये व्रतवाक्यनिषेधनिर्णयः ।

तत्रैकादश्यां कानिचिद्वाक्यानि भोजननिषेधपराणि, कानिचिद् व्रतविधिपराणि । तत्र भोजननिषेधपराणि तावदुदाह्रियन्ते ।

तत्र देवलः ।

यद्गेन पिबेत्तोयं न खादेत् कूर्मशूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

नारदीयपुराणे ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
तानि पापान्यवाप्नोति भुञ्जानो हरिवासरे ।
रटन्तीह पुराणानि भूयो भूयो वरानने ॥
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ।

स्कन्दपुराणे ।

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा ।
एकादश्यान्तु भुञ्जानोविष्णुलोकाच्च्युतो भवेत् ॥

नारदीयपुराणात् ।

अष्टवर्षाधिकोमर्त्त्यो ह्यशीतिर्न हि पूर्यते ।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापभाक् ।
स मे दण्ड्यश्च वध्यश्च निर्वास्यो देशतः स मे ॥

विष्णुस्मृतावपि ।

एकादश्यां न भुञ्जीत कदाचिदपि मानवः ।

ब्रह्मवैवर्त्ते ।

स केवलमघं भुङ्क्ते योभुङ्क्ते हरिवासरे ।
दिने तु सर्वपापानि भवन्त्यन्नाश्रितानि तु ।
तानि मोहेन योऽश्नाति न स पापैर्विमुच्यते ॥

विधवायास्त्वेकादश्यां दोषविशेष प्रदर्शित. कात्यायनेन ।

विधवा या भवेन्नारी भुञ्जीतैकादशीदिने ।
तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने ॥

अथ च "न खादेत् कूर्म-शूकरावित्यादिनिषिद्धनिषेधसमभि-व्याहततया "एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीत्यादेर्निषेधप-रतैवाध्यवसीयते। न चैतेषु वाक्येषु पर्य्युदासकारणं व्रतशब्दसामाना-धिकरण्यादि श्रूयते, अतोभोजननिषेधा इमे।

अत केचिदाहुः एतान्यपि वचनान्युपवासपराण्येव क्वचिदुपक्रमे क्वचिदुपसंहारे क्वचिदुपक्रमोपसंहारयोरुपवासस्य प्रतिपादनात् नञर्थविधौ तु मूलभूतवेदान्तरकल्पनाप्रसङ्गाच्च। एकमूलत्वाय वाक्यानामपि स्मृतिनामपेक्षितैव। यत्र "एकादश्यामुपवसेदित्यभिधाय "एकादश्यां न भुञ्जीतेति वचनं देवलादिस्मृतिषु तदुपसंहारार्थं गुणविधानार्थं वा, तथा चोपवासप्रकरणपठनमप्युचितं भवति। तेन स्वतन्त्रनञर्थविधिपरमेवमादिवचनमिति मतमपास्तमिति।

अपरे त्वाहुः नैतद्युक्तं। मुख्यार्थसम्भवे लक्षणाश्रयणस्यानुचितत्वात्। न च मूलभूतवेदान्तरकल्पनाप्रसङ्गभयाल्लक्षणाश्रयणमुचितमिति वाच्यं। सर्वविधि-निषेधानामेकार्थत्वापत्तेः। न चेह व्रतादिशब्दसामानाधिकरण्यं पर्य्युदासाश्रयणकारणमस्ति।

ननु।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

वनस्थ-यतिधर्मोऽयं शुक्लामेव सदा गृही॥

इति पर्य्युदासोऽयमभोजनसङ्कल्परूपमुपवासाख्यं व्रतं विधत्ते "वनस्थ-यतिधर्मोऽयमिति धर्मशब्दसामानाधिकरण्यात्। न हि निषिद्धानां ब्रह्महत्यादीनां परित्यागे कश्चिद्धर्मो जायते। ब्रह्महत्याद्यनुष्ठानादधर्मो भवति अननुष्ठानादधर्मपरिहारमात्रं न पुनर्धर्मसम्भव, प्रायश्चित-

षेधो स्त्रीनो धर्मो भवेदपि न पुनः स्वतन्त्रो निषेधस्तथा भवति, तस्माद्धर्मशब्दसामानाधिकरण्यादवगम्यते भावरूपं किञ्चिद्विधेयमस्तीति, प्रजापतिव्रतेष्विव तदर्थस्य व्रतशब्दसामानाधिकरण्यादतः सर्वेष्वेकादशीभोजननिषेधवाक्येषु सर्वशाखान्यायेन "वनस्थ-यतिधर्मोऽयमित्यस्योपसंहाराद्धर्मशब्दसामानाधिकरण्यं पर्युदासाश्रयणकारणं भविष्यतीत्युच्यते । सत्यं । यद्येतद्वाक्यविहितं नित्यमेकादश्युपवासव्रतं स्वप्रधाने मुख्यया वृत्त्या मुख्यासम्भवाद्वा लक्षणया विधीयते । यथा कात्यायन-देवलयोः ।

एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।

विष्णुरहस्य-स्कन्दपुराणयोः ।

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

इत्यादिषु ।

यथा च भविष्यपुराणे ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥

अग्निपुराणे ।

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इत्यादिवचनं । तथैतत्स्मृतिगतस्य च "वनस्थ-यतिधर्मोऽयमिति विशेषस्य तत्स्मृतिगतस्य च "ब्रह्मचारी च नारी चेति "गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव चेति विशेषस्य न कर्मैक्यादुपसंहारो युज्यते। यत्र तु मुख्यार्थसम्भवेन निषेधमिश्रयादुपवासव्रतविधानं नास्ति

तच कथं व्रतमतस्योपसंहारः, न ह्यग्निहोत्रवतोविशेषः । शाखान्तरे-ऽन्यकर्मण्युपसंह्रियते, उपसंहारादेव व्रतविधानं भविष्यतीति चेत् । न। उपसंहारे सति व्रतविधानं व्रतविधाने च सति कर्मैक्यादुपसंहार इति दुरुत्तरेतरेतराश्रयप्रसङ्गात् । सर्वत्रोपसंहारे च देवतान्तरे व्रतविधायकवाक्यान्तरसद्भावात् पौनरुक्त्यप्रसङ्गः । न चैकं व्रतविधानं द्वितीयं तदुपसंहारार्थं गुणविधानार्थं चेति वाच्यम् । "न मद्भेन पिबेत्तोयमित्यादिनिषेधप्रधानेनानुद्धिस्याोपसंहारानुपपत्तेर्भिन्ना-र्थत्वे सम्भवत्युपसंहारार्थत्वस्याशुचितत्वात् । नापि गुणविधि, प्रातार्थ-विषयत्वेन विधित्वस्यैवानुपपत्तेः "न मद्भेन पिबेत्तोयमित्यादिभिः सम्प्रतिपन्ननिषेधैः साहचर्येण पठितत्वात् । एतेन क्वचिदुपक्रमे क्वचिदुपसंहारे उपवासप्रतिपादनादित्यपि निरस्तं । एकतिथि-मधिकृत्याम्नोपवासप्रकरणपठनमयुक्तिं, तस्मात् स्वतन्त्रव्रतविधि-परमेवमादिवचनमिति मतं समीचीनं । कथं मद्भचार्यादिवाक्येषु मुख्यार्थासम्भवात् लक्षणयोपवासव्रतविधानमिति चेत्, उच्यते मुख्या-र्थपरिग्रहे द्वेषां वाक्यानामनर्थता भवेत् । गृहस्थ-मद्भचार्यादि-नाग्नि-नारीणां पक्षद्वयेऽप्येकादश्यां भोजननिषेधप्रार्थातिरिक्तानां भोजने प्रत्यवायाभावः । गृहस्थस्य तु दृष्णायामेव भोजननिषेधः कृष्णायां भोजने प्रत्यवायाभावः इत्यापद्येत विशेषनिषेधस्य शेषाभ्य-नुज्ञाविषयत्वात् । तथा च सति "एकादश्यां न भुञ्जीत कदाचिदपि मानव इत्यादिवचनविरोधः । न च सामान्यस्य निषेधस्य विशेष-निषेधेनोपसंहारः यथा "पुरोडाशं चतुर्द्धा करोतीति सामान्यविधिः "आग्नेयं चतुर्द्धा करोतीति विशेषविधिना भविष्यतीति वाच्यम् ।

निषेधस्य निवृत्तिफलत्वेन विशेषानपेक्षत्वादुपसंहारानुपपत्तेः । एवमप्युपसंहारे "न हिंस्यात् सर्वा भूतानीति सामान्यनिषेधस्य "ब्राह्मणो न हन्तव्य इति विशेषनिषेधेनोपसंहारोपपत्तौ क्षत्रियादिवधे प्रायश्चित्तोपदेशानर्थक्यप्रसङ्गात् । "ब्राह्मणो न हन्तव्य इति च पापगौरवख्यापनार्थं विशेषनिषेध इति चेत् । न । तदभावात् । न हि वनस्थ-यतीनामेकादश्यां भोजने न्यूनः प्रत्यवायो गृहस्थादीनामधिकः, गृहस्थस्य च कृष्णायां भोजने न्यूनः शुक्लायामधिक इति सम्भवति, प्रायश्चित्ताधिक्यानभिधानात् । प्रत्युत गृहस्थाद्यपेक्षया वनस्थादीनां "गौर्यवस्त्वोधन प्रोक्तमिति प्रायश्चित्ताधिक्यं चाभिहितं । प्रायश्चित्तोपदेशादेव नोपसंहार इति चेत् । न । अनुपदिष्टे प्रायश्चित्ते प्रसङ्गात् । सामान्यतोविहितं प्रायश्चित्तं सर्वत्रास्तीति चेत् । न । भवन्मते प्रत्यवायनिषेधसद्भावेऽपि कल्पनाप्रसङ्गात् । गुणस्यैवोपसंहाराभावमात्रं तस्मात्सिध्यतीति चेत् । न । उपसंहारनिवारणार्थत्वाभावे मानवपदवैयर्थ्यात् शास्त्रस्य मनुष्याधिकारत्वेनैव तत्सिद्धेः । यत्तूक्तं पर्युदासपक्षे "गृहस्थोब्रह्मचारी चेत्यत्र वाक्ये पक्षद्वयेऽप्युपवासप्रसक्तेर्गृहस्थपदग्रहणमनुपपन्नं स्यात्, "शुक्लामेव सदा गृहीत्यादिवचनान्तरविरोधादिति, तदयुक्तं अविरोधस्यानुपदमेवोपपादयिष्यमाणत्वात् ।

अपरे त्वाहुः यानि व्रतादिशब्दसामानाधिकरण्यरहितानि वाक्यानि तानि निषेधपराण्येव । ननु पर्युदासपक्षेऽपि लक्षणा नास्त्येव "नञ्भावे च सादृश्ये तद्विरुद्ध-तदन्ययोरपीति स्मरणादतस्य वाक्यान्तरपर्यालोचनया भोजनविरुद्धमभोजनसङ्कल्पमभिदधदुपवासपरं स्यात्, अन्यथा "नानुयाजेषु ये यजामहं करोतीत्यत्रापि लक्षणाभिया

यो गृहस्थो ॥ भुञ्जीत आहिताग्निस्तथैव च ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥

इत्येवमादिवचनपर्य्यालोचनया मानवपदसंकोचपरिहारार्थत्वात्। न च "एकादश्यां न भुञ्जीतेतिवचनान्येकादशीव्यतिरिक्तविषयाणि, गृहस्थादिविषयभोजननिषेधपर्य्यालोचनया "एकादश्यां न भुञ्जीते-त्यस्यापि तद्व्यतिरिक्तविषयताप्रसङ्गात्। तेनैतद्भ्रमापनोदार्थं "गृहस्थो ब्रह्मचारी चेति वचनमिति न दोषः। यानि पुनर्वाक्यानि व्रतशब्दव-न्ति दृश्यन्ते तानि न निषेधपराणि "नोद्यन्तमादित्यमीक्षेतेतिवत्।

मत्स्य-भविष्यपुराणयोः।

एकादश्यां निराहारोयो भुङ्क्ते द्वादशीतिथौ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत्।

आग्नेयपुराणे।

एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवं।

एवमन्यान्यपि वाक्यानि व्रतविधिपराणि ज्ञेयानि। यान्युपवास-शब्दवन्ति यानि च फलशब्दवन्ति वाक्यानि वक्ष्यमाणानि तान्यपि व्रतविधिपराण्येव निषेधपरत्वे फलसम्बन्धानुपपत्तेः। व्रतविधिपरा-ण्यपि वाक्यानि द्विविधानि नित्यव्रतविधिपराणि काम्यव्रतविधि-पराणि च। नित्यव्रतविधिपराणि तावदुदाह्रियन्ते।

तत्र नारदः।

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः।
पक्षे पक्षे तु कर्त्तव्यमेकादश्यामुपोषणं॥

अत्रोपोषणं नित्यं कर्त्तव्यमित्यन्वय।

गारुडपुराणेऽपि ।

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

सनत्कुमारप्रोक्तेऽपि ।

एकादशी सदोपोष्या पक्षयोः शुक्ल-कृष्णयोः ।

तथा ।

एकादश्यामुपवसेन्न कदाचिदतिक्रमेत् ।

तथा ।

न करोति हि यो मूढ़ एकादश्यामुपोषणं ।

स नरो नरकं याति रौरवं तमसावृतं ॥

एषु वाक्येषु सदा नित्यं नातिक्रमेदिति श्रवणात्पक्षे पक्षे इति वीप्साश्रवणादकरणे दोषसंकीर्त्तनाच्च एकादशीव्रतं नित्यमिति गम्यते ।

तथा च विष्णुरहस्ये ।

द्वादशी न प्रमोक्तव्या यावदायुः प्रवृत्तिभिः ।

आग्नेयपुराणे ।

उपोष्यैकादशी राजन् यावदायुः प्रवृत्तिभिः । इति ॥

यति-विधवयोरेकादश्युपवासातिक्रमे दोषविशेषः प्रदर्शितो नारदीयपुराणे ।

एकादश्यां विना राज्ञा यतिश्च सुमहामुने ।

पच्यते ह्यन्धतामिस्रे यावदाभूतसंप्लवं ॥

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।

वनस्थ-यतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥

विचार-निन्दा किमर्थं विचार्यते विचारितप्रायमेवैतत् तस्मादविचारमेकादश्यामुपवसनीयं अन्यथा ब्रह्महत्यादिदोषापत्तिरिति वाक्यार्थः।

अथैकादशीव्रतविधिपराणि वाक्यानि।

तत्र विष्णुरहस्ये।

य इच्छेद्विष्णुना वास शुत सम्पदमात्मन।

कश्चित्तु शुतपदस्थाने पुत्रपद पठति।

कूर्म्मपुराणे।

य इच्छेद्विष्णुसायुज्य श्रिय सम्पत्तिमात्मन।

कात्यायन।

ससारसागरोत्तारमिच्छन् विष्णुपरायण।

ऐश्वर्य्यं सन्तति स्वर्गं मुक्तिं वा यद्यदिच्छति॥

एतेषामुत्तराद्ध "एकादश्या न भुञ्जीत पक्षयोरुभयोरपीति।

स्कन्दपुराणे।

यदीच्छेद्विपुलान् भोगान् मुक्तिं चात्यन्तदुर्लभा।

एकादश्यामुपवसेत्पक्षयोरुभयोरपि॥

नारदीयपुराणे।

आराधयति गोविन्दमेकादश्यामुपोषित।

स स याति निर्वाण दाह प्रलयवर्जित॥

विष्णु।

मार्गशीर्षे शुक्लैकादश्यामुपोषितो भगवन्त वासुदेवमभ्यर्चयेत्।
पुष्प-धूपाद्यनुलेपन-दीप नैवेद्यैर्द्विज-ब्राह्मणतर्पणैश्च व्रतमेतत् सम्पूर्ण

हत्वा पापेभ्यः पूतो भवति यावज्जीवं हत्वा श्वेतद्वीपमेवाप्नोति उभयतो द्वादशीत्येव संवत्सरं स्वर्गं लोकं प्राप्नोति यावज्जीवं विष्णु-लोकमित्यादि।

नारदीयपुराणे।

स्वर्ग-मोक्षप्रदा ह्येषा शरीरारोग्यदायिनी।
सुकलत्रप्रदा ह्येषा राज्यपुत्रप्रदायिनी॥

न च पापक्षयश्रवणादिवत्परार्थत्वादिह फलश्रुतिरर्थवादोऽभ्यु-पेयते, परार्थता नाम पापक्षयार्थता अभिप्रेता, सापि च न स्पष्टं विध्यु-द्देशेऽवगम्यते किन्त्वर्थवादमात्रप्रसरैव, न चार्थवादः स्वर्गादिव्यप-विशिष्ट इति तान्येव फलान्यङ्गीक्रियन्ते यथा आतेष्टेरवश्यकर्मसंख्याया-श्चार्थवादिकफलसम्बन्धोऽङ्गीकृतः। अत्र च "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेनेति तपसो विद्याङ्गत्वावगमात् पारम्पर्येण मोक्षार्थत्वमस्तीति मन्यमानेनोक्तं मोक्षप्रदेति। इत्येकादशीविषयनिषेधवाक्यनिर्णयः।

अथास्मिन् व्रतेऽधिकारी निरूप्यते।

तत्र काम्यत्वपक्षे तत्तत्फलकाम एव। नित्यत्वपक्षे त्रिकाण्डम-ण्डन प्राह। नित्यत्वानुकूलत्वाज्जीवनमात्राधिकारी कल्प्यते, तथापि त्रैवर्णिकाधिकारत्वाद्धर्मशास्त्राणां अत्रैवर्णिकव्युदासः। ननु वनस्थ-यतिधर्मोऽयमिति स्मरणाद्गृहस्थादिव्युदासोऽपि कस्मान्न भवति, उच्यते वनस्थयत्योराख्यातपदान्वयासम्भवात्। न हि धर्मशब्दोपस-र्जनीभूतयोरेकादश्यां न भुञ्जीतेत्यनेनान्वयः सम्भवति। एवन्तु सम्भवति वनस्थ यतिधर्मोऽयमेकादश्यां न भुञ्जीतेति, किन्त्वर्थोऽसौ

नोपपद्यते धर्म्मस्यैतनस्योपबाधकत्वेनासम्भवात्। न हि वनस्थ-यति-
धर्म्मोऽयमिति श्रुत्या येन तस्य निवार्य्येत, तस्माद्यादृशोऽन्यस्मादृशो-
ऽर्थो नास्ति यादृशोऽर्थं सम्भवति तादृशवाचकशब्दो नास्ति तस्मात्
स्तुत्यर्थे वनस्थादिपदं यस्मादनयोः यत्योरुत्तमाश्रमिणोरप्ययं धर्म्मः कि-
मुतेतरेषामिति। यथा "देवा वै सत्रमासत किमुत मेतरे" इति। नन्वे-
वमपि वाक्यशेषाद्वनस्थ-यतिनिर्णयः कस्मान्न भवति सन्देहाभावात् यत्र
हि घृत तैलयोरुपादाने सन्देहस्तत्र "तेजो वै घृतमिति वाक्यशेषान्नि-
र्णय उक्तः, इह तूपवासे जीवन्मात्राधिकारनिश्चयान्न वाक्यशेषापेक्षा,
ननु जीवन्नुपवसेदिति न श्रूयते, सत्यं, तथापि कल्प्यते, सर्व्वाधिकार-
कल्पनातो वाक्यशेषात्तदाश्रयणं लघीयोऽराचितवत्। उच्यते। कल्पना-
गौरवभयाद्वाक्यशेषगतयोर्वनस्थ-यत्योरधिकारिणोराश्रीयमाणयो-
स्ततोऽधिकतरो दोषो वाक्यभेदः प्राप्नोति, तथा हि वनस्थ यत्योरेकत्र
पुरुषे युगपत्समावेशासम्भवात् न सहतयोरधिकारिविशेषणत्वं प्रत्येक-
मधिकारिविशेषणे व्यज्यमाने वनस्थ उपवसेत् यतिरुपवसेदिति-
वाक्यभेदः स्पष्ट एव। ननु प्रत्युद्देशं वाक्यपरिसमाप्तौ कथं वाक्यभेदः
यथा "ग्रहं सम्मार्ष्टीति ऐन्द्र-वायवादिषु प्रत्येकं सम्मार्गविधानेनापि
वाक्यभेदः, सत्यं, तत्रैकस्मिन् शब्दतात्पर्य्ये श्रौते पर्य्यवसिते सत्यार्थि-
को व्यापारः प्रत्येकं ग्रहेषु भिद्यमानोऽपि न वाक्यं भिनत्ति, इह
तु न कस्यचिदेकस्य शब्दस्य श्रौतो व्यापारो वनस्थ यतिसाधारणः
सम्भवति वनस्थशब्देन यतेरनभिधानाद्यतिशब्देन वनस्थस्य सतो-
वाक्यभेदः। ननु राज पुरोहितयोरिव वनस्थ-यत्योर्भिन्नशब्दोपात्त-
योरप्यधिकारसम्बन्धः। नैवं। तत्र हि सायुज्यकामना नामैकमधिकार-

विशेषणं सम्भवति, इह तु वनस्थत्व यतित्वाभ्यामन्यदुभयानुस्यूतमेक-मधिकारिविशेषणं न पश्यामः। किञ्च राज पुरोहितन्यायाश्र-यणात्तत्त्वयोरधिकारः प्राप्नोति, मत्र वनस्थ-यती एकादश्यां न भुञ्जीयातामिति स्थाने पुनरेकादश्यां न भुञ्जीतेति। नन्वनुपङ्गेणो-भयत्र सम्बन्धात् द्विवचने निर्देशाभावो दोषः। उच्यते यत्र भिन्नवाक्यत्व मिष्टितं तत्र सम्पूर्णाद्वाक्यात् किञ्चिदनुषज्यते न्यूनवाक्यं प्रति यथा "वसन्ताय कपिञ्जलानालभत इति। इह च समासपदगतयोर्वनस्थ-यत्योः प्रत्येकमाख्यातसम्बन्धायोग्यत्वेनानुपङ्गाभावः तस्माद्वनस्थ-यति-शब्दस्य कथञ्चिदप्यधिकारिसमर्पकत्वाभावाद्गृहस्थादेरप्यधिकार इति सिद्धं। नन्वेवं मनोरिदं वाक्यं विरुध्यते "गृहस्थो ब्रह्मचारी वा यो-ऽनश्नंस्तु तपश्चरेत्। प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः"॥ इति। उच्यते। किमनेन वाक्येन तपः प्रतिषिध्यते किं वा प्राणाग्निहोत्र-स्यावश्यकत्वं विधीयत इति। न तावत् प्राणाग्निहोत्रविधानं तस्य हेतुवन्निगदाभिहितस्य विधित्वासम्भवात्तेन तपः क्रियत इतिवत्। यद्यपि हेतुवन्निगदितार्थो विधीयते, तथापि न प्राणाग्निहोत्रवि-धानलाभः किन्तु तदीयो लोप एव हेतुत्वेन निर्दिष्ट इति तद्धाना-पत्त्या अग्निहोत्रलोप एव मन्तव्येतेत्यनिष्टापत्तिः। किञ्चाग्निहोत्रना-मधेयश्रवणान्नैयमिकाग्निहोत्रविध्यन्तप्राप्ता तदीयद्रव्येषु क्षीरादिषु अतिदिष्टेषु तेषां मध्ये जलादिद्रव्येणोपवासाविरोधिनापि प्राणाग्निहो-त्रसिद्धेर्नैवोपवासस्य बाधकत्वं प्राणाग्निहोत्रनियमस्य। अथार्थवादगतस्य नाम्नोऽतिदेशकत्वाभावान्नैयमिकाग्निहोत्रद्रव्येष्वप्राप्तेषु प्राणाग्निहोत्रस्य मुखे हूयमानतया बुद्धिस्थेन भोजनार्थेन द्रव्येण प्राणाग्निहोत्र

कर्त्तव्यमिति विधीयते, ततश्च तत्सिद्ध्यर्थं भोजनाक्षेपादुपवास-विरोध । उच्यते। यदि भोजनार्थेन द्रव्येण प्राणाग्निहोत्रं कर्त्तव्यं तर्हि तत्प्रयुक्तद्रव्योपजीवित्वात् स्वयमाक्षेपकत्वं "पुरोडाशकपालेन तुषानुपवपतीतिवत्। निरूपितश्चायमर्थः शारीरके "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् प्राणाय स्वाहेत्युपोदाहरणात् । तस्मान्न प्राणाग्निहोत्रस्यावश्यकत्वविधायकमिदं वाक्यं "गृहस्थो ब्रह्मचारीति। नापि गृहस्थादेरुपवासप्रतिषेधकं "पूर्वास्तुपवसेद्गृही","शुक्लमेव सदा गृहीत्यादिविरोधात्। तथादित्यवारादिकालविशेषोपयुक्तोपवासपर्युदासादुपवासान्तरमभ्यनुज्ञा गम्यते। अतश्च परेऽपि वाक्ये गृहस्थस्य तपानुवादो दृश्यते "प्रजापतिरकामयत प्रजा सृजेयेति, "स तपोऽतप्यतेति प्राजापत्यादिनाधिक्षिप्तत्वाद्गृहस्थस्य तपोऽनुवादाद्गृहस्थान्तरस्यापि तपोयुक्तमिति तु गम्यते। तथाच वशिष्ठादयः ऋषयो गृहस्था एव सन्तोऽप्युपात्तं तपांसि चक्रिर इति पुराणेषु श्रूयते। तथा विष्णुधर्म-भविष्योत्तर-मत्स्यपुराणादिषूपवासप्रचुराणि व्रतानि गृहस्थानां विधीयन्ते। तथा धर्मशास्त्रेषु उपवासबहुलानि प्रायश्चित्तानि गृहस्थानां स्मर्यन्ते। अद्यत्वेऽपि केचन गृहस्था महात्मानश्चोपवासपरायणा दृश्यन्ते सदाचारादपि गृहस्थानां श्रेयोऽर्थिनां तत्राधिकारो गम्यते। एवञ्च सति यानि साधारणानि तपोवचनानि तानि गृहस्थे सङ्कोचलक्षणं बाधं न प्रतिपद्यन्ते इत्यपरोन्ताभ । तथा हि तप इति तपो नानशनात्परं, यद्धि परन्तपस्तद्दुराधर्षं, तस्मात्तपसि रमन्त इति। इह हि प्रकरणे यथाश्रमविशेषविवक्षा नच तदाश्रमग्रहणं कृतं तस्मात्तत्साधारण्यं गम्यते।

तथा "तपसा देवा देवताग्रमायन् तपसर्षयः सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामरातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्तीति, "तपसा ये अनाधृष्यास्तपसा ये स्वर्गतास्तपो ये चक्रिरे महस्तांश्चिदेवोऽपि गच्छतादिति, "तपसैव च युक्तस्य ब्राह्मणस्य दिवौकसः। पूजान्तु प्रतिगृह्णन्ति कामान् संवर्द्धयन्ति चेति॥ यानि च मोहिनीवचनानि "अहो राजन् रुक्माङ्गद भवतो गृहस्थस्य सतो नोपवासाधिकारोऽस्ति विशेषेण च क्षत्रियस्य किन्तु यतीनां विधवानामेवाय धर्मो यदुपवासादि तदेकादश्यामन्यथा भोक्तव्यं भोक्तव्यमित्यर्थप्रतिपादकानि भूयोभूयः कथितानि तानि विधिरूपाण्यपि परमार्थतो न विधायकानि, किन्तु स्वविपरीतार्थस्य विधेरुपवासानुष्ठानपरस्य रुक्माङ्गदकीर्त्तिख्यापनार्थवादभूतानि, कुतः "मा मैव वद कदापि किन्तु लच्युपपद्यते। इत्यादिना तदुक्तार्थप्रतिषेधपूर्वकमुपवासविधानात्। यथा "जर्त्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वेति, "पयसाग्निहोत्रं जुहोतीत्यस्यार्थवादः "अनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्चेति जर्त्तिल-गवीधुकप्रतिषेधपूर्वकं पयोविधानात्। किञ्च यदि मोहिनीपक्ष एव सिद्धान्तः स्यात् किं तर्हि तदुक्तविपरीतकारिणं रुक्माङ्गदं श्लोकेनाकृष्य भगवान् वासुदेव आत्मसायुज्येनैवेप्सितवान्। किञ्च धर्मोपकारार्थं मनुष्याणां नरकं प्रापयितुमेव मोहिन्याः प्रवृत्तिरिति उपवासादपि नरकप्राप्तिफलान्येव मोहिनीवचनानि नानुष्ठेयार्थानि। तस्माद्गृहस्थोऽप्युपवासाद्यधिकृत इति सिद्धं। एतेन ब्रह्मचारी व्याख्यातः "तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"॥ इत्यादिवचनैस्तस्यापि तपःसम्बन्धावगमात्। नन्वेवं तर्हि "ब्रह्मचारी

वेतिवचनस्य को विषय, प्राणान्तिकतपोनिषेधपरत्वं ब्रूम । तथाहि
प्राणाग्निहोत्रलोपेनेति द्वन्द्वगर्भस्तत्पुरुष, इत्थम्भूतलक्षणे च तृतीया,
विहितकर्मोपलक्षणार्थश्चाग्निहोत्रशब्द, तथाचायमर्थो भवति यो गृ-
हस्थो ब्रह्मचारी प्राणबाधया विहितकर्मबाधया वा तपश्चरति सोऽव-
कीर्णिदोषं प्रतिपद्यतेति । एवं च योजना प्राणश्चाग्निहोत्रं च प्राणाग्नि-
होत्रे तयोर्लोपेनेति । एतदुक्तं भवति वानप्रस्थादे प्राणाग्निहोत्राद्यु-
परोधेनापि तप कुर्वाणस्य नातीव दोष, गृहस्थादेस्तु यदि प्राणो
वाग्निहोत्रादिकं वा उपरुध्येत तदा दोष इति "धर्मार्थकाम मोक्षाणां
प्राणा संस्थितिहेतव । तान्निघ्नता किं न हतं रक्षता किं न रक्षितं'॥
इति कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इति वचनाभ्यां
प्राणकर्मणामबाधनीयत्वप्रतिपादनात् । यदप्युच्यते "शरीरं पीड्यते
येन शुभेनापि च कर्मणा । अत्यन्तं तन्न कर्तव्यमनायास स उच्यते ॥
इति तदत्यन्तपीडानिवारकं न तु पीडामात्रस्य, तस्माद्गृहस्थस्य ब्रह्म-
चारिणोऽप्युपवासाद्यधिकारोऽस्तीति सिद्धं । ननु सामान्येषा गृह-
स्थानां, आहिताग्नेस्तु नास्ति आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रय ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नता इति स्मरणात् । उच्यते ।
किमनेन वचनेनाहिताग्नेरशनं विधीयते किं वा उपवास प्रतिषिध्यत
इति यद्यशनं विधीयते तदापि किं सर्वदा भोक्तव्यमित्युच्यते,
किं वा भोजनेच्छायां सत्यां प्रतिबन्धे बाधति लभ्यमाने च भोजने
भोक्तव्यं, आहोस्वित्शास्त्रान्तराननुज्ञातेऽपि भोजनप्रतिषेधो विधी-
यत इति तत्र सर्वदाशनविधानमशक्यत्वादेव नेष्टं । नापि भोजनेच्छा-
यां सत्यां प्रतिबन्धे बाधति लभ्यमाने भोजने विधिर्युक्त रागत

प्रमाणत्वात् । तदुक्तं न्यायमञ्जरीकारेण "न हि बुभुक्षितोऽश्नीयात् भक्षितः स्यायादिति विधानमुपयुज्यत इति । न च प्रतिबन्धेऽपि भोक्तव्यमिति वाच्यं । अप्रमाणत्वात् । नापि शास्त्रान्तरानुज्ञातदेश-कालावस्थादावशनं प्रतिप्रसूयते, तथाच सति अपराह्णादावपि काले श्मशानादावपि देशे वा शुचिनाऽप्याहिताग्निना पर्युषितादिकमप्यन्नं भोक्तव्यमित्यापद्यते। भवत्विति चेत्, हा कष्टमिदं श्रुतं अहो महत्य-ध्ययनलोलुपा येन समस्तशिष्टजनप्रसिद्धिविपरीतं चन्द्रग्रहादिष्वपि भोजनमुच्यते, विरुध्यन्ते च बहूनि शास्त्राणि तत्तद्विषयनिषेधकानि "चन्द्र-सूर्यग्रहे नाद्यादित्यादीनि। ननु तानि सामान्यशास्त्रत्वादना-हिताग्निविषयाणि, उच्यते, इदं वा निषिद्धव्यतिरिक्तविषयं कि-मिति नेष्यते, यथा निषेधशास्त्राण्याहिताग्न्यनाहिताग्निसाधारणत्वात् सामान्यशास्त्राणीत्युच्यन्ते तथाशनशास्त्रमपि निषिद्धानिषिद्धविषय-साधारणत्वात् सामान्यशास्त्रं, एवं तर्हि विकल्पोऽस्त्विति चेत्, तन्न, विषमशिष्टत्वात्। तथा "अश्नन्त एव सिध्यन्तीति वर्त्तमानापदेशत्वात् कल्प्यो विधिः "चन्द्र-सूर्यग्रहे नाद्यादित्यादिषु प्रत्यक्षः, अतो न वि-कल्पः। नन्वस्थाने क्लिश्यते आयुष्मता यावता चन्द्रग्रहादिष्वाहिताग्नेरशनं नोच्यते किन्त्वेकादश्यादावशितव्यमिति, उच्यते, कात्र पक्षपातः, यथा हि "चन्द्र-सूर्यग्रहे नाद्यादिति स्पष्टः शास्त्रविरोधः तथैव "राजावर्षे-कादश्यां न भुञ्जीतेति शास्त्रं विद्यत एव। तस्मात् विरोधः, शास्त्रान्त-रावरुद्धे विषये नाशनविधानमेतत्, "अश्नन्त एव सिध्यन्तीति विषया-न्तरे विधायकत्वं पूर्वमेव निराकृतं, तस्मान्न क्वचिदनेनाशनं विधीयते।

ननु च

सायं-प्रातर्द्विजातीनामशनं श्रुतिचोदितं ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

इत्येतदशनविधानं, नहि पूर्ववद्विकल्प्य दूषयितुं शक्यते, को ब्रूते तदशनविधानमिति रागतः प्राप्तस्य भोजनस्य सायं-प्रातःकालान्तरे प्रतिषेधमात्रमिह क्रियते सर्वमन्यदनूद्यते, एवमप्यविधिपरत्वे सम्भवति कालविशिष्टभोजनविधानस्यायुक्तत्वात् कालद्वयनियमे वाक्यभेदात् सायं-प्रातरेवाशनं नान्तरा इत्येतावताग्निहोत्रवाक्यस्यानुपपत्तेर्नावश्यकतया समाशनं कल्प्यं, तात्पर्यानुवादेनान्यपरा एवैवं विधयोऽङ्गीक्रियन्ते यथा "प्राङ्मुखोऽन्नानि भुञ्जीतेत्येवमादयः । ननु दीक्षितव्रतस्य सायं-प्रातरावश्यकता कथं, उच्यते, तत्रापि शरीरधारणार्थमेव व्रतस्य परिग्रहो न पुनस्तन्निरपेक्षस्यावश्यकतया विधानं ।

अन्ये त्वाहुः आवश्यकमेव व्रतानीति, तथा हि "मध्यन्दिने मध्यरात्रे च व्रतं व्रतयतीति व्रतं विधाय पुनराह "न त्वेवं न व्रतयेदिति पूर्ववचनेनैव व्रतस्य मध्यन्दिन-मध्यरात्रकालसम्बन्धविधेरयं व्रताभावप्रतिषेधोऽनर्थको भवतु, नूनं व्रतितव्यमेवेत्यवगमयति ।

यत्तूच्यते रागप्राप्तत्वाद्विधानमनर्थकमिति, तन्न, क्षुधाद्यभावेऽप्यवश्यं क्रियमाणं प्राशनीयमिति विधानात् शेषभक्षोऽपि प्रतिपाद्यद्रव्यप्रयुक्तत्वाद्रागाद्यभावेऽप्यावश्यक एव, "सायं-प्रातर्द्विजातीनामिति वाक्यस्य मध्यरात्रप्रतिषेधमात्रविधानेनापि गतिरुक्ता आहिताग्निवाक्यस्यापि पक्षे, तस्मात् नेदमशनविधायकं ।

ननु माभूद्विधायकमभ्यनुज्ञान्तु करोत्येव, उच्यते, तत्रापि पूर्ववद्विकल्पनीयं । न तावदुपवासादिशास्त्रावरुद्धे विषयेऽभ्यनुज्ञा

क्रियते तच्छास्त्रविरोधादेव। नापि शास्त्रानवरुद्धे विषये अभ्यनुज्ञान, वैयर्थ्यात्। यदि भोक्तुमिष्यते लभ्यते च विधिविरोधश्च नास्ति तदाभ्यनुज्ञानमन्तरेणापि भुज्यत एव किमभ्यनुज्ञानवचन करिष्यति, उपवासप्रतिषेधपक्षः पुनरपि पापिष्ठ, तथा हि यच शास्त्रीया ह्युपवासप्राप्तिरन्नविधानमास्थितापि न निवारयितु शक्यते इत्युक्त, तत्कथं नाम प्रतिषेधेन वार्यते प्राप्तिपरतन्त्रत्वात् प्रतिषेधस्य तत्र हि षोडशिग्रहणाग्रहणवत् विकल्पो वा स्यात् "आहिताग्निरुपवसेन्नेति,"नानुयाजेषु ये यजामहं करोतीतिवद्वा पर्युदास, "आहिताग्निवर्जिता उपवसेयुरिति उभयथा न सम्भवति विकल्पस्याष्टदोषत्वात् पर्युदासे लक्षणाप्रसङ्गात् प्रधानाख्याते सम्बन्धाभावप्रसङ्गाच्च। ननु यान्यावश्यकान्युपवासादीनि तानि भवन्त्वाहिताग्नेरपीति यानि तु श्रेयोऽर्थितया क्रियन्ते तानि तस्य निवार्यन्ते इद तु दुर्भाषित, तथा हि नित्योऽप्युपवासो निवारयितु न शक्यते अनेन कथ नाम काम्यो निवार्यते, किमेतच्च श्रुतवानसि "काम्यो हि नित्याद्वलीयानिति, काम्यस्य तर्हि का गतिर्यदा चीर्णव्रतेराहिताग्नेरुपवासाद्यनुष्ठानेनाहिताग्नित्वविरोधो भवति तथाविधस्याहिताग्नेस्ताभिरेव चोदनाभि आर्त्तस्योपवासाद्यनुष्ठान निवार्यते, तत्प्रतिपादनार्थमेतद्वाक्य "आहिताग्निरनड्वांश्चेति। नन्विदमनुवादक वाक्य प्राप्नोति, किमद्यापि न जानासि स्मृतिवाक्यान्यनुवादकानीति, एव धर्मान्तरसामर्थ्यानुरोधेन व्याख्यायमाने प्रस्तुतानुसारो भविष्यति, तथा हि "तथा चात्मनोऽनुपरोध कुर्याद्यथा कर्मसु समर्थ स्यादिति प्रस्तुत्यापस्तम्बेनोक्त "आहिताग्निरनड्वांश्चेति। तस्मादाहिताग्निमात्राग्निहोत्रा-

पापबाधेनोपवसितुं शक्यते चेदेकादश्यामुपवसनीयमेवेति सिद्धं। तथा चाग्निपुराणेऽपि गृहस्थादीनामुपवासो विहितः ।

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति ॥

कात्यायनः ।

अष्टवर्षाधिको मर्त्यस्त्वपूर्णाशीतिवत्सरः ।
एकादश्यामुपवसेत् पक्षयोरुभयोरपीति ॥

"उपनयनादिनियमः" इति च सर्वनियमानामुपनयनोत्तरकालत्वादष्टवर्षपर्यन्तमुपनीतस्याप्यनधिकारोऽष्टवर्षाधिकशब्देनोक्तः ।

नारदीयपुराणे ।

अष्टवर्षाधिको मर्त्यस्त्वशीतिर्न हि पूर्य्यते ।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापभाक् ।
स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे ॥
एतस्मात् कारणादिप्र एकादश्यामुपोषणं ।
कुर्यान्नरो वा नारी वा पक्षयोरुभयोरपि ॥

इदमेकादशीव्रतं माहेश्वरैरप्यनुष्ठेयं ।

तथा च विष्णुधर्मोत्तरे ।

लिङ्गार्च्चनं रुद्रजपो व्रतं शिवदिनद्वये[१] ।
वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा ॥

इत्युक्तम् ।

एकादश्यष्टमी चैव पक्षयोश्च चतुर्दशी ।
शिवस्य विषयः प्रोक्ता मुनिभिः शौनकादिभिः ।

(१) शिवदिनचतुष्टयमिति ग० ।

तासामाद्यानुपवसेद्द्विजा नाद्यात्तथान्ययोरिति ॥

तथा ।

वैष्णवो वाथ वा शैवो[१] कुर्यादेकादशीव्रतम् ।

एकादश्यामुपोषणं सौरैरप्यनुष्ठेयं सौरपुराणे तथाभिधानात् ।

वैष्णवो वाथ शैवो वा सौरोऽप्येतत् समाचरेदिति ।

तेन त्रैवर्णिकस्य ब्रह्मचर्यादेरुपवास इति सिद्धमिति ।

अपरे त्वाहुः नात्र त्रैवर्णिकव्युदासः, "वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः" इति वाक्यपर्यालोचनया सर्वेषामधिकारादविशेषतश्चात्र मर्त्यग्रहणात् सर्वेषामधिकारः । यत्तु प्रतिवासरमिति वचनेन द्विजग्रहणं, तत्तेषां दोषविशेषस्य दर्शनार्थं[२] ।

अन्ये तु ब्रह्मचर्यादेरप्यधिकारप्रतिपादकानामनुपवासोपलक्षणार्थमित्याहुः, तन्न, लक्षणाप्रसङ्गात्, अवान्तरवाक्यादवगत एवाधिकारो ज्ञातव्यः।

तथाच ब्रह्मवैवर्त्ते ।

एकादशीं विना विप्र न संसारविमोक्षणम् ।
तथाप्यत्र विशेषोऽस्ति कार्य्या शक्तिमता च सा ॥
न तु देहं विदुः प्राज्ञाः पीडनीयमिहायवात् ।
शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा ॥
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ।
धर्म्मसाधनमाद्यं यत् शरीरं यत्नपुष्यतत् ॥
यथाकथञ्चिच्छौर्यांश्च तत् क्षपयेदेकदेशया ।
मूलघातेनात्मनो यत् पीडया कुरुते तपः ।

(१) वाथ शैवो वा इति ख० । (२) दोषविशेषप्रदर्शनार्थमिति ग० ।

न च सुखमवाप्नोति न सिद्धिं न परां गतिं ॥

अधिकारिणोऽसामर्थ्ये प्रतिनिधिरुक्तो वाराहपुराणे।

असामर्थ्ये शरीरस्य व्रते तु समुपस्थिते।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वित।
भगिनीं भ्रातरं वापि व्रतभङ्गो न जायते॥

कात्यायनः।

राजन्य चत्रियार्थे च एकादश्यामुपोषितः।
पुरोधास्तु चत्रियो वा द्वयोः समभितीरित।
उपवासफलं ताभ्यां समय समवाप्यते॥
शृणु यथान्यमुद्दिश्य एकादश्यामुपोषितः।
यमुद्दिश्य कृतं विप्रास्तस्य पूर्णं फलं भवेत्।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः॥
भर्त्राभावे यदा विप्र एकादश्यामुपोषितः।
उपवासफलं तस्य समग्रं समवाप्यते॥
राजरोपायदा विप्र एकादश्यामुपोषितः।
उपवासफलं तस्य सम्यक् भवति निश्चितं॥
एतस्मात् कारणाद्विप्र एकादश्यामुपोषणे।
कुर्यान्नरो वा नारी वा पत्नयोरुभयोरपि॥

वायुपुराणे।

उपवासे त्वशक्तस्तु आहिताग्निरथापि वा।
पुत्रादा कारयेदाशाद्ब्राह्मणादापि कारयेत्॥
अथ वा विप्रमुख्येभ्यो दानं दद्यात्स्वशक्तितः।

उपवासफलं तस्य समग्रं समवाप्यते ।
न च भोजनदोषोऽपि तत्क्षणादेव नश्यति ॥

कात्यायनोऽपि ।

पितृ-भ्रातृ-मातुरर्थे आचार्यार्थे विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
यमुद्दिश्य कृतः सोऽपि सम्पूर्णं लभते फलं ।
नारी स्वपतिमुद्दिश्य एकादश्यामुपोषिता ॥
पुण्यं शतगुणं प्राहुर्मुनयः पारदर्शिनः ।
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयं ॥

तथा ।

स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा ।
हिरण्यं दक्षिणां दद्यात् स्वशक्त्या चानुरूपतः ॥

कात्यायनः ।

एवं करोति यः कश्चित् एकादश्यामुपोषण ।
पितृ-मातृ-भ्रातुरर्थे गुर्वर्थे च विशेषतः ॥
उपवास प्रकुर्वाण पुण्यं शतगुणं लभेत् ।
दक्षिणा चात्र दातव्या शुश्रूषा विहिता सदा ॥
द्रव्यसम्पत्तियसौ वा एकादश्यामुपोषित. ।
द्रव्यदानोपवासस्य फलं प्राप्नोत्यसंशय ।
कर्त्ता शतमवाप्नोति नात्र कार्या विचारणा ॥

मनुनोक्तं ।

अथवा चान्यमुद्दिश्य एकादश्यामुपोषितः ।

यमुद्दिश्य कृतं विप्रास्तस्य पूर्णफलं भवेत् ।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः ॥

यत्तु मनुनोक्तं ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं ।

विष्णुनापि ।

पत्यौ जीवति या नारी उपवासव्रतञ्चरेत्[1] ।
आयुः सा हरते भर्त्तुर्नरकञ्चैव गच्छति ॥

तद्भर्त्राद्यननुमतोपवासविषयं कर्त्तृस्त्रीविषयञ्च ।
यथा चाहतुः शङ्ख-लिखितौ ।

कामं भर्त्तुरनुज्ञया व्रतोपवासादीनारभेत ।

मार्कण्डेयपुराणे ।

नारी त्वननुज्ञाता पित्रा भर्त्रा सुतेन च ।
निष्फलन्तु भवेत्तस्या यत्करोति व्रतादिकं ॥ इति ।

नित्यैकादश्युपवासासमर्थेन एकभक्तादिकं कर्त्तव्यं ।
तथाच मार्कण्डेयः ।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्दादशिको भवेत् ॥
एकभक्तेन नक्तेन बाल-वृद्धातुरः क्षिपेत् ।
पयोमूल-फलैर्वापि न निर्द्दादशिको भवेत् ॥

बौधायनोऽपि ।

उपवासे त्वशक्तानामशीतेरूर्द्ध्वजीविनां ।
एकभक्तादिकं कार्य्यमाह बौधायनो मुनिः ॥

---

(१) उपोष्य व्रतमाचरेदिति ग० ।

भविष्यत्पुराणे द्वादशीकल्पे ।

एकादश्यां प्रभुं विष्णुं समभ्यर्च्य कदाचन ।
उपोषितेन भक्तेन तथैवायाचितेन वा ॥
एकभक्तेन वा तात न निरेकादशिको भवेत् ।
तदेकनियमो नित्यं न सीदति भवार्णवे ॥
कायशक्तिबलाद्येव न यथाकर्ममाचरेत् ।
उपोषितो वा नक्ती वायाचित्येकाशनोऽपि वा ॥
दिने दिने पूजयेत्तात हरिं संसारपारदम् ।
एकाहारप्रदानेन एकाशनफलं स्मृतम् ॥
अयाचितफलं विद्धि दक्षिणाद्विगुणेन च ॥
नक्तस्य च चतुर्गुण्यं चतुर्गुणमुपोषणात् ।
षड्विधं फलं दानाद्व्रतभङ्गेऽपि कथ्यते ॥
एकादश्युपवासी च पक्षयोरुभयोरपि ।
दुराचारोऽपि च ज्ञेय स्थान स च स्वयमच्युत ॥
नक्तं हविष्यमयुक्तं मतं द्वापररूपिणम् ।
मत्स्यदर्शने पुण्यं मायामाभ्यन्तरात्मनम् ॥

व्यास ।

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्या नक्तभोजी षडाचरेत् ॥

भविष्यत्पुराणे द्वादशीकल्पे ।

मिताम्बुलमिताम्बूलमभोजनमभोजनम् ।
साहारञ्च निराहारं चतुर्विधमुपोषणम् ॥

यावत् कृताह्निको न स्यात्तावन्नार्चयते हरिं ।
रहौ ताम्बूलहीनः स्यात् तत् सताम्बूलमुच्यते ॥
पूजयित्वाच्युतं पूर्वं पूर्णाभुक्तां भुनक्ति यः ।
भद्राभुक्तां पुनर्भुङ्क्ते तत्सभोजनमुच्यते ॥
व्रणधान्यान्नं मूलं पयसाज्येन वा फलैः ।
हरेरप्युपवासस्य तन्नाहारमुदाहृतम् ॥
यद्येतैरर्चितं शक्तस्त्वपायैः समुपोषणम् ।
सताम्बूलमनाहारमभोजनमतो हितम् ॥

बौधायनोऽपि ।

व्याधिभिः परिभूतानां पित्ताधिकशरीरिणां ।
त्रिंशद्वर्षाधिकानाञ्च नक्तादिपरिकल्पना ॥

त्रिचत्वारिंशद्वर्षाणामित्यपि क्वचित्पाठः तत्र नवतिवर्षाणामित्यर्थः ।

कूर्मपुराणे ।

एकभक्तेन नक्तेन बाल-वृद्धातुरः क्षिपेत् ।
नातिक्रमेत् द्वादशीञ्च उपवासव्रतेन च ॥

एतच्च व्रत पक्षयोरुभयोरप्यनुष्ठेयं ।
तथा विष्णुरहस्ये स्कन्द-कूर्म-नारदीयपुराणेषु च ।

यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चनेति ॥

सनत्कुमारप्रोक्तेऽपि ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरेति ।

भविष्यत्पुराणे ।

शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चनेति ।

सौरधर्मेषु ।

एकादशी सदोपोष्या शुक्ला कृष्णा तथैव चेति ।

विष्णुरहस्य-सौरपुराणयोः ।

यथा सुपूजितो गौरः कृष्णो वा वेदविद्द्विजः ।
सन्तारयति दातारं द्वादश्यौ च तथा स्मृते ॥

विष्णुरहस्ये स्कन्दपुराणे च ।

तैलं श्वेतेतराणां वै तिलानां सदृशं यथा ।
कृष्णायाश्च सितायाश्च गोः क्षीरं सदृशं यथा ।
द्वादश्योः सदृशं तद्वत् पुण्यं शुक्लासितोभयोः ॥
दर्शश्च पूर्णमासी च पुण्यतश्च यथा समे ।
तथा सितासिते पुण्ये द्वादश्यौ मुनिभिः स्मृते ॥ इति ।

स्कन्दपुराणे ।

यथोत्तरे दक्षिणे च अयने वै प्रकीर्तिते ।
तुल्यं पुण्यमवाप्नोति द्वादश्योस्तु तयोर्भवो ॥

तथा ।

सोम-सूर्य्यग्रहौ पुण्यौ यथैव मुनिभिः स्मृतौ ।
तथा सितासिते पुण्ये द्वादश्यौ विष्णुतुष्टिदे ॥
साध्व मातर्यथा वन्द्याः साध्व मातर्यथाऽर्च्चौ ।
तथा सितासिते पुण्ये द्वादश्यौ धर्मतः समे ॥

तथा ।

यथा विष्णुः शिवश्चैव सम्पूज्यौ मुनिभिः स्मृतौ ।
तथा पूज्यतमे प्रोक्ते द्वादश्यौ शुक्ल-कृष्णके ॥

वाराहपुराणे ।

एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।
द्वादश्यां योऽर्च्चयेद्विष्णुं स मुक्तिफलभाग्भवेत् ॥

विष्णुरहस्येऽपि ।

दुस्तराणि तथोक्तानि नरकाणि सहस्रशः ।
यमस्य सदने घोरे यातना यमकिङ्करैः ।
यत्किञ्चित्तद्विघातार्थं यममार्गेऽस्य तद्वद् ॥

ब्रह्मोवाच ।

मनसापि चिकीर्षन्ति द्वादशीं ये नरोत्तमाः ।
तेऽपि घोरं न पश्यन्ति संसारं दुःखसागरम् ॥
शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
यथा सम्पूजितो गौरः कृष्णो वा वेदविद्द्विजः ।
सन्तारयति दातारं द्वादशी फलतस्तथा ॥
सर्वपापप्रणाशाय विष्णोः सन्तोषणाय च ।
उपोष्या द्वादशी पुण्या सेवेतोभयपक्षयोः ॥

शुक्ल-कृष्णविवेके पाप-दोषश्रवणाच्च(१) ।
तथा च कूर्मपुराणे विष्णुधर्मोत्तरे च ।

स ब्रह्महा सुरापः स्यात् स्तेयी गुरुतल्पगः ।

स्कन्दपुराणे ।

स ब्रह्महा स गोघ्नश्च सुरापो गुरुतल्पगः ।

---

(१) पापश्रवणाद्दोषाच्चेति ख० ।

कालिकापुराणे ।

सर्वेषामिह पापानामाश्रयः स तु कीर्त्तितः ।

इत्येतेषां उत्तरार्द्धं ।

विशेषयति यो मोहादेकादश्यौ सितासिते ॥

भविष्यपुराणे ।

एवं ज्ञात्वा सदोपोष्या द्वादशी शुक्ल-कृष्णजा ।
तयोर्भेदं न कुर्वीत भेदनाशकरं भवेत् ॥

गरुड़पुराणे ।

शुक्ला वा यदि वा कृष्णा विशेषो नास्ति कश्चन ।
विशेषं कुरुते यस्तु पितृहा स तु कीर्त्तितः ॥

तत्त्वसागरात् ।

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
तुल्ये ते मनुते यस्तु स वै वैष्णव उच्यते ॥
शुक्ल-कृष्णेन्दुरश्मीनां शुक्लता कृष्णता तथा ।
एकादश्याः स्वरूपन्तु सद्धायाः सैव केवलम् ॥
अतः कृष्ण-सितत्वादि शब्दितो गुण उच्यते ।
एकादश्यां न तेनास्ति दूषणं येन दूष्यते ॥
यदि वाच्या गुणोऽपि स्यात्तत्रापि न दूषणम् ।
तथापि तिल-विभादौ कृष्णत्वं नैव दूषणम् ॥

सनत्कुमारप्रोक्ते ।

एकादश्योर्द्वयोर्यस्तु विशेषं कुरुते नृपः ।
तस्योद्धारं [illegible] पश्यामि यावदाभूतसंप्लवम् ॥

धर्महानिश्च भवति सन्ततिर्नश्यति ध्रुवम् ।
तस्मात् चीयते नित्य संवत्सरमिति श्रुते ॥

तथा ।

एकादशीषु कृष्णासु रविसंक्रमणे तथा ।
पारणश्चोपवासश्च न कुर्यात्पुत्रवान् गृही ॥

तथाच गोभिलः ।

एकादश्यां यदा ब्रह्मन् दिनक्षये तिथिर्भवेत् ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

पितामहोऽपि ।

एकादश्यां यदा वत्स दिनक्षये तिथिर्भवेत् ।
तत्रोपोष्या द्वादशी स्यात् त्रयोदश्यान्तु पारणम् ॥

नारदीयपुराणे ।

क्षये वाथच वा वृद्धौ सम्प्राप्ते च दिनक्षये ।
उपोष्या द्वादशी पुण्या त्रयोदश्यान्तु पारणम् ॥

कूर्मपुराणेऽपि ।

दिनक्षये तु सम्प्राप्ते उपोष्या द्वादशी भवेत् ।
दशमीमिश्रयुक्तां न कुर्वीत कदाचन ॥

तथा ।

तिथिवृद्धौ तथा ह्रासे सम्प्राप्ते वा दिनक्षये ।
सन्दिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत् ॥ इति ।

भविष्यत्पुराणे ।

दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता ।
उपोष्या द्वादशी शुद्धा[१] त्रयोदश्यान्तु पारणम् ॥

ब्रह्मपुराणे ।

तिथिच्छेदे तु संप्राप्ते द्वादश्यां समुपोषणम् ।
पारणन्तु त्रयोदश्यां यदीच्छेत् श्रेयमात्मनः ॥
एकादशी विनष्टा चेद्द्वादश्यामप्युपोषणम् ।
उपोष्य चार्च्चयेद्विष्णुमुभयोरपि पक्षयोः ॥
जपे होमे तथा दाने ब्राह्मणानाञ्च तर्पणे ।
पारणे चापि राजेन्द्र प्रशस्ता च त्रयोदशी ॥

कूर्म-नारदीय-मार्कण्डेयपुराणेषु च ।

कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ॥

स्कान्दपुराणेऽपि ।

ऊर्द्धं हरिदिनं न स्यात् द्वादशीं वासयेत्ततः ।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ॥
एवं कुर्व्वन्नरोभक्त्या विष्णुसायुज्यमाप्नुयात् ।
अन्यथा कुरुते यस्तु स याति नरकं ध्रुवम् ॥
एकादशी यदा विद्धा परतोऽपि न वर्त्तते ।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥

तथा ।

---

(१) प्रथमेति ग० ।

एकादशी चवीणां तु द्वादशी चक्रपाणिनः ।
एकादशी यदा न स्यादुपोष्या द्वादशी तदा ॥

तथा ।

द्वादश्यामुपवासोऽथ त्रयोदश्यां तु पारणम् ।

भविष्यत्पुराणे ।

पूर्वविद्धामुपासीत योनन्दां वेदवादपि ।
कोवेदवचनात्तात गोवधे गां भिवहन्ति वै ॥
दशमीशेषसंयुक्तमाश्रयेत्को व्रतं व्रती ।
समादेकादशी त्याज्या दशमीशेषसंयुता(१) ।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ॥

यदा त्वस्मिन्नेव विषये द्वादश्यां त्रयोदशस्ति तदा द्वादश्यामेवोपवासः ।

तथाच व्यासः ।

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥

'लुप्ता' क्षय गता। 'परतः' त्रयोदश्यामित्यर्थः । यदा दशमीविद्धैकादशी उदयमात्र प्राप्ता द्वादश्या नास्ति द्वादशी तु त्रयोदश्यां विद्यते तदा शुद्धद्वादश्यामेवोपवासः ।

तथाच नारदीयपुराणे ।

शुद्धा तु द्वादशी राजन् समुपोष्या यदा तिथिः ।

---

(१) दशमीपक्षमाश्रयेतेति ख० ।

दशम्येकादशीमिश्रा न कर्त्तव्या कदाचन ॥

पद्मपुराणेऽपि ।

दशमीगर्भिता पूर्वा लुप्तैकादशी परा ।
उपोष्या द्वादशी तत्र न दशम्या कथञ्चन ॥
पलार्द्धेनापि विद्धा च दशम्यैकादशी यदा ।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥ इति ।

नारदीयपुराणेऽपि ।

यदा न प्राप्यते विद्धा द्वादश्यां पूर्व्वसम्भवा ।
तदोपवासो हि कथं कर्त्तव्यो मानवैर्वद ॥
उपवासदिने विद्ध यदा भवति पूर्व्वगा ।
द्वितीयेऽह्नि यदा न स्यात् सन्याय्येकादशी तिथिः ।
तत्रोपवासो विहितः कथ तद्वद सूतज ॥

सूत उवाच ।

यदा न प्राप्यते विप्रा द्वादश्यां पूर्व्ववासरः ।
दशिघकार्द्धमात्रोऽपि तदोपोष्यं परं दिनम् ॥
उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारयेत् ।
निर्गता चेच्चयोदश्यां कला वा द्विकलापि वा ॥

ब्रह्मवैवर्त्ते ।

एकादशी द्वादशी च तत्र सन्निहितो हरिः ।
तेन शुद्धापि कर्त्तव्या द्वादशीफलकाङ्क्षिभिः ॥
एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमम्पदम् ॥

अत्र यद्यपीत्यर्थवादमात्रमुदाहृतवचननिचयपर्य्यालोचनया सर्व्वेषां द्वादश्युपवासावगमात् । यदा तु दशमीविद्धैकादशी उदयमात्र-पर्य्यन्ता द्वादशी च समा न्यूना वा तदा गृहिणाम् पूर्व्वोपवासः ।

स्कन्दपुराणे ।

पारणाहे न लभ्येत द्वादशी यदि किञ्चन ।

ऋष्यशृङ्गः ।

पारणाहे न लभ्येत द्वादशी कलयापि चेत् ।

अनयोरुत्तरार्द्धं ।

तदानीं दशमीविद्धा उपोष्यैकादशी तिथिः ।

पद्मपुराणे ।

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
द्वादश्यां द्वादशीहन्ति त्रयोदश्यान्तु पारणम् ॥
विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।
अविद्धापि तथा विद्धा परतो द्वादशी यदि ॥

हारीतोऽपि ।

त्रयोदश्यां यदा न स्यात् द्वादशी घटिकाद्वयम् ।
दशम्येकादशीमिश्रा सैवोपोष्या तदा तिथिः ॥

तत्त्वसागरसंहितायामपि ।

दशम्येकादशी यत्र नोपोष्या सा कुलापहा ।
सैवोपोष्या कलामात्रा द्वादश्यां चेन्न विद्यते ॥

भविष्ये ।

एकादशी कलाप्येका परतो न च वर्द्धते ।

यतिभिः पुत्रवद्भिश्च सैवोपोष्या तदा तिथिः ॥

अस्मिन्नेव विषये वत्स्यादेर्मुमुक्षोरुत्तरैवोपवासः ।

तथाच विष्णुरहस्ये ।

दशमीमिश्रिता पूर्वा शुद्धैवैकादशी परा ।
एकादश्यां महाप्राज्ञ उपवासः कथं भवेत् ॥
शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः ।
पारणञ्च त्रयोदश्यां तत्र क्रतुशतं भवेत् ॥
यदैव दशमीविद्धं भवत्येकादशीदिनम् ।
उपोष्या तु तदा शुद्धा द्वादशी मोक्षकाङ्क्षिभिः ।
पारणन्तु त्रयोदश्यां तथाचक्रफलं भवेत् ॥

यान्येतानि वचनानि कूर्म-पद्मपुराणयोः ।

एकादशी दशाविद्धा परतो द्वादशी न चि ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे ।

एकादशी दशाविद्धा द्वादशी न च वर्द्धते ।
तदोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणमिति ॥

तान्युदाहृतवाक्यपर्य्यालोचनया मुमुक्षुविषयाणि । यदा तु दशमीविद्धैकादशी द्वादश्यां विधते द्वादशी चोदयपर्य्यन्तं विधते च तदा द्वितीयैवोपोष्या नित्या काम्या च ।

तथाच नारदः ।

द्वादश्येकादशी यत्र सद्गता त्रिदशाधिप ।
तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणेऽपि ।

एकादशीकला यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

स्कन्दपुराणे च ।

एका तिथ्या समायुक्ता याति वृद्धिं परा तिथिः ।
द्वादशी पारणार्थं च मोषोष्य पूर्ववासरम् ॥

बौधायनेऽपि ।

कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ॥

पद्मपुराणेऽपि ।

द्वादशीमिश्रिता कार्य्या सर्वत्रैकादशी तिथिः ।
द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा ॥

तथा ।

सर्वत्रैकादशी कार्य्या द्वादशीमिश्रिता नरैः ।
प्रातर्भवतु वा मा वा यतोनित्यमुपोषणम् ॥

तत्त्वसागरसंहितायामपि ।

द्वादश्येकादशी यत्र सङ्गता विद्धयाधिप ।
तामुपोष्य ततः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

नारद ।

द्वादश्येकादशी यत्र द्वादशी परतोऽपि च ।
द्वादश्यां पारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

ब्रह्मपुराणेऽपि ।

द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्॥

पद्मपुराणेऽपि।

एकादशीकलायुक्ता येन द्वादश्युपोषिता।
किं तस्य बहुभिर्यज्ञैरश्वमेधादिभिर्नृप॥
एकादशी द्वादशी च तत्र सन्निहितो हरिः।
उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति।

तत्त्वसागरसंहितायाम्।

द्वादश्येकादशी यत्र सकृत्तः चिदशाधिप।
तामुपोष्य ततः कुर्यात् त्रयोदश्यान्तु पारणम्॥
द्वादश्येकादशी यत्र परतो न त्रयोदशी।
उपोष्या द्वादशी भक्त्या द्वादश्यामेव पारणम्॥

किञ्चैवं विविधविषये द्वितीयैव ग्राह्या दशमीविद्धाया नि-
षेधात्।

तथाह स्कन्दपुराणे।

तस्मात् सर्वप्रयत्नेन पूर्वविद्धां विवर्जयेत्।

नारदीयपुराणे।

पूर्वविद्धा न कर्त्तव्या तृतीया षष्ठ्यपि द्विज।
अष्टम्येकादशीयुता धर्म-कामार्थमोचिभिः॥

अत्रैकादश्यादय परविद्धा उपोष्याः प्रतीयन्ते विशेषनिषेधस्य
शेषाभ्यनुज्ञाविषयत्वात्, अन्यथा नोपोष्या इति वाच्यं, न तु पूर्व-
विद्धा नोपोष्येति परविद्धैकादश्युपोष्येति वचनाच्च।

तथाच सुमन्तु-सनत्कुमारौ ।

तृतीयैकादशी षष्ठी चतुर्थी च चतुर्द्दशी ।
अमावास्याष्टमी चैव ता उपोष्याः परान्विता ॥

नारदपुराणे ।

एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्द्दशी ।
तृतीया च चतुर्थी च अमावास्याष्टमी तथा ।
उपोष्याः परसंयुक्ता नोपोष्याः पूर्वसंयुताः ॥

पैठीनसिः ।

एकादशी तथा षष्ठी शुक्लपक्षे चतुर्द्दशी ।
तृतीया च चतुर्थी च ता उपोष्याः परान्विता ॥

यदा च दशमीविद्धैकादशी द्वादश्यां च क्षियमाणा विद्यते रात्रिशेषे च त्रयोदशी तदा गृहस्थव्यतिरिक्तानां तत्रोपवासः ।

तथाच पद्मपुराणे ।

द्वादशीसंयुता तत्र भवत्येकादशी अल्पा ।
दिनक्षयेऽपि सा पुण्या दशम्या न कथञ्चन ॥
त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥

नारदीयपुराणादौ ।

एकादशी द्वादशी च रात्रिशेषे(१) त्रयोदशी ।
उपवास प्रशस्तोऽसौ यद्येव पूज्यते तिथि ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।

---

(१) रात्रिशेषेति ग० ।

त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
य उपास्ते सदा भक्त्या स नरो दिवि मोदते ॥
एकादशीकलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यान्तु यो भुङ्क्ते तस्य विष्णुः प्रसीदति ॥
एकादशी द्वादशी च विशेषेण त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

कूर्मपुराणे ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ॥
उपवासः क्रतशतसमः सर्वपातकनाशनः ।
एकादशी द्वादशी च विशेषेण त्रयोदशी ॥

इति पुराणात् ।

एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
दिनक्षयेऽपि सा पूज्या दिवसस्यापरेऽहनि ॥

स्कान्देऽपि ।

द्वादशीसंयुता यत्र भवत्येकादशी तिथिः ।
दिनक्षयेऽपि सा पूज्या न दशम्या कथञ्चन ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
सोपोष्या च प्रयत्नेन महापुण्यविवर्द्धनी ॥

भविष्यत्पुराणे ।

एकादशी कलाप्येका द्वादशी सकलं दिनम् ।

त्रयोदशी उषःकाले वैष्णवन्तद्दिनत्रयम् ।
सर्वपापहरं प्रोक्तं तदुपोष्यमिति स्मृतिः ॥

स्कन्दपुराणे ।

एकादशी कलायुक्ता द्वादशी क्षीयते यदा ।
उपोष्या च महापुण्या सर्वपापहरा तिथिः ॥

सुमन्तुः ।

एकादशी कलायुक्ता द्वादशी लुप्यते यदा ।
एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः ॥

अस्मिन् विषये पुत्रवतो गृहस्थस्य उपवासो निषिद्धः ।

तथा पद्मपुराणे ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
तत्र्यहस्पृगहोरात्रं नोपोष्यं सुतार्थिभिः ॥

कूर्मपुराणे ।

एकादशी द्वादशी च विशेषेण त्रयोदशी ।
उपवासं न कुर्वीत पुत्र-पौत्रसमन्वितः ॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम् ॥

इत्यपि तद्विषयं । तत्रैवोपवासनिषेधे सति तस्मिन्नेव दिने उपवासप्रत्याम्नायत्वेन नक्तं विहितं वृद्धशातातपेन ।

दशम्येकादशीविद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते इति ॥

प्रचेताः ।

एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
तत्र स्नानं जपं होमं कृत्वा ब्राह्मणवाचनम् ।
निर्वर्त्त्य द्वादशीकर्म ततो नक्तेन वर्त्तयेदिति ॥

विष्णुधर्मोत्तरे ।

एकादशी यदा विद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

स्कन्दपुराणे ।

एकादशीकला यत्र द्वादशी च क्षयं गता ।
तत्र नक्तं प्रकुर्वीत नोपवासो गृहाश्रमे ॥

पद्मपुराणे ।

एकादशीकलायुक्ता द्वादशी क्षीयते यदा ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

ननु "नोपोष्यं तत्सुतार्थिभिरिति" सुतार्थिनां पुत्रकामानां उपवासप्रतिषेधोऽयं न निष्कामाणां गृहस्थानां कामान्तरयुक्तानां वा । तद्वत् अयं पुत्रकामप्रतिषेधः किन्तु,—

त्रिस्पृगेकादशी यत्र तत्र सन्निहितो हरिः ।

इत्यादिवचनैरविशेषेण सर्वेषां तत्रोपवासे प्राप्ते "नोपोष्यं तत्सुतार्थिभिरित्यनेन निवार्य्यते पुरुषविशेषमात्रस्य, तथापि सुतार्थिशब्देन गृहस्थमात्रमभिधीयते, तस्य सुतार्थित्वं सम्भवतीति न स्वरूपेण सुतार्थिता यत्र विद्यते ।

दिनक्षयेऽपि सा पुण्या यतीनामुत्तमा तिथिः ।

इति यतेरेव तादृश्या उत्तमत्वाभिधानात् । तत्र यतिशब्दः

किं सुतार्थित्वरहितपरः सुतार्थिशब्दो वा सुतार्थित्वसम्भावनापर-इति सन्देहे सुतार्थिशब्द एव सम्भावनापरो ग्राह्यः ।

उत्तरान्तु यतिः कुर्य्यात्पूर्वामुपवसेद्गृही ।

इति गृह्यसमाचस्य ।

उपवासं न कुर्वीत पुत्त्र-पौत्त्रसमन्वितः ।

इत्यनयोर्वाक्ययोरेकार्थत्वाय पुत्त्रसंबन्धिमात्रपरतैव युक्ता, पुत्त्र-सम्बन्धित्वञ्च गृहस्थादिना न सम्भवतीति तदापेक्ष, एतावतैवास्य चरितार्थत्वे किमिति न विध्यनयोरिमो वाक्यभेदापादकोविशेषोऽङ्गीकर्त्तव्य ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् न स्याद्दिनत्रय ।

तस्मिन् स्नान जपो होमो नोपवासो गृहाश्रमे ॥

इति गृह्यसमाचस्य द्विनत्रये निषेधदर्शनात् ।

अन्ये त्वाहुः ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।

उपवास न कुर्वीत पुत्त्र-पौत्त्रसमन्वितः ॥

इति वचनात् सुतार्थिभिरिति सामान्यसुतार्थित्वं पुत्त्र-पौत्त्र-समन्वित इति विशेष उपसङ्ख्रियते, पुत्त्रवतापि विष्णुमायां नक्तं वा कार्य्यं भक्त वा किञ्चिद्भक्षयित्वोपवास कर्त्तव्य ।

उपवासनिषेधे तु भक्ष किञ्चित्प्रकल्पयेत् ।

न दुष्यत्युपवासे च उपवासफल भवेत् ॥

इत्यादिवचनानुरोधात् ।

अपरे त्वाहु । अथोपसंहारमनुमन्यामहे न तु भक्षप्रकल्पनं

"उपवासनिषेधे तु भक्तमित्यस्य सामान्यशास्त्रस्यैकादश्यादिमध्यनक्त-विधायकविशेषशास्त्रेण बाधात् । तेन भक्तप्रकल्पनमन्यत्र वेदितव्यं तच्चानेकप्रकारं ।

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यं ।
यत्पञ्चगव्यं यदि वापि वायुः
प्रशस्तमथोत्तरमुत्तरञ्चेति ॥

अन्ये त्वाहुः यदेतन्नक्तविधानं तत्सकामविषयं "नोपवासो गृहाश्रमे इति काम्योपवासः प्रतिषिध्यते ।

एकादशीकला यत्र द्वादश्यनुगता भवेत् ।
लुप्यते द्वादशी तत्र नोपवासः फलार्थिनाम् ॥

इति वचनात् नित्योपवासनिषेधादिकल्पप्रसङ्गाच्च । तथा पुत्र-वद्गृहिविषये निषेधमपेक्ष्य पाक्षिकविधानन्तदितरविषये नित्य-वद्विधानमिति वैरूप्यं । काम्ये तु फले रागादेव प्रवृत्तेर्निषेधो घटत इति विकल्पो नास्ति विधिव्यापारवैरूप्यं, पर्युदासे च सम्भवे मुख्ये सति उपवासे च *निषिद्धे सकामः किं कुर्यादित्यपेक्षितेन* नक्त-विधानं उचितं भवति ।

एवञ्च ।

एकादशीकलाप्येका द्वादशी यत्र लुप्यते ।
तत्रोपवासं कुर्वीत निष्कामो विष्णुतत्परः ॥

इति वचनमुपपन्नं भवतीति तदयुक्तं । पापपरिहारकाम-विष्णुसायुज्यकाम-मुमुक्षूणामप्युपवासविधानात् ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिभिर्मिश्रा तिथिः प्रोक्ता सर्वपापहरा स्मृता ।
उपवासः कृतस्तस्यां महापातकनाशनः ॥
द्वादश्यान्तु यदा भूप दिनत्रयतिथिर्भवेत् ।
तदोपवासः कर्त्तव्यो विष्णुसायुज्यमाप्नुयादिति ॥

सायुज्यमिच्छतेति क्वचित्पाठः ।

एकादशी द्वादशी च राज्यन्ते च त्रयोदशी ।
उपवासः कृतश्च मोक्षमेव प्रयच्छतीति ॥

तथा ।

दिनक्षये तु कर्त्तव्य उपवासो मुमुक्षुभिः ।

इति काम्यस्यापि विहितत्वेन विकल्पस्य तदवस्थत्वात् तथा हि विधेः प्रवृत्तिलक्षणा परिसृतेति, तस्मात्पूर्वोक्तमेव न्याय्यः ।

अन्ये त्वाहुः। यदत्र नक्तविधानं तदसामर्थ्यविषयं । न च विद्धाविद्धयोरप्यनेकत्वप्रसङ्गादेतद्विद्धाया नैमित्तिकविशेषविधानं तदसमर्थविषये असमञ्जसं स्यादिति वक्तव्यं। विद्धायां ह्येकभक्तादिरूपोपवासप्रत्याम्नायोदुर्घट एव प्रतीयते रात्रावुपवाससङ्कल्पविधानात् ।

विद्धोपवासेऽशक्तश्च दिनव्यक्ता समाहितः ।
रात्रौ संपूजयेद्देवं सङ्कल्पञ्च तदाचरेत् ॥

नक्तस्याप्यायनस्यापि स एव कालोयुक्तः एकभक्तकालस्त्वसौ न भवति ।

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तस्माद्दिवैव हि ॥

इति तस्य दिवैव विहितत्वान्नक्तमेव तदानीं भवतीति सम्यगुक्तमसमर्थविषयमिदमिति युक्तं सामान्यतो दिनत्रयेऽस्मिन् दिनत्रयविशेषे च पुत्त्रवतो गृहस्थस्योपवासनिषेधादनियमेन भक्तकल्पनायां प्राप्तायां नियमविधानार्थत्वेनाकाङ्क्षितसमर्पणेनार्थवत्त्वेनैव वाक्यस्योपपत्तेः तेन यथोक्तमेव साधु। एतेनैतन्निरस्तं।

एकादश्यां तथा नक्तं द्विजः कुर्याद्यथाविधि।
मार्गशीर्षशुक्लपक्षादारभ्याब्दं विधीयते॥

इति वाराहपुराणोक्तविषयं द्वादशीत्रये नक्तविधानं एकादशीचेत्युदाहृतवचने पूर्वोपवासविधायकविरोधादिति सामान्यशास्त्रस्य विशेषशास्त्रेण बाधात् उपवासनिषेधे चाकाङ्क्षितसमर्पणेन वाक्यस्योपपत्तेः उत्पत्तिशिष्टैकादशीबाधप्रसङ्गाच्च।

कलाप्येकादशी यत्र द्वादश्यनुगता भवेत्।
दिनत्रयेऽपि सा पुण्या यतीनामुत्तमा तिथिः॥

अत्र च यतिग्रहणं नैरर्थ्यार्थं। तथा सति पुत्त्रवतो गृहस्थस्य प्राप्त्यभावेन निषेधानुपपत्तेः। तेन यतीनां वैशिष्ट्यमात्रप्रतिपादनपरमेतत् तदयुक्तं 'उत्तमेति' दिनत्रयेऽपीत्यपिशब्देन दिनत्रयमन्तरेणापि यतीनां द्वितीया चोत्तमेति दर्शितं।

यत्तु पाद्मस्कन्दवचनं।

पूर्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी।
एकादशीन्तु कुर्वीत क्षीयते द्वादशी यदीति॥

तच्छुद्धिकाम-विष्णुसायुज्यकाम-मुमुक्षुव्यतिरिक्तविषयं उदाहृतवाक्यानुरोधात्।

अविद्धानि निषिद्धैश्चेत् लभ्यन्ते दिनानि तु।
मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः।
तदर्द्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः॥

'निषिद्धैः' दशम्यादिभिः, अविद्धान्येकादश्यादिदिनानि।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
उपवासं न कुर्वीत पुत्र-पौत्रसमन्वितः॥
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
त्र्यहस्पृगहोरात्रं(१) नोपोष्यं सत्सुतार्थिभिः॥

इत्यादिवचनादुपोष्यत्वेन न लभ्यन्ते न स्वरूपेण चेत्यर्थः। यत्तु केचित् द्वादशीदिनक्षये दशमीविद्धां नित्यामेकादशीं गृहस्थः कुर्वीतेति वचनव्याख्यानं कृतं तदेवंविधसङ्कोचे कारणाभावादयुक्तं। विद्धैकादश्युपवासप्रतिषेधवचनान्युदाहरिष्यन्ते।

तत्र वाशिष्ठसंहितायां।

दशम्येकादशी यत्र तत्र नोपवसेद्बुधः।
अपत्यानि विनश्यन्ति स्वर्गलोकं न गच्छति॥

ब्रह्मपुराणे व्रतखण्डे।

उपोष्यैकादशीं मोहाद्दशमीशेषसंयुता।
न नरः सुखमाप्नोति इह लोके परत्र च॥
धृतराष्ट्रेण मैत्रेयः पृष्टः प्राह नराधिपं।

---

(१) 'त्र्यहस्पृगहोरात्रं' इति द्वितीयचरणं छन्दोभङ्गदोषदुष्टं, परन्त्वत्र त्रिदिनस्पृगहोरात्रं इत्येव पाठः समीचीनं भाति।

यदर्थन्ते वियोगोऽभूत् पुत्राणां भार्य्यया सह ॥
पूर्वन्त्वया सभार्य्येण दशमीशेषसंयुता ।
कृता चैकादशी राजंस्तस्येदं कारणं मतं ॥
तस्मादेकादशी युक्ता दशम्या नरसत्तम ।
न कर्त्तव्या प्रयत्नेन निष्फला द्वादशी यदि ॥
यथा चैकादशी राजन् द्वादशी च तथा नृणां ।
समाप्ता तत्फला प्रोक्ता व्रतेऽस्मिंश्चक्रपाणिनः ॥
न चाहं स्वैरिणी भार्य्या न चाहमपतिव्रता ।
न चेह कलुषं येन किं पापं त्वन्यजन्मनि ॥
रामपत्न्या वचः श्रुत्वा वाल्मीकिर्मुनिपुङ्गवः ।
चिरन्ध्यात्वा महाराज तामुवाचेदृशं वचः ॥
दशम्येकादशीं पूर्व्वां समुपोष्य जनार्द्दनः ।
त्वयार्चितस्त्वया देवि तस्येदं कर्मणः फलं ॥
उपोष्यैकादशी शुद्धा नोपोष्या दशमीयुता ।
तत्र क्रतुशतं पुण्यं यथोद्दिष्टन्तु पारणं ॥
वशिष्ठः समुवाचेदं दृष्टोमान्धातृभार्य्यया ।
दशम्येकादशी देवि पुरा चोपोषिता त्वया ॥
तेन ते कर्म्मणा चेह सभर्त्तृसुत-बान्धवैः ।
वियोगं समनुप्राप्ता सत्यं विद्धि पतिव्रते ॥
यानि कानीह पापानि त्रैलोक्ये सम्भवन्ति वै ।
तेषां स्थानं दशम्या वै सहैवैकादशी मता ॥
सप्तजन्मार्ज्जितं पुण्यं नश्यते नात्र संशयः ।

दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशश्च परे तु नरकं व्रजेत् ॥
नोपोष्या दशमीविद्धा यदा चैकादशी तिथिः ।
तामुपोष्य नरो मोहात् पुण्यं वर्षशतोद्भवं ॥

तथा ।

दशम्याश्चैव विद्धायामेकादश्यामुपोषितः ।
तस्यायुः क्षीयते नित्यं नारदोऽहं ब्रवीम्यदः ॥
सायं कृतं विनश्येत सन्ततिश्च नचान्यथा ।
दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात् परे तु नरकं व्रजेत् ॥

तथा ।

मुहूर्त्तेनापि संयुक्ता दशम्येकादशी तथा ।
तामुपोष्य नरो मोहात् सुकृताद्धर्मात हीयते ॥

कूर्म-नारदीयपुराणयोः विष्णुरहस्ये च ।

दशमीशेषसंयुक्तामुपोष्यैकादशीं किल ।
संवत्सरकृतेनेह नरोधर्मेण मुच्यते ॥
दशमीशेषसंयुक्ता गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

ब्रह्मवैवर्त्तेऽपि ।

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य नश्येद्द्वादशवार्षिकमिति ॥
यैः कृता दशमीविद्धा विधामोहेन मानवैः ।

ते गता नरकं घोरं युगान्येकोनविंशति(१) ॥

सौरधर्मोत्तरे ।

एकादशीमुपोष्यैव द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

भविष्यपुराणे ।

पूर्वविद्धां पलार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्मनस्त्राणं चतुर्षु नियमेष्वपि ॥
नोपोषितव्यं नक्तं च नैकभक्तमयाचितम् ।
नन्दायां पूर्वविद्धायां कुर्यादैश्वर्यमीहते ॥

ब्रह्मवैवर्त्तेऽपि ।

दशम्या यत्र शेषस्तु एकादश्यां भवेद्यदि ।
सा तिथिः सकला ज्ञेया दशमीकालमिश्रिता ॥
गङ्गोदकस्य सम्पूर्णं यथा भाण्डघटं भवेत् ।
सुराबिन्दुसमायुक्तं तत्सर्वं मद्यतां भवेत् ॥
रसाढ्यं विषं रौद्रं च पिबेत्सुखधीर्नरः ।
दशमीशेषसंयुक्तां च उपोष्यति सुव्रती ॥
एवं ज्ञात्वा मुनिश्रेष्ठ दशमीशेषसंयुता ।
वर्जिता मुनिभिः सर्वैर्वासुदेवसमीप्सुभिः ॥

नारदीयपुराणे ।

लववेधेऽपि विप्रेन्द्र दशम्येकादशी यदा ।
सुराया बिन्दुना स्पृष्टं गङ्गाम्भ इव सन्त्यजेत् ॥

---

(१) युगान्येकोनसप्ततीति ख०॥

श्रुतौ पञ्चगव्यञ्च दशम्या दूषितान्त्यजेत् ।
तथा ।
एकादशीमुपोष्य स्यादसजो दशमीयुता ।
दशमीमिश्रिता हन्ति फलमेकादशीकृत ॥
कौशिक ।
दशम्येकादशीविद्धा सुरैश्वर्य्यविनाशिका ।
पैठीनसि ।
नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा तच नोपवसेद्बुध ॥
वार्यायणि ।
भूतविद्धा त्वमावास्या दशम्येकादशीयुता ।
दशाविद्धा तु यामघ हन्ति पुण्य पुराकृत ॥
गारुडपुराणेऽपि ।
विद्धामेकादशी विप्रास्त्यजन्येता मनीषिण ।
तस्यामुपोषितोयाति दारिद्र्य दु खमेव च ॥
स्कन्दपुराणे ।
द्वापरान्ते तु गान्धारी कुरुवशविवर्द्धिनी ।
करिष्यति च सेनामीर्मूढभावाच्छिखिध्वज ।
तेन पुत्रशत तस्या नाशमेष्यत्यसशयम् ॥
एव नन्दा न कर्त्तव्या दशमीसयुता विभो ।
कला काष्ठापि या चैव दृश्यते दशमी विभो ।
एकादश्यां तु सेनामी कर्त्तव्या न कथञ्चन ॥

एतानि वाक्यानि विद्धैकादश्यनुज्ञात्यतिरिक्तविषयाणि ।
कौर्म्मेऽपि ।

अरुणोदयवेलायां विद्धा काचिदुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥

भविष्यपुराणेऽपि ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
न तत्रैकादशी कार्य्या धर्म-कामार्थनाशिनी ॥

तथा ।

अरुणोदयकाले तु दशमी यदि दृश्यते ।
पापमूलं तदाज्ञेयमेकादश्यामुपोषणम् ॥

तथा ।

अरुणोदये दशमी मन्थमात्र भवेद्यदि ।
दूष्यं तत्प्रयत्नेन वर्जनीयं नराधिप ॥

नारदीयपुराणे मोहिनीवाक्यं ।
मोहिन्युवाच ।

दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।
तेन स्पृष्टं हरिदिनं तद्धन्मसुराय वै ॥
सूर्य्योदयविहीनं हि दृश्यं दृश्यञ्च लाघव ।
दशम्यन्तं प्रयच्छन्ति स्पृष्टं हरिदिनेन हि ॥
अग्निविहारकाले तु वन्ध्योपस्थानके तथा ।
प्रातः सन्ध्योपकरणे पचिसवेष्टने तथा ॥
विरामे सर्व्वदेवानां मार्ज्जनीयदने तथा ।

द्वारोद्घाटनवेलायां स्नानकाल उपस्थिते ॥
यतीनां दीक्षितानाञ्च वादित्रनिनदे कृते ।
पञ्चाकाला दशम्या च एकादशीसमन्विता ।
मदीयतां निवासार्थं यद्यस्ति मयि चेद्दया ॥
न याचे भोदयं देवा न याचे तद्दिनं हरेः ।
वैनतेयोदयं मह्यं दीयतां सुरसत्तमाः ॥
दशमी या सुविद्धा देवाः क्षीणा या सर्पशत्रवे ।
विश्रमार्थञ्च तुभ्यं(१) एतत्पुण्यं मदीयतां ॥

वसिष्ठ उवाच ।

तन्मोहिन्या वचः श्रुत्वा सुराः सर्वे महीपते ।
सुमन्त्र्य सुचिरं कालं दिगम्बरपुरोगमाः ॥
धर्मसंस्थापनायैव वैकुण्ठध्वंसनाय च ।
पाषण्डिनां हि वृद्ध्यर्थं पापसंजननाय वै ॥
उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा ।
पुरस्कृत्य च तमेन्द्रं तथान्यांश्च सुरान्नृप ।
ऊचुस्ते मोहिनीं देवा लोकसंक्षयणाय वै ॥
दत्ता मोहिनि ते स्थानं प्रत्यूषसमयान्वितम् ।
दुष्टं हरिदिनोपेतं दशम्यां प्राक्तनेव हि ॥
तेन लाभेन भुञ्जन्तु नैतद्दैवेन मानवे ॥

अरुणोदयवेलायां परित्यजेदिति भावः । अरुणोदयोऽपि पुराणे दर्शितः ।

---

(१) एष्यर्थमिति ग० ।

चतस्रोघटिका प्रातररुणोदय उच्यते ।
यतीनां स्नानकालस्तु गङ्गाम्भःसदृशः स्मृतः ॥ इति ॥

यतीनां स्नानकाले सूर्य्यनेत्रोदयादर्वागपि घटिकाचतुष्टय-मरुणोदय इत्युक्तं भवति । एतान्यरुणोदयनिषेधवाक्यान्यपि यदा द्वादश्यां किञ्चन्मात्रापैकादशी दृश्यते त्रयोदश्यां किञ्चन्मात्रा द्वादशी तदा परित्याज्येत्येवपराणि द्रष्टव्यानि, काम्यैकादशीव्रत-विषयाणि वा ।

गारुड़पुराणे ।

सन्दिग्धैकादशी नाम वर्ज्जयेद्धर्मकाङ्क्षितः ।
पुत्र-राज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
अरुणाभ्युदिते काले यामिन्यैकादशी यदा ।
मधुभैकादशी नाम वर्जयेद्धर्मतत्परः ॥
पुत्र-पौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
आदित्योदयवेलायामारभ्य षष्टिनाडिका ।
सम्पूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः ॥
पुत्र-पौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

काण्वोऽपि ।

अरुणोदयवेलायां दशमी यदि सङ्गता ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

पुराणेऽपि ।

अरुणोदयवेलायां दशमी यदि सङ्गता ।
रविवार्द्धमाचापि द्वादशीमुपवासयेत् ।
तत्र मासुगत पुण्य चयोदश्यान्तु पारणम् ॥

गोभिल ।

अरुणोदयवेलायां दशमी यदि सङ्गता ।
सपुत्रैकादशी तां तु मोहिन्या दत्तवान् विभु ॥

विष्णु ।

उदयादुपरिविद्धा दशम्येकादशी यदा ।
दानवेभ्य प्रीणनार्थं दत्तवान् पाकशासन ॥
तस्मात्सर्वप्रयत्नेन सम्पूर्णैकादशीं त्यजेत् ।
द्वादश्यामुपवासोऽत्र चयोदश्यान्तु पारणम् ॥

नारदीयपुराणेऽपि ।

शङ्कायाविरोधेन सन्देहो जायते यदा ।
द्वादशी तु तदा ग्राह्या चयोदश्यान्तु पारणम् ॥
दिनक्षये च सम्प्राप्ते उपोष्या द्वादशी भवेत् ।
दशमीशेषसंयुक्तां न कुर्वन्ति कदाचन ॥

एतानि काम्यैकादशीविषयाण्येव । तथाच तेषु तेषु वाक्येषु धर्मकाह्नित-पुत्र पौत्रसमृद्ध्यर्थमित्येवमादीनि फलानि श्रूयन्ते । यदा अरुणोदयविद्धोपवासनिषेधवाक्यानि वैष्णवविषयाणि, शैवादीनान्नैकादश्युपवासाधिकारे तत्रोपवासे नास्ति दोष ।

तथाच भविष्यत्पुराणे ।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम् ॥

काम्यैकादशीनिर्णयः ब्रह्मवैवर्त्ते एकादशीप्रकरणे अरुणोदयवेधनिन्दायां शौनक उवाच ।

व्रतमेकादशीं सूत विशेषेण प्रकीर्त्तय ।
सर्वपापप्रशमनं कृते यस्मिन् भवेन्नृणाम् ॥
कीदृश्येकादशी कार्य्या कथं कार्य्या कथं हरिः ।
पूजनीय फलं किञ्च भवेत्तत्सूत कीर्त्तय ॥
उद्यापनविधानञ्च कार्य्यं व्रतफलाप्तये ।
तत्तथा सूत सर्वं हि वद सम्प्रति तत्त्वतः ॥

सूत उवाच ।

इदमर्थं पुरा शूरो वसुदेवपिता मुनिम् ।
कृष्णद्वैपायनं व्यासं पप्रच्छ तव यन्मतम् ॥

शूर उवाच ।

कथिता वैष्णवा धर्म्मा व्यास मुक्तिकरा नृणाम् ।
प्रधानं तत्र सर्वेषां त्वयोक्तं द्वादशीव्रतं ॥
कीदृशी सा कथं कार्य्या किंफला कस्य पूजनं ।
विधेयमेतत्तो ब्रूहि सर्वशास्त्र हि मे मति(१) ॥

सूत उवाच ।

शृणुष्व प्रश्नवाचामुत्तरं यदुकुलोद्भवम् ।
व्यासो यथावत्तदिह वच्मि तच्छृणु शौनक ॥

---

(१) मत इति क० ।

व्यास उवाच ।

सुपुण्यैकादशी शूर यदि शल्यविवर्जिता ।
कर्त्तुं निरयपाताय शल्यया साधुपोषिता ॥
अरुणोदयवेलायां या स्तोकापि तिथिर्भवेत् ।
पूर्णा इत्येव समाख्या सम्भूता सोदयं विना ॥
तत्र चेद्दशमीवेधोऽतिवेधो वापि जायते ।
तदाविधाय वा योगो रक्षणं सफलं भवेत् ॥
यद्वैतद्दशमीशल्यं सम्यगाख्यं द्वादशीदिने ।
यद्दत्तं शोधयित्वा तु सम्यक् पञ्चार्ककोविदैः ॥

ततः शल्या परिवर्जनीया
धर्मार्थ-कामेषु बुधैर्मनुष्यैः ।
विहीनशल्यापि विवर्जनीया
यदापनोदह्निमुपैति यद्वः ॥

शल्यं वेध इति प्रोक्तं पुराणार्थविचक्षणैः ।
तत्त्याज्यं दूरतो गाङ्गं सुराबिन्दुयुतं यथा ॥
चतस्रो घटिकाः प्रातररुणोदय उच्यते ।
यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥
तदादिवेधरहितामुपोष्यामाहुरापरीम् ।
विपरीतं परित्याज्यमाधवस्य दिनत्रयम् ॥
नन्दा प्रातर्भवेद्भद्रा मध्ये प्रान्ते भवेज्जया ।

द्वैवं दिने चयं पूर्णा नन्दा भद्रेति चासुरं ।
त्रयोदशीदिने प्राप्ते द्वादशी लभ्यते यदा ।
द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणे ॥
त्रयोदश्यां दिने प्राप्ते द्वादशी कलया भवेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
विशेषवाक्यनियमैर्द्वादशी लङ्घिता नृणां ।
करोति धर्महरणमस्नाते च सरस्वती ॥
नन्दापूर्णां तथाप्राप्तां तस्माद्भद्रामुपावसेत् ।
पूर्णादिने च भद्राणां नन्दां सूर कथञ्चन ॥
ये तु मिथ्याभिधानेन मोहयन्ति नरा भुवि ।
विमूढा पापिनस्तेषां रौरव शरणं चिरं ॥
अध्यापयन्त्यविज्ञाय पण्डितम्मन्यबुद्धयः ।
कारयन्त्यबुधा लोके द्वादशीं दशमीयुतां ॥
ये कारयन्ति कुर्वन्ति द्वादशीं दशमीयुतां ।
शुद्धये तन्मुखं वीक्ष्य सूर्यदर्शनमाचरेत् ।
नमो नारायणायेति जपेद्वा द्वादशाक्षरं ॥
कृते पापे तु तापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥
वराका किन्नु जानन्ति प्राणिनां कार्य्यचिन्तनम् ।
धिग्विमूढधियः पापान् धर्मविघ्नकारिणः ॥
द्विषितो भगवान् तेन द्वादशी दशमीयुता ।
कृता येन द्विजश्रेष्ठ सम्यगुक्तं मया तव ॥

संस्थितो भगवान् कृष्णो द्वादशीस्पर्शमुपागतः ।
तस्मादसंशयं त्याज्या द्वादशी दशमीयुता ॥
भस्मा शरीरं देवस्य भद्रा ख्याता यशोऽव्ययः ।
तस्मात्सर्वं त्यक्त्वाऽस्मात्मानमनूपवासयेत् ॥
द्वयोर्विवदतोः श्रुत्वा द्वादशीं समुपोषयेत् ।
पारणन्तु त्रयोदश्यां एष शास्त्रविनिर्णयः ॥
द्वादशी दशमीयुक्ता यच शास्त्रे प्रतिष्ठिता ।
न तच्छास्त्रमहं मन्ये यदि ब्रह्मा स्वयं वदेत् ॥
कुर्वतामिव पापानि घोरं पश्यत यादृशं ।
कारयन्तीं नरान्मूढान् नरकान् प्रापिनः कथं ॥
द्वादशी दशमीविद्धा गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥
अर्द्धरात्रेऽपि वेधाद्विद्दशम्या वेध दृश्यते ।
अरुणोदयवेलायां नावकाशो विचारणे ॥
कपालवेध इत्याऽऽचार्या ये हरिप्रिया ।
न तन्मम मतं यस्मात् त्रियामा रात्रिरिष्यते ॥
तस्मात्तदेव वदन दैविकं धर्मसाधनं ।
सुखप्रसङ्गरतस्यागतस्य वेधस्य निश्चितः ॥
सूत उवाच ।
कीदृशश्च भवेद्वेधो योगो विप्रेन्द्र कीदृशः ।
वेध-योगौ समाचक्ष्व तयोर्दृष्टमुपोषण ॥
भीष्म उवाच ।

चतस्रो घटिकाः सूर अरुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्योदये बुधैः ॥
यातुधानप्रस्त योगे महावेधन्तु वाध्कले ।
अभाशुरस्यातिवेधे मोहिनी वेधलेखिनी ॥
दशम्या मान्तविद्धं हि यथद्दुष्टं हरेर्दिनम् ।
मत्पुरा निपुधेर्दत्त मोहिन्यै तद्विपर्ययात् ॥
परसैकादशीत्यागो न कार्य्यो दशमीयुता ।
सूर मे निश्चयः सोऽयं न हता द्वादशी शुभा ।
दशमीशेषसंयुक्ता किं पुनर्वेऽभाषिते ॥

इत्थं विचार्य्य निपुणै मह विद्धैकादश्यां द्वादश्यामभावे द्वादश्याश्च त्रयोदश्यामभावेऽपि "एकादशी दशाविद्धा पक्षद्वयौ विवर्ज्जयेत् । पक्षहानौ स्थिते सोमे कुर्वीत दशमीयुताम्" ॥ इति श्रुतेरमावास्यायां पौर्णमास्यां वा प्रतिपदि वृद्धावेऽपि शुद्धा द्वादश्येव "तिथिहानौ प्रयोक्तव्या समस्तैकादशी यदि । उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणम्" ॥ इत्यनुसारादुपोष्या, विद्धोपवासश्चापि विवर्ज्जनीया, "यद्यद्यतो वृद्धिमुपैति पक्ष" इति । यद्यपि स्मार्त्त *तथापि एकादशीं दशाविद्धामित्यस्य "समस्तैकादशी यदीत्यस्य* च विशेषणस्यान्यथानुपपत्त्या विद्धेतरशब्दस्य चात्यान्तात्सवापित्वेमा-

युपपत्तेः "अविद्धानि निषिद्धेषु लभ्यन्ते दिनानि तु। मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्येवैकादशीतिथिः" ॥ इत्यविद्धाप्राप्तिनिमित्तविद्धानुग्रासत्युक्तघटिकादशकापेक्षयाभ्यधिकविद्धापि तिथिर्वर्जनीयेत्येव व्याख्येय।

एवैव च।

दशमी पूर्णमासस्य सम्पूर्णा मुहूर्त्ते यदि।
द्वितीयेऽह्नि नृपश्रेष्ठ सा भवेत्पक्षवर्द्धिनी ॥

इत्याख्यायते।

अधोक्षीकिन्याद्यष्टभेदनिरूपणं।

ब्रह्मवैवर्त्ते।

एकादशीव्रतं सर्वव्रतानां प्रवरं स्मृतं।
तदहं सम्प्रवक्ष्यामि समाकर्णय साम्प्रतं ॥
विशोधनमिदं पुंसां शुद्धकार्य्येष्वेव परं।
तत्स्वरूपं श्रुतं तीर्थस्नानादप्यधिकं विदुः ॥
एतत्सारमिदं तत्वमिदं सत्यमिदं व्रतं।
मापयितव्यमिदं सम्यगदेकादश्युपोषणं ॥
विशेषश्च विशेषो द्वादशीषु द्विजोत्तम।
भवन्त्यष्टौ परिख्यातास्ता शृणुष्व यथोदिताः ॥
उन्मीलनी वञ्जुली च त्रिस्पृशा पक्षवर्द्धिनी।
जया च विजया चैव जयन्ती पापनाशिनी।
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज ॥
तिथियोगेन जायन्ते चतस्रश्चापराश्वथा।

सप्तजन्मार्जितं पापं प्रशमयन्ति ताः ॥
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा ।
उन्मीलनी समाख्येह कथिता पापनाशिनी ॥
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् ।
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी ॥
अरुणोदय आद्या स्यात् द्वादशी सकलं दिनम् ।
अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा हरेः प्रिया ॥
कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनी ।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत् ॥
पुष्य-श्रवण पुष्याद्य-रोहिणीसंयुता क्रमात् ।
उपोषिता समफला द्वादश्योऽष्टौ पृथक् पृथक् ॥
सहस्रमपि सा पूर्वा विशोधयति भार्गव ।
वञ्जुलीति द्वितीया सा हत्यायुतविनाशिनी ॥
महापापानि चत्वारि शोधयेत् त्रिस्पृशा तथा ।
कुरुतेऽशेषकलुषविच्छेदं पक्षवर्द्धिनी ॥
जया जयन्तु विजया प्रेतमोक्ष तथापरा ।
जयन्ती नरकच्छेदमपि दुष्कृतकारिणाम् ।
अष्टमी तु समाख्येह महापातकनाशिनी ॥
तावत्पापानि देहेषु दुःसहा यमयातना ।
कुर्वन्ति प्राणिनां यावन्नैतदुन्मीलनीव्रतम् ॥
यच्च दीयते दानं हूयते यच्च वह्निषु ।
सर्वं तदक्षयं प्राहुरुन्मीलिन्यां महर्षयः ॥

वञ्जुली वासरे यत्र संप्राप्ते गरुडध्वजः ।
स्वस्थानादस्य धामैत्य कुरुते वाञ्छितं श्रियं ॥
वञ्जुलीविमुखं मर्त्यमालोक्य रविनन्दनः ।
कुरुते संविदं साकं चित्रगुप्तेन हर्षितः ॥
नयमेष्यति मन्दात्मा विष्णुमतबहिष्कृतः ।
अयं ममेति तत् पुण्यं मार्जयाद्य पुराकृतं ॥
शिरोभिर्भिन्नराशीनां मार्येऽद्यैव प्रधावते ।
यान्ति विष्णुपराः स्वर्गमपि दुष्कृतकारिणः ॥
द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः ।
तासामेकापि विद्धा चेत् हन्ति पापं पुराकृतं ।
तदेव विपरीतेन हन्ति पुण्यं पुराकृतं ॥
आयाति सहसा पुण्यप्रसारेण हरेर्दिनं ।
प्रत्यक्षे कुरुश्रेष्ठ विशेषणसंयुतं ॥
महाव्यानमपि त्यक्तं यदि पुण्यबहिष्कृतैः ।
तदेतदमृतं प्राप्तं कराद्विगलितं क्षणात् ॥
एकादशीस्वरूपेण धर्मः साक्षाज्जनार्दनः ।
तच्छरीरघ्नमाकुर्वन्वञ्जुलीलिखितं गतं ॥
विहाय वञ्जुलीं पापाः करिष्यन्ति परान्तिथिं ।
न च राजन् विजानन्ति प्राणिनः मौरचक्षुषः ॥
स्वार्थविनिर्णयान् धिक्तान् नीचान् पण्डितमानिन ।
ये गर्त्तायतनं सर्वप्राणिनां कारयन्त्युत ॥
ये कारयन्त्यविबुधाः शास्त्रमुक्ता हैतुकाः ।

प्राणिनस्तत्कृतं पापं तेषां गच्छत्यसंशयं ॥
तेषां निरभिमानैस्तु भूत्वा शास्त्रानुसारिभिः ।
यथावदुपदेष्टव्यं न भाव्यं कलुषाशये ॥
सर्वव्रताद्याचरणं सर्वतीर्थाभिषेचनं ।
सर्वदानप्रदानञ्च समं स्यादन्मुलीव्रतं ॥
तथाश्वदानं विप्राय विधाय श्रद्धयान्वितं ।
प्राप्नोति मनुजो विप्रोऽकल्मषं लब्धसिद्धिं ॥
लक्ष्मी-नारायणं देवं सौवर्णं तत्र पूजयेत् ।
यथाशक्त्यश्वदानञ्च दत्वा वैकुण्ठमाप्नुयात् ॥
हन्ति त्रिपौरुषं पापं वञ्जुली भक्तितः कृता ।
स एव सर्वशास्त्रार्थं सर्वबुद्धिमतां मता ॥
हितं सर्वं समीचीनं यद्वञ्जुल्यामुपोषणं ।
उपवासं यथा श्रद्धा दानं ब्राह्मणपूजनं ।
विधाय वञ्जुलीस्त्रैव पुरुषो याति सद्गतिं ।
एवमुन्मीलिन्याद्यष्टैकादशीमाहात्म्यं विस्तरेण निरूप्योपसंहृतं ।

एवं समस्तवरधर्मगुणाश्रितं वै
चैकादशीव्रतमिदं निखिलं हेतुयुक्तं ।
शास्त्रान्वितो हरिरतस्तु हरिप्रियं यः
शुद्धं पुनः प्रकुरुते लभते स मुक्तिम् ॥

इत्युन्मीलिन्याद्यष्टनिरूपणं ।

अपरे त्वाहुः । परतोद्वादशीसद्भावे सति सर्वथा शुद्धद्वादश्या-
मुपवासस्तदभावे तु विद्धैकादश्यामिति ।

तथाच श्रुतिः।

एकादशीं दशाविद्धां पक्षद्वौ विवर्जयेत्।
पञ्चदशौ स्थिते सोमे लङ्घयेद्दशमीयुतां।

'लङ्घयेत्' उपवसेदित्यर्थः।

वायुपुराणे।

एकादशी दशाविद्धा द्वादशी च परेऽहनि।
द्वादशी तु तदोपोष्या धर्म्म-कामार्थसाधनीति॥

तदयुक्तं परतो द्वादश्यभावेऽपि शुद्धद्वादश्यामुपवासविधानात्।

तथाच कूर्म्म-पद्मपुराणयोः।

एकादशी दशाविद्धा परतो द्वादशी न चेत्।
तदोपोष्या द्वादशी तु त्रयोदश्यान्तु पारणम्॥

अन्यान्यप्येवंविषयाणि वचनानि प्रागदर्शितानि। न च परशुद्धैकादशीविषयमिदं वचनजातं, "तदोपोष्या द्वादशीति वचनात्। तथा हि द्वितीयैकादशी ग्राह्येति वक्तुमुचितं न तु द्वादशीति। केचित्तु सन्यासिविषयमिदं वचनजातमित्याहुः, तन्मन्दं प्रमाणाभावात्। न च "शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। पारणन्तु त्रयोदश्यामिति वचनं प्रमाणं। न ह्येतेन वचनेन शुद्ध-द्वादश्युपवासः सन्यासिनां विधीयते, किन्तु मुमुक्षूणां। न च सन्यासिनामेव मुमुक्षुतेति नियमः। किञ्च क्षत्रियादेरपि शुद्ध-द्वादश्युपवासो विधीयते "क्षत्रियैर्वैश्यैस्तथा शूद्रैः किमन्यच्छ्रोतुमर्हसीति वचनेन, तच न शूद्रादेः सन्यास सम्भवति। किञ्च यतीनामपि विद्धैकादश्युपवासो विधीयते।

एकादशी दशाविद्धा परतोऽपि न वर्द्धते ।
ग्रहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

इति मत्स्यपुराणवचनेन ।

अन्ये त्वरुणोदयविद्धैकादश्युपवासविषयः, तदूर्ध्वविद्धविषयास्तन्निषेधाः, शुद्धद्वादश्युपवासविषयस्त्वेत्याहुः । तदसत् । अरुणोदयविद्धैकादश्युपवासनिषेधानां प्रागुदाहृतत्वात् ।

अन्ये तु यदा विद्धैकादशीद्वादश्याश्च श्रवणश्च भवति तदा विद्धैकादश्युपवासनिषेधाः शुद्धद्वादश्युपवासविधयश्च । विद्धैकादश्युपवासविधयस्तु एकादश्यन्तरविषया इत्याहुः । एकादश्यामविद्धायां श्रवणे प्राप्ते शुद्धद्वादश्युपवासविधानात् । तथाच नारदीयपुराणे ।

एकादश्यामविद्धायां सम्प्राप्ते श्रवणे तथा ।
उपोष्या द्वादशी पुण्या उभयोर्दैवतं हरिः ॥

स्कान्दपुराणे ।

मासत्रयादेऽप्युपस्थिते इति चतुर्थपादः पठ्यते ।

कूर्मपुराणे ।

एकादशी दशाविद्धा श्रवणश्च भवेत्तथा ।
उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

किञ्चैवविधैकादश्युपवासप्रकरणपाठोऽनर्थकः स्यात् ।

अपरे विद्धैकादश्युपवासोद्दिनत्रयविषयः अन्यत्र शुद्धद्वादश्युपवासोद्दिनद्वयविषयः । अन्यत्र शुद्धद्वादश्या दिनत्रयस्पृशे देवैनोपोष्या "दशमीयुतेति वचनादित्याहुः । तदप्ययुक्तं एकादशीदिनत्रयेऽपि शुद्धद्वादश्युपवासविधानस्य दर्शितत्वात् ।

अन्ये तु "विद्धाप्येकादशीत्यादिवचनजातं परतो द्वादश्यभावे सति शुद्धैकादशीप्रशंसार्थं । परतोद्वादशी न चेद्विद्धापि ग्राह्या किमुताविद्धापि । तथाच मूलान्तरकल्पनाभावेऽपि विद्धैकादश्युपवासनिषेधवचनानामसङ्कोचश्च भवेत् विष्णुरहस्याद्युपक्रमोपसंहारपर्य्यालोचनया चायमेवार्थः प्रतीयत इत्याहुः । तत्र "दिनक्षयस्तेन द्वैधीतिवचनं कथमिति चिन्त्यम् ।

केचित्तु परतोद्वादशीसद्भावे सति द्वितीयैकादश्युपवासं सर्वेषां मान्यमित्याहुः ।

तथाच भविष्यत्पुराणे ।

तृतीयेऽहनि सम्प्राप्ते द्वादशी यदि दृश्यते ।
द्वितीयैकादशीं कुर्य्यात् प्रथमान्तु विवर्जयेत् ॥
द्वादश्येकादशी युक्ता द्वादशी परतो यदि ।
द्वादशीमिश्रितोपोष्या तिथिरेकादशी तदा ॥
द्वादश्येकादशी यत्र द्वादशी परतो भवेत् ।
तत्रोपोष्या द्वितीया तु द्वादश्यामेव पारणमिति ॥

तदयुक्तं ।

परतो द्वादश्यभावे द्वितीयैकादश्युपवासविधानात् ।

तथाच ब्रह्म-वाराह-स्कन्दपुराणेषु ।

दशमीशेषसंयुक्ता यदि वृद्धिमती भवेत् ।
तदोपोष्या द्वितीया स्यात् त्रयोदश्यान्तु पारणम् ॥

स्कान्दपुराणे ।

द्वादश्येकादशी यत्र संयुता[1] मुनिसत्तम ।

(१) सङ्गतेति क० ।

तामुपोष्य नरः कुर्य्यात्त्रयोदश्यान्तु पारणम् ॥

कूर्म्मपुराणे ।

एकादशी कलाप्येका परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणमिति ॥

न च परतोद्वादशीसद्भावविषयाण्येतानि वचनानि "त्रयोदश्यान्तु पारणमिति वचनात्, तदा द्वादश्यां पारणमिति वाच्यं न तु त्रयोदश्यामिति ।

केचित् सन्न्यासिविषयमिदं वचनजातं ।

यदा तु दशमीविद्धा द्वादशीमपि संस्पृशेत् ।
एकादशी तदोपोष्या द्वितीया मोक्षकाङ्क्षिभिः ॥
एकादशी दशाविद्धा परतोऽपि भवेद्यदि ।
तदोपोष्या द्वितीया तु विष्णुसायुज्यमिच्छता ॥

इति वचनादित्याहुः । तदसद्, न हीदं वचनद्वयं सन्न्यासिनां द्वितीयैकादश्युपवासमाह, किन्तु मुमुक्षूणां । न च सन्न्यासिनामेव मुमुक्षा, गृहस्थादेरपि तत्सम्भवात् । ननु च यानि त्रयोदशीपारणपराणि तेष्वेव "तत्र क्रतुशतं पुण्यं इत्यादिफलश्रवणं, तानि काम्योपवासाभिप्रायाणि, विद्धोपवासविधिपराणि वा नित्योपवासविषयाणीति व्यवस्था किं न स्यादेवं ।

यदि दैवात्तु संभिद्येदेकादश्यां तिथिक्षयं ।
तत्र क्रतुशतं पुण्यं द्वादशीपारणं भवेत् ॥
द्वादश्येकादशी यत्र द्वादशी परतोऽपि वा ।
द्वादशीपारणं कुर्य्यात् क्रतुकोटिफलं लभेत् ॥

इति द्वादशीपारणेऽपि फलश्रवणाविशेषात्।

किञ्च।

सर्वैवैकादशी कार्य्या द्वादशीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्य हि पारणम्।
पारणन्तु त्रयोदश्यां निष्कामाणां विमुक्तिदम्॥

इत्यादिषु त्रयोदशीपारणस्यापि नित्यतावगमाच्च। अतोऽत्र फलश्रुतिः अपि अर्थवाद इति मन्तव्य।

अपरे त्वाहुः।

विद्धैकादश्या निर्णये वस्तु कीदृग्वेध इति तावत्कथ्यम्।

अर्द्धरात्रात्परा यत्र एकादश्यास्तु लभ्यते।
तत्रोपवासनं कर्त्तुं न चेच्छेद्दशमीकला॥

इति स्कान्दालोचनयार्द्धरात्रादूर्द्ध्वं दशमीसम्बन्धस्य वेधत्वावगमात्।

आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता॥

इति स्मृते सूर्य्योदयात् प्राग्घटिकाचतुष्टये दशमीसम्बन्धस्य वेधत्वावगमात् "सूर्य्योदयस्पृशा त्याज्या दशम्या गर्हिता सदेति स्कान्दालोचनया च सूर्य्योदये दशमीसम्बन्धस्य वेधत्वावगमात्, सूर्य्योदयात् प्राग्दशमीसम्बन्धस्य वेधत्वे तदूर्द्ध्वकालीनस्य सुतरां वेधत्वसिद्धेः "सूर्य्योदयस्पृशा त्याज्येति वाक्यानर्थक्यप्रसङ्गाद्वेधकत्वे वा तद्वेधकत्वाभिधायकवाक्यविरोधप्रसङ्गात्।

अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयम्।
अतिवेधो द्विघटिकः प्रभासन्दर्शनाद्रवेः।

महावेधोऽपि तत्रैव दृश्यतेऽर्केण दृश्यते ॥
या तिथिः सूयते राजन् प्रातर्वेधावलोकिनी ।
स वेध इति विज्ञेयो योगः सूर्योदये स्मृतः ॥

इति चातुर्विध्यस्याप्यालोचनाय विषयतारतम्याद्दोषतारतम्य-माभाति । तदुक्तं कर्माङ्गकालदोषस्य पुरुषे दोषानापादकत्वात् कर्मणश्च स्वसाध्यफलसाधकत्वातिरिक्तदोषाभावादल्पवेधेऽपि च कर्म-वैगुण्यात् फलासिद्धेः कर्मदोषतारतम्यायोगात् ।

दशमीशेषसंयुक्तां न तु कुर्यात् कथञ्चन ।
गान्धार्या पुरा दत्ता दशम्याः शेषसंयुता ॥
उपोषिता प्रमादेन प्रायश्चित्तञ्चरेत् द्विजः ।
प्रायश्चित्तमकुर्वाणस्तत्फलेन विनाशितः ।
स गच्छत्यन्धतामिस्रं नरकं भयदारुणम् ॥
अज्ञानात् यदि वा मोहात् कुर्वन्नेकादशीं नरः ।
दशमीशेषसंयुक्तां प्रायश्चित्तमिदं भवेत् ॥
तच्च कृच्छ्रं नरश्चीर्त्वा गाञ्च दद्यात् सवत्सिकाम् ।
सुवर्णस्याक्षिकं देयं तिलद्रोणसमन्वितम् ॥

इति विहितेन प्रायश्चित्तेन परिहृते वैगुण्ये बहुविधेऽपि सम-ग्रफलसिद्धेः ।

यातुधानमतं योगे महावेधस्तु वाष्कले ।
जम्भासुरस्यातिवेधे मोहिनी त्रिलवेधनी ॥

इति जम्भासुरभाषितया निन्दितातिवेधमात्रविषयत्वेनास्य प्रायश्चित्तस्य वेध-महावेधादौ तदनुसारेण प्रायश्चित्ताल्पत्व-महत्त्वस्य-

कल्पनात् प्रायश्चित्तवैषम्येण वैगुण्याख्यकर्मदोषवैषम्यावगतेस्तारतम्यं युक्तमिति चेत् । न ।

दशमीशेषसंयुक्ता न तु कार्य्या कथञ्चन ।

इति सामान्यविषयनिषेधानुसारात् "जम्भस्येयं पुरा दत्तेति निन्दार्थवादस्य जम्भहरणस्योपलक्षणत्वावगमे प्रायश्चित्तविषयव्यवस्थापनाशक्तेः ।

प्रायश्चित्तन्तु, कर्त्तव्यं प्राप्यर्थन्तु व्रतस्य वै ।
निश्छिद्रं जायते येनद्धर्मसन्तानमेव च ॥
ब्राह्मणान् भोजयेत् त्रिंशच्चास्य दद्यात्सवत्सिकां ।
सुवर्णमाषकं देयं तिलद्रोणमथापि वा ॥

इति स्मृत्यन्तरे च विषयविशेषाप्रतीतेः स्मृतस्य च प्रायश्चित्तस्य विशिष्टविषयकल्पनेऽपि विषयान्तरेऽपि तदेव प्रायश्चित्तमस्त्वेवेति निर्णेतुमशक्यत्वात् वैगुण्यवैषम्यकल्पनया प्रायश्चित्तवैषम्यकल्पना प्रायश्चित्तवैषम्यकल्पनया च वैगुण्यवैषम्यकल्पनेत्यन्योन्याश्रयतापत्तेर्न प्रायश्चित्ततारतम्याद्दोषतारतम्यकल्पनं युक्तं । वेधातिवेधसद्भावे-धयोर्माख्यत्वात्तुर्विध्यस्तेव । "एतानि वै दश यज्ञायुधानीति यज्ञायुधव्यपदेशस्य "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं यातीत्यर्थवादौपयिकत्ववत् "यातुधानप्रत योग इत्यादिनिन्दार्थवादौपयिकत्वसम्भवात् तद्बलादपि दोषतारतम्यकल्पना युक्ता, तस्मात्सर्ववाक्योपपत्त्यर्थमेव वक्तव्य, "सूर्योदयस्पृशा ह्येषेत्याच सदेति श्रवणात् सूर्योदये दशमीस्पर्शस्य नित्ये काम्ये चैकादशीव्रते गर्हितत्वप्रतीतेः "दशमीशेषसंयुक्तेत्यत्रापि संयुक्तशब्दश्रवणात् "योगः सूर्योदये सत-

इति योगयपदेशस्य सूर्योदये दशमीसम्बन्धस्य निषेधप्रतीतेः।

दशम्याः शल्यमादाय यदोदेति दिवाकरः।

तेन स्पृष्टं हरिदिनन्तत् जम्भासुरस्य तु॥

इतिवाक्यान्तरे च सूर्योदये दशमीसम्बन्धस्य जम्भासुरभागित्वेन निन्दनात् "जम्भेयं पुरा दत्तेति निन्दाया अपि तद्विषयत्वापत्तेः सूर्योदये दशमीसम्बन्धस्यैव निषिद्धत्वादेषोऽवसीयते। ततः प्राचीनानान्तु सम्बन्धानां मध्ये।

अरुणोदयकाले तु दशमी यदि दृश्यते।

पापमूलं सदा ज्ञेयं एकादश्युपवासिनाम्॥

इति निन्दाश्रवणेऽप्यरुणोदये तु दशमीसम्बन्धस्य।

अरुणोदये तु दशमीगन्धमात्रं भवेद्यदि।

त्याज्यं तत् प्रयत्नेन वर्जमीय नराधिप॥

इति निषेधश्रवणेऽपि च।

दशमीशेषसंयुक्तो यदि स्यादरुणोदय।

वैष्णवेन तु कर्त्तव्य तद्दिनैकादशीव्रतं॥

इतिस्मृतेर्निषेधस्य विष्णुसायुज्यकामाख्यवैष्णवविषयत्वावगमात्।

उदयात् प्राक्त्रिघटिकाव्यापिन्येकादशी यदा।

सन्दिग्धैकादशी नाम वर्ज्जयेद्धर्मकाङ्क्षिभि॥

इति च।

वीरः शक्तिमतां श्रेष्ठो धर्माधर्मविदुत्तम।

इति धर्मशब्दस्य "विष्णुनामसुणाठायनेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति सम्बलित्वाद्धर्मशब्दवाच्यतयावगतेन यज्ञेन

आदित्योदयवेलायामारभ्य षष्टिनाडिका ।
सम्पूर्णैकादशी नाम तत्रैवोपोष्य हरिप्रिये ॥

इत्येतत् "महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यत इति स्मृत्य-न्तरालोचनया,

रविचकाद्वैस्यापि दशमी श्रूयते यदि ।
तदापि द्वादशी ग्राह्या चयोदश्यान्तु पारणं ॥

इति स्मृत्यन्तरालोचनयाप्यङ्गीदित्योदये दशमीसम्बन्धवर्जनोऽर्थः "यथादीनि च धर्मस्य फलानीति व्यवस्थितमिति मीमांसावार्त्तिका-भिधानात् धर्मफलशब्दस्य "यदीच्छेद्विपुलान् भोगान् इत्येकादश्युप-वासाख्यधर्मफलतया स्मृतिभोगवाचित्वावगते तत्तत्कामविषय,धर्म-काङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां सम्प्रचलोकमविद्धार्थताभ्युपगमे महदोदयवेधप्राप्त्यधर्मसमाप्तिघटिकाद्वयवेधे समाप्तस्यापि धर्मस्या-निरूपविद्धिरुद्धसूर्योदयवेधेऽतिशयितस्यापि धर्मस्य प्रतिबन्धादिव-शात् फलावाप्तिरित्यापत्तेर्विपरीतवेधतारतम्यप्रसङ्गात् प्रथमोवेधो द्वितीयोऽतिवेध तृतीयोमहावेध इति व्यपदेशा निरालम्बना स्युः, समाप्तस्यापि कर्मणः श्रेयस्करत्वाख्यधर्मत्वासिद्धावपि धर्मकाङ्क्षिशब्देन विवक्षिताया धर्मफलावाप्तिशब्देनापि तस्या एव विवक्षाप्रतीतेर्मंक्षवे-धव्यवस्था निरालम्बना स्यादतोऽस्मदुक्तैव धर्मकाङ्क्षि-धर्मवृद्धि-धर्म-फलाप्तिशब्दव्याख्या युक्ता सूर्योदयोत्तरकालदशमीस्पर्शनिषेधवचनम्-कालदशमीस्पर्शनिषेधानामपि सर्वविषयत्वाभ्युपगमे तु धर्मकाङ्क्षा-दिशब्दानर्थक्यापत्ति । "यस्मिन्नेकादशी नाम वर्ज्या स्याद्धर्मकाङ्क्षि-भिरित्येतदुत्तरस्य "पुत्तराक्षसहत्यर्थं द्वादश्यामुपवासयेद्वियस "सम्प्र-

दशम्येकादशी नाम वर्जयेद्धर्मवृद्धय इत्येतदुत्तरस्य च "पुत्र-पौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्य "सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिरित्येतदुत्तरस्य च "पुत्रपौत्रसमृद्ध्यर्थं द्वादश्यामुपवासयेदित्यस्यारुणोदयादिविद्धैकादशीविषये फलान्तरकामस्य द्वादश्युपवासविधायकत्वात् न तद्ग्रन्थेनारुणोदयादिविद्धैकादशीनिषेधानां फलान्तरकामविषयत्वं शङ्कनीयं। "पापमूलं सदा ज्ञेयमित्यादौ निन्दामात्रत्वात्स्कन्दवाक्यस्य विष्णोरियमाज्ञेत्यपि च व्याख्यातं प्रकरणात्तदाश्रवणमात्रेणारुणोदयकाले दशमीस्पर्शनिषेधस्य सर्वविषयत्वापत्तिः। "अरुणोदयवेलायां विद्धा काचिदुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेदित्यपि निन्दामात्र।"सूर्योदयस्पृशा ह्येषा दशमी गर्हिता सदेत्यस्य तु निषेधार्थत्वात् 'अविद्धानि निषिद्धैर्येत् न लभ्यन्ते दिनानि तु।मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥इत्यादिविरोधापत्तेरेकादश्या द्वादश्या परतो वा सत्त्वे चेत्येव सदाचारव्याख्यानयोगात्सर्वनित्य-काम्यैकादश्युपवासविषयत्वव्याख्यानयोगात्सर्वं नित्य-काम्यैकादश्युपवासविषयत्वमस्यैव युक्तं, "उदयादूर्ध्वविद्धा तु दशम्यैकादशी यदा। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन इति स्मृत्यन्तरदर्शनात् सूर्योदयोत्तरकालस्पर्शिनी सूर्योदयस्पृगाशब्देनोक्तेति गम्यते।तस्मात् सूर्योदयोत्तरकालदशमीस्पर्श एव सर्वविषयो वेध, अरुणोदयघटिकाद्वयाद्यसूर्योदयकालान्तु दशमीस्पर्शा यथाक्रमं विष्णुसायुज्यमुक्तिकामैकादश्युपवासविषया एवेति सिद्धं। अर्द्धरात्रात्परा दशमी कस्या भण्यते तत्रोपवासं नारभेतेत्येव प्रथमारम्भविषयतया व्याख्येय तदेतदयुक्तं। तत्र यत्तावदुक्तं कर्माङ्गकालदोषस्य पुरुषदोषापादकत्वादिति तद-

युक्तं कर्माङ्गकालनिषिद्धकाले कर्मानुष्ठाने सर्ववाक्येष्वपि पुरुषदोषस्यैवाभिधानात् बाधकाभावाच्च तत्त्यागानुपपत्तेः। यदपि वैष्णवशब्देन विष्णुसायुज्यकामोऽभिधीयत इत्युक्तं तदपि न विष्णुप्रीतिकामविष्णुभक्तानामेकादश्युपवासविनाशस्याभिधानात्। धर्मकाङ्क्षि-धर्मवृद्धि-धर्मफलशब्दानां लोकप्रसिद्धार्थत्यागमयुक्तं, वेधतारतम्यं च पुरुषदोषतारतम्यादुपपद्यते, अरुणोदयविद्धैकादशीनिषेधानां फलाफलकामविषयत्वमप्येकवाक्यतावशादवगम्यते, "पापमूलं सदा ज्ञेयमित्यत्र सदाशब्दस्य "सूर्योदयस्पृशा सैषा दशमी गर्हिता सदेति च विद्धानुपपद्यतिरिक्तविषयत्वोपपत्तेः न चशब्दस्य विष्णुपरत्वेन क्लिष्टकल्पनया व्याख्यानं युक्तं तस्मादाचार्योक्तमेव साधीयः।

अथैकादशीद्वादश्युपवासकालनिर्णयः।

यदैकादशीमिश्रायां द्वादश्यामेकादशीव्रतं प्राप्नोति द्वादशीव्रतञ्च तदैकेनोपवासेनैकादश्युपवासो द्वादश्युपवासश्च सिध्यति। यदा त्वेकादश्यां पृथगुपवासः सम्पूर्णत्वेन प्राप्नोति द्वादश्यां च पृथक् तदोपवासद्वयं कर्त्तव्यं "एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत्। न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः"॥ इतिविधानात्। "उभमासे व्रती पूर्वं नैव कुर्याद्व्रतान्तरमिति समाप्तिश्च पारणेन। तदभावे उपवासद्वयेऽपि क्रियमाणे पूर्वव्रतस्यासमाप्तेर्विधिलोपः प्राप्नोति। सोऽप्येकदेवतात्वेन परिहृतोभवत्येव। "एवमेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशय"॥ एतदुपवासद्वयासमर्थं प्रत्युच्यते। यदैकस्मिन्नुपवासे असमर्थस्यैकभक्तादि विहितं तद्दोपवासद्वयासमर्थं प्रति किन्तु वक्तव्य। एकादश्युपवासेन नित्यं सर्वेषां सर्वदा हितं तथा

द्वादश्युपवासमप्यत्र काम्यमन्यदेव सर्व्वेषां सर्व्वदा विहितं, मार्कण्डेय-प्रद्युम्नसंवादे मार्कण्डेयेन पूर्व्वमेकादश्यामुपवासो द्वादश्यां पारणमित्युक्तानन्तरं द्वादश्यामुपवासं त्रयोदश्यां पारणमित्युक्तं। तद्विषयं वचनद्वयं श्रुत्वा प्रद्युम्न उवाच।

नोपोष्या द्वादशी राजन् पुराणे परिकीर्त्तिता।
तथापि मुनिशार्दूल प्रागुक्तं तत्पृच्छ्य मे॥
पारणे या कृता ब्रह्मन् द्वादशी केशवप्रिया।
उपोष्या या कृता ब्रह्मन् तथा ह्येकादशी शुभा॥
द्वादश्यां पारणं कार्य्यमेकादश्यां हि सत्तम।
पुराणविहिते मार्गे निषिद्धाचरणे कथम्॥

इति पृष्टो मार्कण्डेय उवाच।

शृणु भूपाल सकलं यत् पृष्टं साधुना त्वया।
जगद्धितमिमं दुष्टैर्हेतुवादकथान्विते॥
द्वादश्यां निर्णये[1] भूप मूढमत्र जगत्त्रयम्।
अत्र मूढा महीपाल मायया ये नरा पुरा॥
ते नष्टास्तेषु न स्थैर्य्यं रहस्यं याति भूमिप।
यमलेखेन देहेषु पीतसेवौषधं यथा॥
ये शुद्धात्मेषु तथापि स्थिरत्वं धर्म्मसम्पदाम्।
त्रिपथा त्रिदशेशानां कोषध स्थिरता व्रजेत्॥
चतुर्द्दशीमुपोषन्ति शिवभक्ता नराधिप।
न तेषां गमनं भूप नरके दृश्यते क्वचित्॥

---

(१) द्वादश्या निर्णय इति ख०।

अपरे गोपतौ केचिद्भक्तिं कुर्व्वन्ति ये नराः ।
सप्तमीं समुपोषन्ति भक्तियुक्तास्तथैव च ।
न चापि कुत्सितं तेषां मया दृष्टं नराधिप ॥
पौर्णमास्युपवासेन ब्रह्मलोकं गता नृप ।
अपरे त्वष्टमीं सम्यक् शिवभक्तिसमाश्रयाः ॥
कलिपङ्कं परित्यज्य नराश्चैव नरोत्तम ।
एकादशी च सर्वेषां द्वादशी चक्रपाणिनः ।
तस्माच्च द्वादशी भूप नोपोष्या क्रियते जनैः ॥
एषा निःश्रेयसी भूप फलभोगविवर्ज्जिता ।
मोक्षात्मिका पुरा प्रोक्ता द्वादशी प्रवरा तिथिः ॥
एकादशी शरीरन्तु पुरुषो द्वादशी स्मृता ।
द्वादश्यामुपवासेन सिद्धा भूप सहस्रशः ॥
चक्रवर्त्तित्वमतुलं सम्प्राप्ता अवनीश्वराः ।
चतुर्दशैते सञ्जाता अखिलाश्चक्रवर्त्तिनः ॥
विष्वक्सेनास्ते महावीर्या दुष्टदैत्यनिवर्हणाः ।
द्वादश्यामुपवासेन सिद्धा भूप सहस्रशः ।
चक्रवर्त्तित्वमतुलं सम्प्राप्ता अचला श्रियः ॥
उपोष्य द्वादशीं शुद्धां यावज्जीवमतान्विताः ।
चक्रवर्त्तित्वमापन्ना भुक्त्वा भोगान् सुखानि वै ॥
कुवलाश्वो भवान् गाधिर्वैरिसञ्जीनलः पृथुः ।
मरुतो भरतश्चैव कार्त्तवीर्यश्च हैहयः ॥
मान्धाता सगरो रामः ककुत्स्थो नहुषस्तथा ।

उपोष्य द्वादशीं पुण्यां अपराश्च विवर्ज्य च ।
भुक्त्वा स्वर्गसुखान्येते चक्रवर्त्तिसमामनाः ॥
अभकानां महीपाल द्वादश्यां समुपोषणे ।
सप्तभिः सप्तभिर्युक्ताः संसिद्धिं परमां गताः ॥
पुरुकुत्सो महीपालो द्वादश्यां समुपोषणे ।
सिद्धिज्ञतः परित्यज्य कर्मबन्धं दुरासदम् ॥
मान्धाता यौवनाश्वश्च द्वादश्यां समुपोषणे ।
संग्रामे निधनं प्राप्य संप्राप्तः परमं पदम् ॥
शाकुन्तलो महीपालो दौष्यन्तिरपराजितः ।
द्वादश्यामुपवासेन गतस्त्वैष्णवं पदम् ॥
वैन्यः पुरूरवा भूप पालयित्वा धरातलम् ।
धरणीधरमभ्यर्च्य द्वादशीषु सदा पुनः ।
गतस्तु वैष्णवं लोकं दाहप्रलयवर्जितम् ॥
एते राजर्षयो भूप द्वादश्यां समुपोषणे ।
सिद्धिं परमिकां प्राप्ता ये द्विजास्तान् शृणुष्व मे ॥
याज्ञवल्क्यस्तु रैभ्यस्तु माण्डव्यः कौशिको मुनिः ।
भरद्वाजस्तथा कण्वः कुम्भयोनिस्तपोनिधिः ॥
अष्टाशीतिसहस्राणां ऋषीणामूर्ध्वरेतसाम् ।
प्रयान्ति स्यन्दनाये तु निमिरारेर्जनाधिप ॥
ते सर्वे परमां सिद्धिं द्वादश्यां समुपोषणे ।
मया सह गता भूप कथन्ते संशयो भवेत् ॥
द्वादशीपारणं राजन् हरिमुद्दं प्रकीर्त्तितम् ।

निरापराधं लोकेऽस्मिन् शृणु वैष्णववल्लभम् ॥
तस्मात् भूप न सन्देहः कर्त्तव्यो द्वादशीं प्रति ।
विशेषफलदा प्रोक्ता द्वादशी पापनाशिनी ॥

इत्युपसंहारेऽभिहितम्, अतोऽत्रैवैकादश्युपवासव्रतात् द्वादश्युपवासव्रतमस्तीति सर्वमनवद्यम् ।

अन्ये त्वाहुः ।

शुक्ले कृष्णे द्विजश्रेष्ठ द्वादशी-श्रवणान्विते ।
द्वादश्यामुपवासस्तु त्रयोदश्यान्तु पारणम् ॥

इत्यादिस्मृतिभिः श्रवणान्वितद्वादश्युपवासविधानेऽपि तत्रैकादश्युपवासकार्य्यापत्तिप्रमाणाभावात् ।

पूर्व्वमेव हि व्याख्याता द्वादशी श्रवणान्विता ।
उपोष्यैकादशीं पश्चात् द्वादश्यामुपवासयेत् ॥

इति स्मृतेरेकादश्यामप्युपवासः कार्य्यः । तेन श्रवणद्वादश्यामेवोभयत्रोपवास इति । तदसत् । श्रवणद्वादशीव्यतिरेकेणापि द्वादश्यां यावज्जीविकाम्योपवासविधानात् तस्माद्यथोक्तमेवाश्रयणीय ।

इत्येकादशी-द्वादश्युपवासनिर्णयः ।

---

## अथैकादशीव्रते नक्तादिकालनिर्णयः ।

भविष्यत्पुराणे द्वादशीकल्पे ।

पूर्णाविद्धा पलार्द्धेन नन्दा पूर्णामपि त्यजेत् ।
षष्ठीञ्चैवात्मसन्तानं चतुर्थं नियमेष्वपि ॥

नोपोषितव्यं नक्तञ्च नैकभक्तमयाचितं ।
नन्दायां पूर्णविद्धायां क्रियेतैश्वर्य्यमीप्सता ॥
एकादशीयुता यस्मात् द्वादश्याः समुपोषणे ।
नक्ते चायाचिते नित्यमेकभक्ते तथार्च्चने ॥
नक्तं वायाचितं वापि नैकभक्तमुपाहरेत् ।
द्वादशीसहितं दानमनर्थं हरिवासरे ॥
इत्येकादशीव्रते नक्तादिकालनिर्णयः ।

---

## अथैकादशीव्रताङ्गपारणकालनिर्णयः ।

तत्र कूर्म्मपुराणे ।

एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्य्यात् द्वादशद्वादशीक्षयात् ॥

विष्णुरहस्ये ।

पारणन्तु कर्त्तव्यमुपोष्यैकादशीमिह ।
त्रयोदश्यां नरैर्नित्यं धर्म्मवृद्धिमभीप्सुभिः ॥
द्वादश्यनुगता हन्ति द्वादशद्वादशीफलम् ।
धर्म्मापत्य-धनायूंषि त्रयोदश्यान्तु पारणे ॥

स्कन्दपुराणेऽपि ।

एकादशी यदा दृश्या द्वादशीलवमात्रिका ।
द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणे ॥
यदा भवति चाल्पात्तु द्वादशी पारणे दिने ।
उषःकाले द्वयं कुर्य्यात् प्रातर्मध्याह्निकं तदा ॥

नारदीयपुराणे ।

अल्पायामथ राजेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रिया कार्य्या दान-होमादिसंयुता ॥
त्रयोदश्यान्तु शुद्धायां पारणे पृथिवीपते ।
सर्वयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम् ॥
एतस्मात् कारणाद्विप्र प्रत्यूषे स्नानमाचरेत् ।
पितृतर्पणसंयुक्तामप्या दृष्ट्वैव द्वादशी ॥
महाहानिकरा ह्येषा द्वादशी लङ्घिता नृपा ।
करोति धर्महरणं भ्रष्टेव सरस्वती ॥

कूर्मपुराणे ।

कलार्द्धमथ वापि द्वादशी न व्यतिक्रमेत् ।
व्यतिक्रान्ता द्वादशी तु हन्ति पुण्यं पुराकृतम् ॥

भविष्यपुराणे ।

यो द्वादशीमतिक्रम्य पारणं कुरुते नरः ।
द्वादशाब्दकृतं तस्य तत्क्षणादेव नश्यति ॥

स्कन्दपुराणे ।

द्वादशीं यस्त्वतिक्रम्य त्रयोदश्यान्तु पारणम् ।
करोति तस्य भक्षन्ति द्वादश्यो द्वादशैव तु ॥

देवीरहस्ये ।

द्वादशीं समतिक्रम्य पारणं यः करोति हि ।
स्नान दानादिकं सर्व्वं निष्फलं तस्य जायते ॥

अथ ।

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु ॥

इति देवलवचनात् द्वादश्यतिक्रमे न दोष इति शङ्कनीयम् । यत आह नारदपुराणे वशिष्ठः ।

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृतेति ।

यस्मिन् काले पारणं मरणं वा तत्र तात्कालिक्येव तिथिः न पुनः सा तिथिः सकला ज्ञेयेत्येतद्वचनोक्तेत्यर्थः । यत्र पुनस्त्रयोदश्यां पारणकालपर्य्याप्ता किञ्चन्मात्रैव द्वादशी तत्र पद्मपुराणोक्तम् ।

त्रयोदश्यां यदा राजन् द्वादश्यास्तु कला भवेत् ।
सा तिथिः सकला चेति वशिष्ठः प्राह धर्म्मवित् ॥

स्कन्दपुराणे ।

कलार्द्धं चैव नापि द्वादश्याः समतिक्रमेत् ।
एकादशीमुपोषित्वा तत्र धर्म्मफलं भजेत् ॥

तथा ।

द्वादशीतिथिशेषे स्यात् परतश्च त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥

एतदपि पारणपर्य्याप्तद्वादशीविषयं । एवं च यानि त्रयोदशी-पारणे निषेधपराणि द्वादशीपारणनियमविधिपराणि वा तानि सर्व्वाणि त्रयोदश्यां द्वादशीसम्भवविषयाणि ।

तथाच पद्मपुराणे ।

यदि किञ्चित् त्रयोदश्यां द्वादशी चोपलभ्यते ।
द्वादश्यां पारणे यत्र वर्ज्जयित्वा त्रयोदशीम् ॥

महाहानिकरा ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्म्महरणमस्नातेव सरस्वती ॥
अथवा द्वादशी न स्यात् स्वल्पापि रविसंयुता ।
पारितव्यं त्रयोदश्यां महापुण्यविवृद्धये ॥

अन्यासु गङ्गाद्यासु सरित्सु तीर्थे परस्मिन् तीरे स्नातव्यं सरस्वत्यां तु प्रथमं स्नात्वा परं पारं गन्तव्यं, 'अस्नाता' इति स्नानं यस्याः सा स्नाता कोऽधिकरणे, न स्नाता 'अस्नाता' सरस्वती लङ्घ्यमाना यथा धर्म्महरणं करोति एवं पारणलङ्घिता अतिक्रामिता द्वादशी धर्म्महरणं करोति ।

पुराणात् ।

एकादशी द्वादशी च तत्रोपोष्या इति पक्षम् ।
मुहूर्त्तं द्वादशी प्राप्य त्रयोदश्यां न पारणम् ॥

यानि पुनः ।

कलाकाष्ठामुहूर्त्तं तु यदि चेन्न परेऽहनि ।
द्वादश्यां द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

इति त्रयोदश्यां द्वादश्यसम्भवमनूद्य पारणनिषेधपराणि तानि ।

विद्धाप्येकादशी यत्र परतो द्वादशी न चेत् ।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणे ॥

इत्यादिभिः समानार्थानीत्यनवद्यं ।

अन्ये त्वेवं त्रयोदशीपारणनिन्दा-मासयोर्व्यवस्थामाहुः, गृह-स्थानां त्रयोदशीपारणनिषेधं तथैव च द्वादशीफलहानिलक्षणो-निन्दार्थवादः, त्रयोदशीपारणन्तु यतीनां तथाहि द्वादशीदर्शे-

गृहिणां फलार्थिनां युज्यते, यतयस्तु फलनिरपेक्षाः कर्त्तव्यमिति कर्माचरन्ति। क्रतुशतप्राप्तिपुण्यलक्षणप्रशंसा यतीनामेव, न हि नानाविधानि क्रतुशतफलानि त्रयोदशीपारणाद्भवन्तीत्यत्र प्रमाणं, तस्मात्प्रशंसामात्रमेतदिति। तदसत् तथाहि द्वादश्यां द्वादशीघ्नन्ति गृहिणामित्यस्य कोऽर्थः, न खलु तत विना कर्मभोगेन क्षीयते, तेन द्वादशः स्वरूपेण फलतोवा भवतीति न सम्भवः किन्तु प्रत्यवायफलविभीषिकेयं। यथाहि न गिरा गिरेति ब्रूया-दात्मानमेव तदुद्गातोद्गिरेदिति, न खल्वुद्गातात्मगिरणं प्रत्यक्षा-दिभिरुपलभ्यते, किन्तु गिरापदप्रयोगनिन्देयमिति स्थितं। तथा द्वादशीघ्नत्वनिन्दा यति गृहिणोर्यतेरपि हि नित्य-नैमित्तिक-काम्यानुष्ठानोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्रयोजन तस्मात् द्वादशीवधे स्वल्पोपात्तदुरितक्षयाभावादकरणनिमित्तप्रत्यवा-यापत्ते त्रयोदशीपारणमनुचितमेव यतीनां।

तथाचाह।

नित्य-नैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानञ्च विमलीकुर्वन्नभ्यासेन च पाचयेत्।
वैराग्यपक्वविज्ञानात् कैवल्यं लभते नर इति॥

यदप्युक्तं "विष्णुसायुज्यमाप्नोति यतीनामेवोचितं न गृहि-णामिति। तदप्यसत्। गृहस्थस्यापि यथोचितकर्मानुष्ठानात् मोक्ष-श्रुतेस्तत्र गृहस्थ-मुमुक्षोः कर्माण्युपदिश्यन्ते, श्रूयते च "स एवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते इति।

याज्ञवल्क्यश्च।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रिय ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते इति ॥

अतुग्रतपुण्यप्राप्तिलक्षणा च प्रशस्ता यतिगृहिणो साधारण्येन, तस्मात्तयोर्द्वयोरपारणविधिनिषेधयोस्तथैव व्यवस्थाश्रयणीया । अथै-कादश्यादिधर्मसन्देहे सति येषां वचनमुपादेयं येषाञ्चानुपादेयं ते प्रदर्श्यन्ते विष्णुरहस्ये ।

ब्रह्मोवाच ।

अर्चयन्ति सदा विष्णुं मनोवाक्कायकर्मभिः ।
तेषां हि वचनं ग्राह्यं ते हि विष्णुसमा मताः ॥

कूर्मपुराणे भगवानुवाच ।

सम्पृच्छ्य वैष्णवान् विप्रान् विष्णुशास्त्रविशारदान् ।
चीर्णव्रतान् सदाचारान् तदुक्तं यत्नतश्चरेत् ॥

स्कन्दपुराणे महेश्वर उवाच ।

ये पुराणानि जानन्ति वेतिहासानि तत्त्वतः ।
सदाचारपरा शान्तास्तेषां वचनमौषधम् ॥

पुलस्त्य-सत्यमतौ ।

धर्मेषु निरता ये च धर्मशास्त्रार्थचिन्तकाः ।
वेदशास्त्रविदो ये वै तेषां वचनमौषधम् ॥

भगवान् वेदव्यास ।

वेदवेदार्थतत्त्वज्ञा धर्मशास्त्रार्थचिन्तकाः ।
सदाचारपरा ये वै तेषां वचनमौषधम् ॥

देवीपुराणे ।

ये च न्यायविदः शान्ता धर्मशास्त्रार्थवेदिनः।
स्वकर्मनिरता दान्तास्तेषां वचनमौषधम् ॥

औषधमिवोपादेयमित्यर्थः।

आपस्तम्बः।

यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मोभाक्तुतः स्मृतः।
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेत्ति नान्यतः ॥

तेन तद्वचनमुपादेयमित्यर्थः।

नारदापुराणे।

पुराण-न्याय-मीमांसा-धर्मशास्त्रार्थचिन्तकाः।
सदाचारपरा ये वै तदुक्तं वक्तत्यरेत् ॥

पद्मपुराणे।

येतिहासपुराणज्ञाः श्रुतिसिद्धान्तवेदिनः।
वासुदेवप्रिया ये च तदुक्तं वैदिकं भवेत् ॥

उक्तेभ्यश्च येऽन्ये तेषां वचनं वर्जनीयमित्यर्थः। सिद्धमुक्तञ्च विष्णुरहस्ये कूर्मपुराणे।

येषां न कारणं वेदा न विप्रा न जनार्दनः।
तन्त्राणि धर्मशास्त्राणि प्रमाणं कारणं शुभे ॥

स्कन्दपुराणे।

वेदाधिगमहीना ये शौचाचारविवर्जिताः।
नास्तिकाः पण्डितम्मन्यास्तेषां वाक्यं विवर्जयेत् ॥
वैश्वदेवविहीना ये जप-यज्ञविवर्जिताः।

देवताविमुखा ये च तेषां वाक्यं विवर्जयेत् ॥

आदित्यपुराणे ।

देवताविमुखा ये च जप-होमविवर्जिताः ।
विष्णुभक्तिविहीनाश्च तेषां वाक्यं विवर्जयेत् ॥
येषामरण्यकं नास्ति रतिः स्वाध्याय एव च ।
परमे धाम्नि सूर्य्ये च तेषां वाक्यं विवर्जयेत् ॥

वैष्णवतन्त्रे ।

येषां गुरौ च जप्ये च विष्णौ च परमात्मनि ।
नास्ति भक्तिः सदा तेषां वचनं परिवर्जयेत् ॥

वायुपुराणे ।

नग्नाननाः स्मृता ये वै वैतुका वकवृत्तयः ।
देवतानिन्दका ये वै तेषां वाक्यं विवर्जयेत् ॥

कालिकापुराणे ।

वेदे च देवतायाञ्च कर्मण्यपि च वैदिके ।
श्रद्धा नास्ति च येषां वै तेषां वाक्यं विवर्जयेत् ॥

पद्मपुराणे ।

वाचं व्याकुरुते नैव मीमांसां न तथाध्वरम् ।
शुष्कतर्करता ये वै तेषां वाक्यं विवर्जयेत् ॥

स्कन्दपुराणे ।

येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते ।
न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये ॥

तथा ।

पश्चाद्यत्तु पुराणानि वेतिहासानि मानवाः ।
ये विनिघ्नन्ति तेषां वै वचनं परिवर्जयेत् ॥

तथाच योगयाज्ञवल्क्यः ।

पुराणं पञ्चरात्रञ्च वेदाः पाशुपतं तथा ।
श्रुतिप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीय-समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये एकादशीनिर्णयः षष्ठोऽध्यायः समाप्तः ।

---

# अथ सप्तमोऽध्यायः ।

## द्वादशीनिर्णयप्रकरणम् ।

### अथ श्रवणद्वादशीनिर्णयः ।

विष्णुधर्मोत्तरे ।

श्रीराम उवाच ।

उपवासासमर्थानां किं स्यादेकमुपोषितम् ।
महाफलं महादेव तन्ममाचक्ष्व पृच्छतः ।

शङ्कर उवाच ।

या राम श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् ।

भविष्योत्तरे युधिष्ठिर उवाच ।

उपवासासमर्थानां सदैव पुरुषोत्तम ।
एका या द्वादशी पुण्या तां वदस्व ममानघ ॥

श्रीकृष्ण उवाच ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
सर्वकामफला पुण्या उपवासे महाफला ॥
सङ्गमे सरितां स्नात्वा द्वादश्यां समुपोषितः ।
समग्रं समवाप्नोति द्वादशद्वादशीफलम् ॥

तथा ।

द्वादशी श्रवणोपेता यदा भवति भारत ।
सङ्गमे सरितां स्नात्वा गङ्गादिस्नानजं फलम् ।
सोपवासः समाप्नोति नात्र कार्य्या विचारणा ॥

यम ।

यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
स्नात्वा तु सा महापुण्या द्वादशी विजया स्मृता ॥

विष्णुरहस्ये ।

श्रवणेन समायुक्ता मासि भाद्रपदे हि या ।
द्वादशी सा महापुण्या स्नात्वा तु विजया हि सा ॥
तस्यां स्नातो विधानेन सर्वतीर्थफलं लभेत् ।
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं द्वयाब्दिकम् ॥

स्कन्दपुराणे ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
सङ्गमे सरितां पुण्ये द्वादशीं तामुपोषित ।
अयत्नादेव चाप्नोति द्वादशद्वादशीफलम् ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्तमहती तस्यां दत्तं भवति चाक्षयमिति ॥
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं द्वयाब्दिकम् ।
फलं दत्तस्नानाच्च तस्यां शतगुणं भवेत् ॥

विष्णुधर्मोत्तरे ।

श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ।
अत्यन्तमहती नाम द्वादशी सा प्रकीर्त्तिता ॥
स्नानं जपं तथा दानं होमश्राद्धं सुरार्चनम् ।
सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वह ॥
तस्मिन्दिने तथा स्नातो यत्र क्वचन सङ्गमे ।
स गङ्गास्नानजं राम फलं प्राप्नोत्यसंशयम् ॥
श्रवणे सङ्गमाः सर्वे परिपुष्टिप्रदाः सदाः ।
विशेषाद्द्वादशीयुक्ते तद्युक्ते विशेषतः ॥
बुध-श्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् ।
अतीव महती तस्यां सर्वं दत्तमिहाक्षयम् ॥
श्रवणद्वादशीयोगे पूजयित्वा जनार्दनम् ।
दानं दत्त्वा च विप्रेभ्यः सोपवासो जितेन्द्रियः ॥
महानदीसङ्गमेषु प्रतिवर्षं युधिष्ठिरः ।
चकार विधिवत्स्नानं ततो दिष्टान्तमागतः ॥
अक्षयं परमं स्थानं दुर्लभं सर्वमानवैः ।
यत्र कामफला वृक्षाः नद्यः पायसकर्दमाः ।
सदैवामलपानीयाः पुष्करिण्यो मनोरमाः ॥
तं देशमासाद्य वणिक्प्रधाना
सुस्पष्टजाम्बूनदरश्मिपिताङ्गः ।
कल्पं समग्रं सुरसुन्दरीभिः
साकं स रेमे मुदितः सदैव ॥
बुध-श्रवणसंयुक्ता द्वादशी सङ्गमोदकम् ।

दानं दध्योदनं शस्तं उपवासपरो विधिः ॥
सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना ।
एतैश्चान्यैश्च राजेन्द्र कामदा द्वादशी कृता ॥
या द्वादशी बुधयुतश्रवणेन सार्द्धं
सा वै जयेति कथिता मुनिभिर्नभस्ये ।
तामादरेण समुपोष्य नरोऽपि सम्यक्
प्राप्नोति सिद्धिमणिमादिगुणोपपन्नाम् ॥

पौष्करे पद्मपुराणे च ।

सर्वकामप्रदे विष्णुर्बुध-श्रवणसंयुते ।
द्वादश्यां प्रीणनीयः स्यात्सितमासद्वये क्वचित् ॥

तथाच श्रवणद्वादशी प्रकृत्योक्तं नारदीयपुराणे विष्णुरहस्ये च।

द्वादश्यामुपवासोऽथ त्रयोदश्यां तु पारणम् ।
निषिद्धमपि कर्त्तव्यमित्याज्ञा पारमेश्वरी ॥

तथाच मार्कण्डेयः ।

श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते ।
उपोष्य द्वादशीं तत्र त्रयोदश्यान्तु पारणम् ॥ इति ॥

इयञ्च द्वादशीश्रवणयोगमात्रेण कृत्स्नापि पुण्या भवति यथा रोहिणीयोगेनाष्टमी ।

तथाच ब्रह्मपुराणे ।

द्वादशी श्रवणयुक्ता कृत्स्ना पुण्यतमा तिथिः ।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते ॥

केचिदेवं व्याचक्षते यदा कृत्स्ना श्रवणयुक्ता तदा पुण्या न तु तेन

যুক্তা তাবত্যেব পঞ্চিমাদ্যবচ্ছিন্নৈব পুণ্যা ভবতীতি। তদ্যুক্তং শ্রবণযুক্তা সতী কৃৎস্না পুণ্যা ন তু যাবতী শ্রবণযুক্তা তাবত্যেবেত্যর্থপ্রতীতেঃ।

এবং শঙ্খগীতায়াম্।

কৃত্তিকাদিভরণ্যন্তা তারাবারবিষঙ্গকম্।

ন তৎ সংযোগমাত্রেণ পুনন্তি সকলাং তিথিম্॥ ইতি॥

তেন যাবৎকাল তিথিনক্ষত্রেণ যুজ্যতে তাবত্যেব পুণ্যেত্যবধার্য্যতে, তেন শ্রবণদ্বাদশ্যামপি তথৈব প্রাপ্নোতি, তদর্থমিদমুক্তং "যুক্তমাত্রা নক্ষত্রেণ সকলা পুণ্যতমেতি ন তু যাবতী যুক্তা তাবত্যেব প্রশস্যতে" ইতি। শ্রবণস্পৃষ্টেতি পাঠে তু স্পৃষ্টশব্দপর্য্যালোচনয়ৈব চ সা তথৈব শ্রবণযোগাপেক্ষঃ স ইতি প্রতীয়তে। তথাচ শ্রবণদ্বাদশীং প্রকৃত্যোক্তং নারদীয়পুরাণে।

তিথি-নক্ষত্রয়োর্যোগো যোগশ্চৈব নরাধিপ।

দ্বিকলো যদি লভ্যেত স জ্ঞেয়োহ্যষ্টযামিকঃ॥

তস্মাদস্মদুক্তৈব ব্যাখ্যা যুক্তা।

বিষ্ণুপুরাণে।

যাঃ কাশ্চিৎ তিথয়ঃ প্রোক্তাঃ পুণ্যা নক্ষত্রযোগতঃ।

তাস্বেব তদ্ব্রতং কুর্য্যাৎ শ্রবণদ্বাদশীং বিনা॥

অস্যার্থঃ। যাঃ কাশ্চিত্তিথয়ো যেন যেন বিশেষনক্ষত্রবিশেষযোগেন পুণ্যাঃ প্রোক্তাস্তাসু যদ্বিহিতং তত্তাস্বেব কুর্য্যাৎ ন তিথ্যন্তরে তন্নক্ষত্রযুক্তে যথা ফাল্গুনশুক্লপক্ষদ্বাদশী পুষ্যর্ক্ষেণ যুক্তা গোবিন্দদ্বাদশী নাম তস্যামুপবাসব্রতং বিহিতং তৎ তস্যামেব কুর্য্যাৎ ন পুষ্যান্বিতায়াং একাদশ্যাং, সোঽয়ং শ্রবণদ্বাদশীং বিনা নিয়মঃ। শ্রবণদ্বাদশীব্রতন্তু শ্রবণৈকাদশ্যামপি ভবতীত্যর্থঃ।

एवञ्च भविष्यत्पुराणे ।

श्रीकृष्ण उवाच ।

द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर ।
सर्वपापप्रशमनः सर्वसौख्यप्रदायकः ॥
एकादशी यदा च स्याच्छ्रवणेन समन्विता ।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥

नारदीयपुराणेऽपि ।

यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥
उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः ।
विभेदोऽपि न कर्त्तव्यो विभेदात्पतते नरः ॥

अन्ये त्वेवं व्याचक्षते पाक्षिकयो नक्षत्रयोगात्पुण्या कथितामाद्य तद्व्रतं कुर्य्यादिव, श्रवणद्वादश्यान्तु न क्रियते व्रतमिति, नित्य-काम्यैकादशीव्रता हि वैष्णवा भवन्ति, तत्रैकादश्युपवासानन्तरं द्वादश्युपवास कर्त्तुमशक्य पारणान्तत्वाद्व्रतस्य, असमाप्ते व्रते चैककाले अन्यव्रतनिषेधात् ।

तदुक्तं विष्णुधर्मोत्तरे ।

पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् ।
असमाप्ते व्रते पूर्वं कुर्य्यान्नैव व्रतान्तरमिति ॥

तेन वैष्णवा केनापि कारणेन गृहीतैकादशीव्रतास्तेषां श्रवणद्वादश्यां उपवासो न युज्यते "श्रवणद्वादशी विजेति चोपलक्षणार्थं, तथा च मारभ्यषष्ठी-सप्तमी-चतुर्द्दशीव्रतानां नक्षत्रयुक्तमा-पौर्णमास्यादि-

तिथिलाभे तद्गतोपवासानुष्ठानं नाम्नैव पारणान्तं व्रतं ज्ञेयमित्या-द्युपपत्तिकलापस्यातुल्यत्वात्। यथा गृहीतोभयपक्षव्रतानां रोहिण्यष्टमीप्राप्तौ कथमुपवाससिद्धिरिति। तदयुक्तं। एवकारानाञ्जस्यात् उपलक्षणलक्ष्यार्थस्यैवोपपत्तौ अन्याय्यत्वाच्च। तस्मात् पूर्वैव व्याख्या युक्ता। एकादशीयुक्ता श्रवणद्वादशी महापुण्या मत्स्यपुराणे।

द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशी यदा।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभां॥

'श्रवणस्पृष्टा' श्रवणेन युक्ता। श्रवणग्रहस्तिथिनक्षत्रयोरपि। "श्रवणस्पृष्टेति वदन् स्वल्पश्रवणयोगेनापि द्वादश्युपवासादियोग्यता भवतीति गमयति। विष्णुधर्मोत्तरे।

एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत्।
तद्विष्णुशृङ्खलं नाम विष्णुसायुज्यकृद्भवेत्॥
तस्मिन्नुपोष्य विधिवद्गच्छेच्छ्वेतपुरं ध्रुवं।
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणं।
निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी॥

नारदीयपुराणे।

सम्पूर्णैकादशीं राजन् द्वादशी यदि संस्पृशेत्।
श्रवणं ज्योतिषा ज्ञेया ब्रह्महत्यां व्यपोहति॥

यश्चोपवासासमर्थः स्त्रीशूद्रैकादशीव्रतस्य तस्यैकादश्यामेवोपवासो द्वादश्यान्तु पूजामात्रविधिः "असमर्थे पूर्वमित्युदाहृतवचनात्।

तथाच मत्स्यपुराणे।

दादशी शुक्लपचे तु नचत्र श्रवणं यदि।
उपोष्यैकादशीं तत्र दादश्यां पूजयेद्धरिं॥

यम।

श्रवणेन विना यत्र दादशी लभ्यते क्वचित्।
उपोष्यैकादशीं तत्र दादश्यामर्चयेद्धरिं॥

यद्युपवासदयासमर्थं स्तदैकादशीमतय न दादश्यामेवो-पवसेत्।

तथाच नारदीयपुराणे।

उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुतां।
एकादश्युद्भवं पुण्य नरः प्राप्नोत्यसंशयं॥
वाजपेये तथा यज्ञे कर्महीनोऽपि दीक्षितः।
सर्वं फलमवाप्नोति अस्नातोऽप्यकृतोऽपि सन्॥

भक्षत इति वक्ष्यति।

एवमेकादशीं भुक्त्वा दादश्यां समुपोषणात्।
पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयं॥

यद्युपवासदयसमर्थस्तदा प्रति भविष्योत्तरे दिनद्वयेऽप्युपोषणं विहितं।

एकादश्यामुपोष्यैव दादश्यामप्युपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति॥
असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरमिति।

निषेधात्समाप्तिश्च पारणेन विना नास्ति, तदभावे उपवासदये

इतो वचनेनैव विष्णुश्रृङ्खलयोगे तेनैकस्मादेवोपवासाच्छ्रवणद्वादशीव्रतकार्य्यमेकादशीव्रतकार्य्यं च प्रसङ्गात् सिध्यति । अत्र केचिदाहुः यदा तु आविद्धिन्नेऽपि रात्रौ वा श्रवणयोगस्तदा "प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकमिति सङ्कल्पयोगाभावादनुपोष्यैव सा तिथिरिति तदयुक्तं श्रवणयोगेन तद्धनतिथिपुण्यत्वाभिधानात् तेन यथातीतेनापि श्रवणयोगेन पुण्यता तथा भाविनापि श्रवणेन पुण्यता विद्यत एव, तथाच विष्णुश्रृङ्खलयोगेनास्यामेकादश्यान्तत्पुण्येनैव दिवसपुण्यत्वात् नानाद्वादशीव्रतग्रहणसङ्कल्प क्रियते। तथाच नक्षत्रोपवासे ब्रतमपक्षसन्निधौ नक्षत्रस्योपोष्यत्वात् तस्य च प्रातरप्राप्तावपि व्रतग्रहणसङ्कल्पस्य पूर्णत्वात् प्रातरेव युक्तः। न च तथापि विप्रतिपत्तिः, सकलाहोरात्रपुण्यत्वाभिधानात् तस्मात् "मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते। अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेदित्यनेन न्यायेन श्रवणयोगमात्रेण द्वादश्यपि सकला सम्यविजयाभिधाना पुण्यवतामनुष्ठेयकर्माहेति ।

---

## अथ पारणकालनियमः ।

स्कन्दपुराणे ।

> तिथि-नक्षत्रनियमे तिथि-भान्ते च पारणम् ।
> अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् ॥

तथा ।

> याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः ।
> ऋक्षान्ते पारणं कुर्य्यात् विना श्रवणरोहिणीम् ॥

वह्निपुराणे।

सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते।
तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः॥

नारदीयपुराणे।

तिथि-नक्षत्रसंयोगे उपवासो भवेद्यदा।
पारणन्तु न कर्त्तव्यं यावन्नैकस्य सङ्क्षयः॥

इति श्रवणद्वादशीनिर्णयः।

---

## अथ शिवरात्रिनिर्णयः।

स्कन्दपुराणे।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी।
एताः पूर्वयुताः कार्य्यास्तिथ्यन्ते पारणं भवेत्॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च।
पूर्वविद्धैव कर्त्तव्या तिथि-भान्ते च पारणम्॥
श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम्।
जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते॥

तत्र रहस्यस्मृतिटीकाकृतः केचिदाहुः।

यदि तावत्त्रिविद्धायास्त्रयोदशीयुक्तायाश्चतुर्दश्याः प्रतिषेधोऽयं तत शुक्लपक्षचतुर्दशीविषयता व्याख्याता एव पूर्वविद्धाया निषिद्धत्वादितरत्र तु "कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशीत्यादिना पूर्वविद्धाया एव ग्रहणात्। अथोपवासविषये अमावास्यायुक्तायाश्चतु-

दंश्या अपवादोऽयं तदसत् उपवासाश्रवणात् । शिवरात्रिशब्देनोच्यते इति चेत् । एवं तर्हि यत्र त्रयोदश्यामुपवासो विहितस्तत्तुर्दश्यां जागरणन्तदिषयं स्यात् । अथ शिवरात्रिशब्देन जागरणमभिधीयते चेत्तर्हि नेदमपवादकमुपवासाविधानात् ।

भुक्ता जागरणे भक्ते चन्द्रार्घार्पणे तथा ।
ततो व्रतेषु सर्वेषु रात्रियोगो विशिष्यते ॥

इति जागरणस्य पूर्वविद्धायामेव विधानादनर्थकमिदं वचनं मन्तुल्यार्थमिदमिति चेन्न, वचने शिवरात्रिपदस्याविवक्षितत्वप्रसङ्गात् । तस्मादेव द्वितीयेऽहनि चतुर्दशी न विद्यते आदित्योदयसमये वा विद्यते तत्र पूर्वविद्धाया निषिद्धत्वादमावास्याग्रहणे प्राप्ते ।

जयन्ती शिवरात्रिश्च कार्ये भद्रा-जयान्विते ।

इत्युच्यते, यद्वा

मुहूर्त्तैः पञ्चभिर्विद्धा याश्चैवैकादशी तिथिः ।
तदर्द्धविद्धान्यासि दिनान्युपवसेद्बुधः ॥

अथ तदर्द्धविद्धाया एव निषेधेऽहणे यत्र अधिकविद्धा भवति तत्र "उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेदिति भक्ष्यकल्पनायां प्राप्तायामिदमुच्यते "जयन्ती शिवरात्रिश्चेति । यदा तु दिनद्वयेऽपि चतुर्दशी विद्यते द्वितीयेऽहनि रात्रौ न विद्यते रात्रौ च जागरणं विहितं तदा

एकादशीमुपोषित्वा द्वादशीमप्युपोषयेत् ।
नैवात्र विधिलोपः स्यादुभयोर्देवता हरिः ॥

इति न्यायेन समानदेवताकत्वेनामावास्यायामेव जागरणं कार्य्यं

सद्भावात्तथैव हि ।

अष्टम्यां वा चतुर्द्दश्यां च शिव प्रचितव्रत ।
कुसुमैः पूजयेन्नित्यं स लभेदीप्सितं फलम् ॥

इति शिवव्रतं चतुर्द्दश्यां श्रूयते ।

तथा ।

पर्व्वसु पूज्य देवेशं गुरुमग्निञ्च भक्तितः ।
प्रदत्त्वा च बलिं सम्यक् शिवस्याष्टशतं जपेत् ॥

इत्यमावास्यायां श्रूयत एव । अपि च शिवरात्रिशब्देन उपवास-शिवपूजा-जागरणान्यभिधीयन्ते, द्वे वा एकं वा आद्ये पक्षे उपवासस्य या विहिता सैवेतरयोरपि, द्वितीयपक्षे चतुपवासव्यतिरिक्ते द्वे अभिधीयेते तर्ह्येकमवास्याया भविष्यतीति द्वितीयैव स्यात्, तृतीये पक्षस्तावदनुपपन्नः । यदि जागरणोत्पत्तौ शिवरात्रिशब्दवाच्यस्य कालविशिष्टस्य विधानं स्यात् ततोऽधिकारवाक्ये शिवरात्रिव्रतस्य फलसम्बन्धे उच्यमाने जागरणफलसम्बन्धः उक्तो भवति यथोत्पत्तिवाक्ये यथासम्भवि यागानां कालसम्बन्धेऽवगते दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेतेति दर्शपूर्णमासवाक्यात् यद्वेव फले विधीयमाने इत्यवधारितं, एवमिहापि स्यात् । न च तथास्ति । यत्र तावत् प्रथमं दुर्वाससा व्याधं प्रति ।

कृष्णपक्षे चतुर्द्दश्यां न किञ्चिन्मृगमव्यपि ।
प्राप्तवान् प्राणयात्रार्थं क्षुधासम्पीडितोऽव्रत ॥

इत्युपक्रम्य ।

धनुः कोट्याहतान्येव विल्वपत्राणि मानद ।

पतितानि महाराज शम्भोः शिरसि भूमिप ॥
तस्थौ स एव तत्रैव सर्वरात्रमतन्द्रितः ।
स्वोदरार्थं महाराज मृगलिप्सुरुदङ्मुखः ।
रात्रिशेषं स्थितो व्याधः साक्षदृष्टिरशासिकः ॥

इत्युपवास-शिवपूजा-जागरणानि प्रासङ्गिकानि तत्र जातानी-त्यभिधाय ।

प्रभाते विमले जाते दृष्ट्वा तत्रैव शङ्करम् ।
स्नात्वा सरसि राजेन्द्र पूजयित्वा महेश्वरम् ।
बिल्वपत्रैर्महेष्ठ कन्दमूलैश्च पारितम् ॥

इत्येतावति कथिते तेन विशेषेण भगवान् जागरणैकफल-समस्तं प्रमीति । यद्गौरीश्वरवचनं पार्वतीं प्रति व्रतनिरूपणे ।

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।

इत्युपक्रम्य ।

चयोदश्यां विशालाक्षि एकभक्तं समाचरेत् ।
उपोषितो वरारोहे चतुर्दश्यां वरानने ॥

इत्यादिग्रन्थसन्दर्भेण स्नापन-गन्ध पुष्पादिभिरर्च्चनं पादादा-रभ्य सर्वाङ्गपूजामभिधाय गोमयमण्डल दीपमालाभिर्वेष्टयित्वार्घ्य-प्रदानान्तम् ।

स वै शुध्यति पापेन त्रिविधेन वरानने ।

इति माहात्म्यसहितमभिधाय "जागरं तत्र कर्त्तव्यं गीतवादित्र-मङ्गलैरिति जागरणमभिधाय "कर्त्तव्या यामपूजा च स्नानं पञ्चा-मृतेन नित्येवमन्तेन कृत, यत्र प्राधान्येन कश्चिद्विशेषः, तस्मात्

प्राधान्यं सर्वेषां त्रयाणां द्वयोर्वा आद्यपक्षद्वये "मुख्यं वा पूर्वचोदना-ल्लोकवदिति" न्यायेनोपवासदिन एव सर्वेषामनुष्ठानम् ।

तृतीयपक्षे तु "चतुर्दश्यां तु कौनाम्नावधर्मा येन मे कृता । तथा जागरणं रात्राविति"च जागरणस्यैव रात्रौ श्रवणात् । इतरस्य चतुर्दश्यामेव श्रवणात् । यदि परखण्डतिथौ चतुर्दश्यनुरोधेन दिवैव पूजा आरभ्यते तथापि दोषो नास्ति, अस्ति च पुराणान्तरे "यामपूजातो भिन्ना दिवापूजेति दिवैव सर्वस्याः पूजायाः प्रारम्भः । वस्तुतस्तु त्रयाणामेव प्राधान्यं इत्ययमेव पक्षः ।

मम भक्तोऽजन्तो देवि शिवरात्रिमुपोषकः ।
गणत्वं मोक्षदं दिव्यमक्षयं दिव्यशासनम् ।
सर्वान्कृत्वा तु भुञ्जे भोगानतुलसम्भवानिति ॥

तथा ।

तुष्टोऽहं भवभक्तस्य शिवरात्रिमुपोषकः ।
वरं ददामि ते तुभ्यं देव-दानवदुर्लभम् ॥

इत्येवमादिवचनानुसारादुपवासस्यापि प्राधान्यमेव तथा-न्ययोरपि फलसम्बन्धित्वात् ।

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।

इतीह माघमासो व्रतमहत्त्वाख्यत्वात् व्रतस्य च चतुर्दश्यां विहित-त्वात् खण्डचतुर्दश्यास्तु पञ्चदशीयुक्ताया उपवासे ग्रहणादन्यत्र जया-न्वितायाः एव कृष्णचतुर्दश्याः ग्रहणादिह च तदभावादेकस्मिन्नेव दिने उपवास-पूजा-जागरणानाञ्च कर्त्तव्यत्वादवश्यमन्यतरकाल-बाधाबाधापतितायां पूजा-जागरणकालस्य पाश्चात्यस्य बाधा युक्ता ।

उपवासस्य च तयोः पूर्व्वमननुष्ठेयत्वादनुपपन्नातविरोधित्वात् स्व-काल एवानुष्ठानं युक्तं । अपि चोपवासस्याहोरात्रव्यापकस्य तन्मध्य-गतकालैकदेशेऽनुष्ठीयमानयोः पूजा-जागरणयोस्तिथिविषये अप्रयो-जकयोः प्राधान्याविशेषेऽपि बाधकत्वमेव युक्तं नोपवासकालस्याव्या-नत्वभंजनत्वादुपवासं विना जागरणं दृश्यते । यथा,

कश्चित् पुण्यविशेषेण विहीनोऽपि च यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥ इति ।

तत्र भवतु पूर्व्वविद्धाया ग्रहणं । उक्तञ्च "भुक्त्वा जागरणे गते" इत्यादौ ।

अन्ये तु न्यायसिद्धेऽप्यर्थे पुराणमेवं पठन्ति ।

माघासिते भूतदिनं हि राजन्
उपैति योगं यदि पञ्चदश्याः ।
जयाप्रयुक्तां न तु जातु कुर्या-
च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ इति ।

तदेतदपेक्षितं ।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्द्दशी ।
अमावास्या तृतीया च ता उपोष्याः पराण्विताः ॥

इत्यादिभिर्व्वद्धवसिष्ठादिवचनैरुपवासतिथिनिर्णयस्तावद्दर्शित-रमावास्याविद्धायां चतुर्दश्यामुपवासो यथा विहितः तथा त्रयो-दशीविद्धायामपि तस्यां ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्व्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ।

उपवासेषु कालेषु एष धर्मः सनातनः ॥

इति निगमवचनेऽभिहितः, एवमविशेषे सति ।

जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयान्विते ।

इत्येवमादिमाधवाद्युदाहृतवचनवशात्फाल्गुनकृष्णचतुर्दशी शिवरात्रिचतुर्दशी पूर्व्वविद्धा गृह्यते । अतएव शिवरात्रिव्रतस्य रात्रिप्राधान्यमुक्तं स्कन्दपुराणे ।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।

अतस्तस्यां चतुर्दश्यां सत्यां तत्पूजनं भवेत् ॥

'निशि भ्रमन्ति' 'विचरन्ति' । 'शक्तयः' देव्यः । 'शूलभृत्' महेशः, यतोऽतस्तस्यां चतुर्दश्यां सत्यां तेषां भूत-शक्ति-शिवानां पूजनम् । नागरखण्डे ।

माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ।

अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ ॥

लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च ।

संक्रमिष्याम्यसन्दिग्धं वर्षपापविशुद्धये ॥

तस्माद्रात्रौ हि मे पूजां यः करिष्यति मानवः ।

मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति ॥

तथा ।

माघ-फाल्गुनयोर्मध्ये या स्यात्कृष्णचतुर्दशी ।

अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः ॥

'अनङ्गः' त्रयोदशी । यत्तु वचनम् ।

माघासिते भूतदिनस्य राजन्-

नुपैति योगं यदि पञ्चदश्याः ।

अथाप्रयुक्तां न तु जातु कुर्या-

च्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥

'अथा' त्रयोदशी, न तु यस्यां रात्रौ त्रयोदशीयुक्ता चतुर्दशी । तथा चास्मिन्नेव वचने अथायुक्तां रात्रिमिति पठ्यते ।

तथाच पद्मपुराणे ।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणत' ।

जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

अनेन त्रयोदशीसम्बन्धा यदा चतुर्दशीरात्रिर्न भवति किन्तु दिनभुक्तिप्रमाणतः दिनपर्य्याप्ता तदा जागरोपवासादि कर्त्तव्यमित्युक्तं भवति । एवञ्च माघस्य कृष्णचतुर्दश्यां रात्रौ अथायोगस्य निषिद्धत्वात् ।

अर्द्धरात्रात् पुरस्ताच्चेज्जयायोगो यदा भवेत् ।

पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

इति वचनं माघव्यतिरिक्तविषयमिति केचित् । शिवरात्रिव्रते माघमासव्यतिरिक्ते कृष्णचतुर्दश्यामप्युपवासविधानात् ।

"आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि च ।

प्रकुर्य्यात् माघमासे वा द्वादशैवमुपोषयेदित्यादिना ।

दीपोत्सवेऽथवा माघकृष्णायान्तु चतुर्दशी ।

द्वादशस्वपि मासेषु प्रकुर्य्यादिह जागरम् ॥

इति स्कन्दसह्याद्रिखण्डवचनेन जागरणस्यापि विधानादिति । तदयुक्तं माघमासव्यतिरिक्तचतुर्दश्यामुपवासविधानेऽपि न सा शिवरात्रिशब्देनोच्यते शिवरात्रिशब्दस्य माघमासकृष्णचतुर्दश्यां रूढत्वात् ।

तथाच स्कन्दपुराणे।

माघ-फाल्गुनयोर्मध्ये असिता या चतुर्दशी।
शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा॥

तत्रैव ब्रह्मादिखण्डेऽपि।

माघ-फाल्गुनयोर्मध्ये कृष्णा या च चतुर्दशी।
दत्ते शिवफलं यस्मात् तेन सर्वसुरासुरैः।
शिवरात्रिरिति ख्याता मत्कृतैव पृथक्स्थिता॥

तथा।

माघमासस्य शेषे या प्रथमा फाल्गुनस्य च।
कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता॥

नागरखण्डेऽपि।

माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी।
तस्या रात्रिः समाख्याता शिवरात्रिसमुद्भवा।
तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः॥

तथाच तत्रैव माघमासे कृष्णचतुर्दशीं महत्योक्तं।

यानि कानिच लिङ्गानि चराणि स्थावराणि च।
तेषु संक्रमते देवस्तस्यां रात्रौ यतो हरः।
शिवरात्रिस्ततः प्रोक्ता तेन सा हरवल्लभा॥

शिवरहस्ये।

ततश्चाथ देवर्षे माघकृष्णचतुर्दशी।
शिवरात्रिरिति ख्याता प्रियेयं त्रिपुरद्विषः॥

तस्मादेवं विषयव्यवस्था। यदा दिनद्वयेऽपि प्रदोषव्यापिनी

प्रथमदिन एव वा त्रयोदशी च दिनपर्याप्ता तदा पूर्वैव चतुर्दशी त्रयोदशी यदा देवीति वचनात् । यदा प्रथमदिन एव प्रदोषव्यापिनी त्रयोदशी च दिनपर्याप्ता तदा पूर्वैव ।

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति वचनात् ।

ननु यदा द्वितीयदिन एव प्रदोषव्यापिनी तदा किं 'अर्द्धरात्रात् पुरस्ताच्चेदिति वचनात् पूर्वा ग्राह्या, उत 'प्रदोषव्यापिनीति वचनादुत्तरेति कथं निर्णयः । उच्यते यद्यपि 'अर्द्धरात्रात् पुरस्ताच्चेदितिवाक्यं द्वितीयदिने प्रदोषव्यापित्वाभावेऽप्युपपद्यते 'प्रदोषव्यापिनीति वाक्यञ्चार्द्धरात्रादुपरि व्याप्त्ययोगेऽपि तथाप्येवंविधे विषये द्वितीयचतुर्दशीग्रहणे प्रागुदाहृतपूर्वविद्धशिवरात्रि-प्रतिपादक-सकलवाक्यसङ्कोचप्रसङ्गः, पूर्वशिवरात्रिग्रहणे तु तदभाव इति सैव ग्राह्या । किञ्च पूर्वा सकलकर्मकालव्यापिनी उत्तरा तु न तथेति सैव ग्राह्या । यदा तु दिनद्वये प्रदोषकाले चतुर्दश्यभावस्तदापि "अर्द्धरात्रात् पुरस्ताच्चेदिति वचनात् पूर्वैव । ननु माघासितवचनं तदेतद्वाक्यपर्यालोचनयार्द्धरात्रादुपरिव्याप्त्ययोगनिषेधकं । शिवरात्रिव्रतान्तर्भूतमाघमासव्यतिरिक्तमासचतुर्दशीनिर्णयस्तथैव । 'एकादश्यष्टमी षष्ठीतिवचनादमावास्याविद्धा या ग्राह्या 'कृष्णपक्षेऽष्टमीति वचनात् त्रयोदशीविद्धा । एवं विरोधे सति रात्रौ यामचतुष्टये पूजाविधानाज्जागरणविधानाच्च तदनुसारेण सकलकर्मकालव्यापिनी ग्राह्या । यदा तु सकलकर्मकालव्याप्तिकृतो विशेषस्तदा ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः ।
अन्येषु व्रतकल्पेषु पूर्वोद्दिष्टमुपावसेत् ॥

इति ब्रह्मवैवर्त्तवचनान्निर्णयः ।

अत्र केचिदाहुः ।

यदा पारणपर्य्याप्ताभावात्तदा पूर्वा नोचेत् परा ।
भूताष्टम्योर्दिवा भुक्ता रात्रौ भुक्ता तु पर्वणि ।
एकादश्यां दिवारात्रौ भुक्ता चान्द्रायणञ्चरेत् ॥

इति भोजननिषेधात् ।

जयोदश्यौ यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

'दिनभुक्तिप्रमाणतः' दिवसभोजनानुरोधेन, यस्यां त्रयोदश्यां उपोषितायां तिथ्यन्ते विहितं पारणं रात्रौ नोपपद्यते सा त्रयोदशी दिनभुक्तिप्रमाणत इत्युच्यत इति । तदयुक्तं भुक्तिशब्दस्य भोजनवत्कालमात्रावपि तिथि-नक्षत्र-वारभुक्तिरित्यादिषु ज्योतिःशास्त्रे निरूढत्वात् । एवञ्च भुक्तिशब्देन भोजनग्रहणे "अहोरात्रात् पुरस्तादिति" अहोरात्रभङ्गः, कालव्याप्तिग्रहणे तु न अहोरात्र इति नैतच्च भुक्तिशब्देनोच्यते । किञ्च "त्रयोदशी यदा देवीतिवाक्यात् तिथ्यन्ते विहितं पारणं यदा दिन एव सम्भवति तदा पूर्वा ग्राह्येत्ययमर्थोन लक्षणादिकं विना लभ्यते । दिनशब्देन च सन्निहितत्रयोदशीसम्बद्धदिनपरिग्रहेण भवत्वे दिनान्तरं ग्राह्यं द्वितीयदिनभोजनप्रमाणत्रयोदशी यदा पूर्वदिने तदा निशि सम्पूर्णा चतुर्दशी पाक्षेत्युक्ते च यदा त्रयोदशी घटिकादिपरिमितभो-

जनप्रमाणा तदैव चतुर्दशी पूर्वविद्धा कार्येति प्रसज्येत । ततश्च प्रागुदाहृतवाक्यविरोधः । अथैवमुच्यते यस्यां त्रयोदश्यां उपोषितायां दिवा भोजनं सम्भवति सा ग्राह्येति तदपि न सर्वस्यामपि त्रयोदश्यामुपोषितायान्दिवाभोजनसम्भवात् । अथ तिथ्यन्तविहित भोजनं यदा दिवा सम्भवति तदा पूर्वा ग्राह्येति, तन्न लक्षणाप्रसङ्गात् रात्रिभोजनेऽपि बाधकाभावाच्च । निषेधस्य रागप्राप्तभोजनविषयत्वात् रागप्राप्तलाभे विधिस्पृष्टे निषेधाप्रवृत्तेर्विधिवैयर्थ्यविकल्पादिप्रसङ्गात् अग्नीषोमीयहिंसादिवत् । उपपादितश्चैतत्तैलाभ्यङ्गादिकालनिर्णयप्रस्तावे । तस्मात् सकलदोषपरिहारार्थं भुक्तिशब्देन कालव्याप्तिरेवोच्यते न भोजनमिति सिद्धम् । एवञ्च शिवरात्रौ सकलवचनपर्यालोचनया व्यवस्थाया आवश्यकत्वे उक्तलिखितटीकाततोक्ता व्यवस्था ज्ञेया । शिवपूजाजागरणकालबाधश्च विना कारणं प्रसज्येत । उपवासस्यापि पूर्वविद्धायामुपपादितत्वात् बहुतरवाक्यसङ्कोचप्रसङ्गाच्च । शिवरात्रिशब्देन सोपवास-पूजा-जागरणान्यभिधीयन्ते । त्रयाणामपि प्राधान्यप्रतीतेः ।

तथा च स्कन्दपुराणे ।

एवं द्वादश वर्षाणि शिवरात्रिमुपोषकः ।
यो मां जागरते रात्रिं मनुजः स्वर्गमारुहेत् ॥
शिवञ्च पूजयित्वा यो जागर्त्ति च चतुर्दशीम् ।
मातुः पयोधररसं न पिबेत् स कदाचन ॥

नागरखण्डे ।

उपवासप्रभावेन बलादपि च जागरात् ।

शिवरात्रि तथा तस्य लिङ्गस्यापि प्रपूजयेत् ।
ततो राज्यं समासाद्य पितृ-पैतामहं महत् ॥

नागरखण्डे ।

स्वयम्भूलिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादो गणतां गतः ॥

अन्यान्यपि व्रतस्य प्राधान्यप्रतिपादकानि वचनानि प्रागुदाहृतानि ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
शिवरात्रिनिर्णयः समाप्तः ॥

अथोऽस्यां रात्रावस्मिंल्लोके निवासादमावास्येति द्विधा निर्वचनं।

पद्मपुराणे।

अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः।
अच्छोदा नाम तेषान्तु मानसी कन्यका नदी॥
तमयामावसुन्नाम पितरं वीक्ष्य सङ्गता।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीड़नात्॥
योगाद्भ्रष्टा तु तेनासौ व्यभिचारेण भामिनी।
धरां न स्पृशते पूर्वं पपाताथ भुवस्तले॥
तिथावमावसुर्यस्यामिच्छां चक्रे न तां प्रति।
धैर्येण तस्य सा लोकैरमावास्येति विश्रुता।
पितॄणां वल्लभा यस्मात्तस्मात्तामक्षयकारिणी॥

परमसंयमिपितृगणाभिमतमच्छोदायाःप्रच्युतिहेतुभूतामावसुधैर्य-निवर्हणप्रतीतमहिमत्वादमावास्येत्युच्यते इत्येतदितिहासतात्पर्य्यं।

स्कान्दे नागरखण्डे।

अमानाम रवेरश्मिः सहस्रप्रमुखः स्थितः।
यस्यास्तु तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः।
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता॥

मत्स्य-वायु-ब्रह्माण्डपुराणेषु।

अमा वसेतां ऋक्षेषु यदा चन्द्र-दिवाकरौ।
एषा पञ्चदशीरात्रिरमावास्या ततस्तु सा॥

अमाशब्द एकत्रेत्यर्थः।

स्कन्द-ब्रह्माण्डपुराणयोः।

अमा नाम रवेरश्मिश्चन्द्रलोके प्रतिष्ठितः ।
तस्मात्सोमो वसत्यस्याममावास्या ततः स्मृता ॥

मत्स्य-वायुपुराणयोः ।

आश्रित्य ताममावास्यां पश्यतस्तु समागमौ ।
अन्योन्यं चन्द्र-सूर्यौ तौ तदा तौ दर्श उच्यते ॥

भगवतीपुराणे ।

कलाः षोडश सोमस्य शुक्ले वर्द्धयते रविः ।
अमृतेनामृतं कृष्णे पीयते विबुधैः क्रमात् ॥
कलामाद्यां पिबेदग्निर्द्वितीयां तपनः कलां ।
विश्वे देवास्तृतीयाञ्च चतुर्थीञ्च प्रजापतिः ॥
पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः ।
सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीं ॥
नवमीं कृष्णपक्षस्य पिबतीन्दुः कलामपि ।
दशमी मरुतश्चापि रुद्र एकादशीं कलां ॥
द्वादशीं पिबते काल धनाध्यक्षः त्रयोदशीं ।
चतुर्दशीं पशुपतिः कलां पिबति नित्यशः ॥
ततः पञ्चदशीं चैव पिबन्ति पितरः कलां ।
कलावशिष्टोनिष्पीतः प्रविष्टः सूर्यमण्डलं ॥
अमायां विशते यस्मादमावास्या ततः स्मृता ।
पूर्वाह्णे प्रविशत्यर्कं मध्याह्ने च वनस्पतिं ॥
अपराह्णे विशत्यप्सु स्वां योनिं वारिसम्भवः ।
अमां प्रविष्टः सोमस्तु शेषया कलयैकया ॥

तृण-गुल्म-लता-वृक्षान् निष्पादयति चौषधीः ।
तमोषधिस्थितं गावश्चरन्त्यापः पिबन्ति च ॥
तदन्नानुगतं गोभ्यः क्षीरत्वमुपगच्छति ।
तत्क्षीरमश्नतीश्चैव मन्त्रपूतं द्विजातयः ।
स्वाहाकार-वषट्कारैर्हुत्वाऽऽहुतयः क्रमात् ॥
हुतमग्निषु सोमाय पुनः सोमं विवर्द्धयेत् ।
एवं संक्षीयते सोमः क्षीणश्चाप्यायते पुनः ॥

ते च पूर्णमास्यमावास्ये द्विविधे पुराणात् ।

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधा स्थितिः ॥

अथानुमतिः सिनीवाली च चतुर्दशीमिश्रे, राका कुहूश्च प्रतिपन्मिश्रे ।

तथाच काठकश्रुतिः ।

या पौर्णमासी सानुमतिः, योत्तरा सा राका, या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति ॥

वृद्धवसिष्ठः ।

राका चानुमतिश्चैव पौर्णमास्यौ द्वय विदुः ।
राका सम्पूर्णचन्द्रा स्यात्कलोनानुमतिः स्मृता ।
रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता ॥

भगवतीपुराणे ।

यदा त्वस्तमियात्सूर्य्यं पूर्णश्चेन्दुरुपागमत् ।
युगपत्क्षोत्तरा राका तदा भवति पूर्णिमा ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥
अत्यर्थं राजते यस्मात्पौर्णमास्यां निशाकरः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥

बृहद्वशिष्ठः ।

दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।
तामेव च कुहूमाहुर्नष्टचन्द्रां महर्षयः ॥

मत्स्य-ब्रह्माण्डपुराणयोः ।

सिनीवालीप्रमाणस्तु क्षीणशेषो निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ॥

'सिनी' सिता अवसितेति यावत्, अस्या वालः 'वाली', सिनी चासौ वाली चेति सिनीवाली। 'सिनीवालीप्रमाणः' बालाग्रमात्र इत्यर्थः ।

कुहिति कोकिलेनोक्ते यावान्कालः समाप्यते ।
तत्कालसंज्ञिता ज्ञेया अमावास्या कुहूः स्मृता ॥
तथान्यौ चानुमत्या द्वौ लवौ काल उच्यते ।
लवौ द्वावेव राकाया ज्ञेयः कालोऽपराह्णिकः ॥

तथा ।

द्वौ लवौ अमावास्यायाः स कालः पर्वसन्धिषु ।
द्व्यक्षरस्तु कुहूमात्रः पर्वकालश्च स स्मृतः ॥

तथा ।

अनुमती च राका च सिनीवाली कुहूस्तथा ।
एतासां द्विलव' कालः कुहूमात्रा कुहूः स्मृता ।
इत्येष पर्वसन्धीनां कालो वै द्विलवः स्मृतः ॥

भगवतीपुराणे ।

अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना ।
एतासां द्विलव कालः कुहूमात्रा कुहूः स्मृता ॥

तत्र सन्धौ यजेतेति सन्धौ याग' कर्त्तव्य इति ।

तच्च चातिसूक्ष्मत्वेन कर्मानुष्ठानायोग्यत्वात् सन्धिशब्दः स्वार्थसन्निहितकर्मानुष्ठानयोग्य पूर्वापरं कालं लक्षयति ।

ननु सन्धिमभियजेतेत्यभिशब्दस्योपरीत्यर्थः प्रतिपदि कर्त्तव्यत्वात् सन्धेरुपरि यागकर्त्तव्यताप्रतीतेः सन्धिपूर्वकाले यागो न प्राप्नोति । नैष दोषः निपातानामनेकार्थत्वात् प्रत्यासन्नं सन्धिमभिलक्ष्य यजेतेति वाक्यार्थ, अन्यथा प्रतिपदमभियजेतेत्यप्युपर्य्यर्थपक्षापत्ते', प्रतिपदि व्यतीतायां तत उपरि द्वितीयायां यष्टव्यमिति प्रसज्येत । तस्मात् पूर्वापरभाविनि काले सन्धौ यजेतेति श्रुतिर्याग विधत्ते, अतएव सूत्रान्तरं "सन्धिमभितो यजेतेति ।

तथाह बौधायन ।

सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्य विषय प्राहुः पूर्वेणाथ परेण वा ॥

ततश्च सन्धिसन्निहित एव काले साङ्गस्य कर्मणोऽनुष्ठाने प्राप्ते व्यवस्थार्थमिदं नियमार्थ श्रुति ।"पूर्वेद्युरग्निवार्हिर्' करोति ऋषिसे वारभ्य गृहीत्वोपवसति । तथा "पूर्वेद्युरग्नि गृह्णाति उत्तरमहर्यजतीति ।

तद्यागद्वयं प्रतिपत्पर्वसन्धावित्याह गोभिलः ।

पर्वान्ता उपवस्तव्याः पर्वाद्योऽभियष्टव्या इति ॥

'पर्वान्ताः' पर्वद्वयः, गार्हपत्याधानादि कर्त्तव्यं, 'पर्वाद्यः' प्रतिपदः ।

निगमः ।

उपेत्प्राणं पर्वेदादिं पर्वयोः पर्वविभाग इति ।

प्राहुः लौगाक्षीयाः ।

आदित्यान्तश्च पर्वाणां यज्ञिया इति ।

कात्यायनः ।

पर्वादौ यागश्च इति[1] ।

भरद्वाजः ।

पर्वाद्या यष्टव्या भवन्तीति ।

आपस्तम्बेनापि ।

अमावास्यायां दीक्षा यजनीये वा पौर्णमास्यां यजनीये वा ज्योतिष्टोमः ।

इति पौर्णमास्यमावास्योपरितनदिनस्य प्रतिपद्रूपस्य यजनीयत्वमुक्तं ।

लौगाक्षिणात्र विशेषो दर्शितः ।

पौर्णमासीपर्वसन्धौ यागस्य चतुरो विदुः ।
सार्धयामावुभे दण्डौ यागे च मृतकर्मणीति ॥

---

(१) पर्वादौ इदिष्यतीति ग० ।

'औपवस्थ्य' उपवासदिवसमन्वाधानादिस्त्रीनंशान् विदुः । यागस्य चतुरोऽंशान् विदुः । 'अन्त्यावंशौ' पञ्चदशी-प्रतिपत्सन्धौ, तौ 'सम्पृजेत्' परित्यजेत् । अन्त्यमंशं पञ्चदश्या व्रतकर्मणि, यागे च प्रतिपदश्चतुर्थमंशं । अपरे तु "द्वावंशावुत्सृजेदन्त्याविति पाठमुदाहृत्य व्याचक्षते । आद्यः पादः पञ्चदश्या उपवसे अन्वाधानादौ परिवर्त्तव्यः, पश्चादेस्त्वन्त्यः पादो यागे परिहरणीय इति । एतच्च सम्पूर्णपञ्चदशीव्यतिरिक्तविषयं, तस्याः प्रथमपाद एवान्वाधानानुष्ठानात् । अन्ये त्वस्मिन्नेव पाठे प्रथमातिक्रमे कारणाभावादन्त्यः पादः पञ्चदश्याः व्रतकर्मणि परिहरणीय इति व्याचक्षते । एतच्च सद्यस्काल-पौर्णमासीव्यतिरिक्तविषयं, तस्याः पर्वचतुर्थांश एव तदनुष्ठानात् । कथं तर्हि यागे चतुर इत्यपेक्षिते यज्ञपार्श्वः ।

पञ्चदश्याः परः पादः पर्वादेः प्रथमास्त्रयः ।
कालः पर्वणि यागे स्यादन्यथा तु न विद्यते ॥

कात्यायनः ।

न पश्चिमं चतुर्थेंऽशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी ॥

तथा ।

प्रतिपद्याद्ययोर्भूतः पादश्चैकश्च तिष्ठति ।
यातयामः स विज्ञेयो न हि भवति हूयते ॥

न च पर्वचतुर्थांशादिके आद्ये यागकाले व्यवधाने सन्धौ यजेतेति श्रुतिविरोधः, सन्धेरतिसूक्ष्मत्वेन तत्र साङ्गप्रयोगानुपपत्तेः सन्निकृष्टापेक्षितसन्धिसमीपावधिविषयत्वात् श्रुतेः । न च यावति

काले यष्टुं शक्यते तावान्कालः सन्धिविधिसामर्थ्यादेव सिद्ध इति किमवधिविधानान्तरेणेति वाच्यं। सामर्थ्यानुसारेण व्यवस्थायां कस्य- चिद्द्रव्याद्यभावात् पञ्चमीपर्य्यन्तप्रयोगं समापयितुं अशक्नुवतः पञ्चमी- पर्यन्तं कालावधिरस्ति इति कालातिक्रमनिमित्तप्रायश्चित्तवैश्वानरादी- नामप्रसक्तिः स्यात् । नच यः शीघ्रं समापयितुं शक्तस्तदीयसामर्थ्यं सामीप्यावधिपरिच्छेदकं अतोऽन्यैरपि तत्र यष्टव्यमिति यत ऊर्ध्व- मुत्कर्षे प्रागुक्तं कर्मेति वाच्यं। कश्चिन्मुहूर्त्तत्रयेण समापयितुं शक्त इति मुहूर्त्तचतुष्टयेन समापयतः कालातिक्रमो जात इति प्रायश्चित्तादिप्रसक्तिप्रसङ्गात्तत्सामर्थ्यस्याव्यवस्थितपरिमाणत्वाच्च सा- मीप्यावधिपरिच्छेदकत्वमिति शास्त्रमेव वचनमवधिपरिच्छेदकं । अतएव बौधायनेनोक्तं "न खलु सन्धिः सूपपाद्यतीति। किञ्च स्वयं विशेषाक्षेपसमर्थोऽपि विधिर्दुर्बलप्रमाणप्रापितं विशेषं स्वीक- रोति यथा "अक्ताः शर्करा उपदधातीति वाक्यशेषोपस्थापितं घृतं यथा च "पशुना यजेतेति मन्त्रवर्णप्रापितं छागं तथा "सन्धौ यजे- तेति श्रुति-स्मृतिवाक्यप्रापितं पर्वचतुर्थांशत्वादिकं सन्धिपरिच्छेदकं स्वीकरोति । तस्मात्पर्वचतुर्थांशादिकाले यष्टव्यं तेन "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेतेति श्रुतिद्वय- युक्तसन्धिपरमिति केचित् । अपरे तु पर्वचतुर्थांशत्वेन व्याचक्षते । तत्राप्यहनि यागः कर्त्तव्यः "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजेतेत्यहर्विधानात् । तथाच सङ्कर्षणसूत्रं "अहनि वा तद्व्याख्यात- मिति । तत्रापि पूर्वाह्ण एव "पूर्वाह्णो वै देवानामिति श्रुतेः । तत्रापि प्रातरेव "पर्वणोयश्चतुर्थांश आद्याः प्रतिपदस्त्रयः । याग-

कालः स विज्ञेयः प्रातर्होमनीषिभिः" ॥ इति वृद्धशातातपवचनात् "प्रातर्यजध्वमश्विनाविति मन्त्रलिङ्गाच्च। तथा "अग्निरश्नोमाश्च यजत प्रातरनुवाकैरवन्निति च। "न तथ्य सायमश्नीयादेन प्रातर्यद्या-माणः स्यादिति प्रातःकालस्य यागसम्बन्धावगमाच्च। तथा कात्या-यनेनापि "यजेत वा प्रातरिति वचनात्ः कथितः। तथाच शुनकेनापि "तत्र यजेत यदेनं पद्यादस्तमितं पुरस्तादादित्यो-ऽभ्युदेतीत्यादित्योदयकाले यजेतेत्यवगम्यते। "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमतीत्युदयानन्तरमेव यागानुष्ठानमापस्तम्बेनोक्तं। यत्तु प्रागुदयादमावस्यायास्तन्त्रकरणमुक्तं "प्रागुदयादमावास्याया-मिति, तदुदयात्प्रागुपक्रममात्रमेव न निष्ठिरेव, "प्रागुदयादनुष्ठा-नेऽप्यित्यहर्विधानविरोधात्।

अथ गोभिलः।

चयः पौर्णमासीकाला भवन्ति सन्ध्या वास्तमितोदिता वोभयो सन्ध्योदिते चन्द्रे सन्ध्यास्तमिते रवौ चन्द्रोदये उत्तरा प्रायशस्तमया-दुभेरदेति तामुपवसेत्।

तथा।

सन्ध्यापौर्णमासीमुपवसेदा उत्तरामित्येके।

स्मृत्यन्तर च।

पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणः।

उपावसेदिति शेषः।

कात्यायनः।

पूर्वां पौर्णमासीमुत्तरां चोपवसेत्।

नच दिवा पर्वसन्धौ पूर्वेद्युरुपवासस्तदहर्याग: । रात्रिपर्वसन्धौ तदहरुपवासः परेद्युर्याग: ।

तथाच बौधायन: ।

अथोदाहरन्त्यूर्द्धमर्द्धरात्रात्पौर्णमास्यां चन्द्रमाः पूर्यते स एतं चापरराचं पूर्णो भवति सर्वं चाहरुत्तरस्या रात्रेरा मध्यरात्रादमावास्याया औपवसथ्येऽह्न्यूर्द्धं मध्यन्दिनाचन्द्रमसादित्यौ रमेते स एतं चापराह्णमथो भवति सर्वां चैतामुत्तरस्याह्न आ मध्यन्दिनादेतं सन्धिमभियजेतेति ।

अस्यार्थः । 'अथोदाहरन्ति' श्रुतिमिति शेष: । 'पौर्णमास्यामिति विषयनिर्देशः, 'ऊर्द्धमर्द्धरात्राच्चन्द्रमाः पूर्यते' पौर्णमासी प्रवर्त्तत इत्युक्तं भवति । 'स एतमपररात्रं', अनन्तरञ्च 'सर्वमहः', 'उत्तरस्या रात्रेरा मध्यरात्रात्', अनुवर्त्तते, ततो विच्छिद्यते, सोऽयं रात्रिसन्धिरुक्तः', अथामावास्याविषये 'औपवसथ्येऽहनि प्रागदिनात्पूर्वेद्युः, 'ऊर्द्धं मध्यन्दिनाचन्द्रमसादित्यौ रमेते' अमावास्या प्रवर्त्तते, 'स एतमपराह्णं', अनन्तरं सर्वां रात्रिं, 'उत्तरस्याह्नः', 'आ मध्यन्दिनात्', अनुवर्त्तते, ततः प्रतिपद्भवति, स एष दिवासन्धिरुक्तः । एतं सन्धिमभिप्राय सन्धौ पूर्वेद्युरग्नीनन्वाधायोत्तरेद्युर्यजेत । तथा एवं दिवासन्धिमभिलक्ष्य तदहः प्रातर्यजेतेति ।

एवं श्रुतिमुदाहृत्य तद्गतौ मध्यरात्र-मध्यन्दिनशब्दौ व्याख्यातुमाह,

रात्रिरिह पौर्णमास्यां सन्धौ या अतश्चरमावास्यायामिति ।

तेन श्रुतिगतौ मध्यरात्र-मध्यन्दिनशब्दौ रात्रिसन्धि-दिवासन्ध्योरुपलक्षकौ विवक्षिताविति प्रतिपादितं भवति ।

अनयोश्च पौर्णमास्यमावास्याविषययुगयोः प्रदर्शनार्थं वक्ष्यमाणमुत्तरसूत्रं ।

द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तरामेमावास्यामिति ।

अयमर्थः रात्रिसन्धि-दिवासन्धिमत्यौ द्वे पौर्णमास्यौ, दिवासन्धि-रात्रिसन्धिमत्यौ च द्वे अमावास्ये, तत्र दिवासन्धिः पूर्वामावास्या पौर्णमासी वा, रात्रिसन्धिरुत्तरा। अथ पूर्वामावास्योक्ता न तु पौर्णमासी तामुपमाध्याजेनाह, 'पूर्वां पूर्वां पौर्णमासीमिति'। अयमर्थः, पूर्वाममावास्यामिव पूर्वां पौर्णमासीं जानीयादिति। ततश्च दिवासन्धिमत्यां पौर्णमास्यां याग पूर्वेद्युरुपवास इति सिद्धं। तथा उत्तरा पौर्णमास्युक्ता न त्वमावास्या। तां पौर्णमासीं निरूपयन्नाह, 'उत्तरामुत्तराममावास्यामिति' उत्तरां पौर्णमासीमुक्तामिवोत्तराममावास्यां जानीयादिति। ततश्च रात्रिगतममावास्यां प्रतिपत्सन्धिमुपवास-यागयोर्मध्ये कुर्यादित्यर्थः।

आपस्तम्बस्त्वाह,

यदह पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेत् य पूरितेति वा, खर्विका द्वतीया वाजसनेयिनः समामनन्ति। यदहर्न दृश्येत तदहरमावास्या श्वो न द्रष्टार इति वेति।

तत्र खर्विकासूत्रार्थं उपरिष्टादुच्यते। 'यदहः पुरस्ताच्चन्द्रमाः पूर्ण उत्सर्पेत्', 'यदहर्न दृश्येत' इति सूत्रद्वयस्यायमर्थः। यदा तावत् राका-कुह्वोरेव चन्द्रमस पूर्णत्वमदर्शनं चेति ज्योतिःशास्त्रसिद्धं। यस्मिन् पुरस्ताच्चन्द्रमाः पूर्ण 'उत्सर्पेत्' उदियात्, 'न दृश्येत वा',

तत्र यद्यपराह्णे रात्रौ वा पर्वसन्धिस्तदा तां पौर्णमासीं अमावास्यां चोपवसेदिति, यदा तु पूर्वाह्णे मध्यन्दिने वा पर्वसन्धिस्तदा यस्मिन्नहनि चन्द्रमाः 'पूरिता' पूर्णोभवति, यस्य वा नद्दृष्टारोनेचितारो-भवेयुः, तामनुमतीं सिनीवाली चोपवसेदिति। "स पूरिता" "यो न द्रष्टार इति चेति सूचयत्ययमर्थः। उक्तञ्च भाष्यार्थसंग्रहकारेण।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
उपोष्या तत्र राका स्यात्सा पूर्णोत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्यानुमतिस्तत्र सा स पूरितलक्षणा॥
अपराह्णे क्षपायां वा पर्वसन्धिर्भवेत् यदि।
उपोष्या तु कुहूस्तत्र यदृश्येति लक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने पर्वसन्धिर्भवेद्यदा।
तत्रोपोष्या सिनीवाली यो न द्रष्टारमाचक्षेति॥

तदुक्तं निगन्धिभिः।

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या पूर्ण उत्सर्पिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
पूर्वेद्युस्तत्र चोपोष्या सा स पूरितलक्षणा॥
अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते।
तदहस्तत्र चोपोष्या यदृश्येतिलक्षणा॥
पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
तत्रोपोष्या सिनीवाली यो न द्रष्टारलक्षणा॥

ग्रह्यकारिकापि ।

पञ्चदशी प्रतिपच्च भवेते एकदिने महती यदि तस्मिन्पञ्चदशी प्रकृतेरुपवास पञ्चदशीष्टं तनुयादिति याग इति ।

तथा सङ्कर्षणकाण्डे गोविन्दोपाध्यायेनोक्तं ।

यस्मिन्नहनि मध्यन्दिने पूर्व एव विक्रम-सन्निपातौ तत्र पूर्वेद्युरुपवास "य परिलेतितवा, "यो न इत्यार इत्यस्य विषय । यत्राप-राह्णे रात्रौ वा विक्रम सन्निपातौ तत्र तदहरुपवास "यदह पुरस्ता-चन्द्रमा पूर्ण उत्सर्पेत्", "यदहर्न दृश्येतेत्यस्य विषय इति ।

देवस्वामिनाप्युक्तं ।

यदि पूर्वाह्णे पर्वसन्धि समाप्येत ततो नितरामेव च शोभन, यदि पुनरपराह्णे रात्रौ वा तदहरुपोष्य श्वोभूते याग इति ।

तथाच लौगाक्षि ।

पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

अत्र केचित् सन्ध्याया पर्वसन्धौ व्यवस्थापकवचनान्तराभावात् प्रायेण तथापि रात्रिशब्दप्रयोगाच्च तापि रात्रिशब्देन स्पष्टत इत्याहु'। तदयुक्तं । सन्ध्या-रात्र्योर्भेदाक्षणायाच कारणाभावात्, सन्ध्यायां पर्वसन्धौ च पूर्वेद्युर्यागस्य "आवर्त्तते यदा सन्धिरित्यनेनैव सिद्धे' । एतेन "स वै सत्यमेवोपवसेत" 'स वा उत्तरामेवोपवसेत्" इति श्रुतिद्वयस्य व्याख्यात ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदियाद्रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमियाद्रविः ॥

इत्यादीनि पक्षव्यवस्थया यानि वचनानि तानि तिथ्यन्तरविषयाणि । यत्तु "पूर्वः पूर्वो यजमानोऽवतीयानिति वाक्यं शब्दास्तचोदिते काले प्राप्ते यावद्यावत् पूर्वं यजते तावत्प्रशस्तमिति प्रतिपादयत्तत्रैव काले विलम्बं निवारयति न पुनश्चोदितकालानादरेण पूर्वदिनं प्रशस्तमिति। तथाच सति चतुर्दश्यादिष्वपि तिथिषु यावद्यावदधस्तनतिथौ यागः क्रियते तावत्तावत्सुतरां प्रशस्तमित्यापद्यते। तस्मात्पूर्वोक्तादिपर्वसन्धिभेदेन व्यवस्था युक्ता ।

अथ केचिदाहुः पूर्वापराह्न-मध्याह्नास्त्रेधाविभागाश्रयणेन पञ्च पञ्च मुहूर्त्तात्मिका अत्र वेदितव्या इति । ननु त्रेधा विभागपक्षे मध्यन्दिनाख्यघटिकायां पर्वसन्धौ प्रातःकाले पर्वचतुर्थांशाभावात्तृतीये भागे यागः प्राप्नोति। तच "पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तोमनीषिभि." इत्येन विरुध्यते । तदयम् । कथं प्रात.काले पर्वचतुर्थांशाभावः, प्रातःकालस्य त्रिमुहूर्त्तमात्रत्वादिति चेत् श्रुतः "रेखाप्रभृत्यथादित्यामुहूर्त्तास्त्रय एव तु । प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चमः" ॥ इति वचनादिति चेत् । न । तस्य पञ्चधा विभागपक्षाश्रयत्वात् । अत न पूर्वाह्नपरिमित एव प्रातःकालः यतो मीमांसाभाष्यकारोदाहृतायां श्रुतौ "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य." इति मध्याह्नप्राक्तन भागोऽपि प्रात.काल प्रतीयते। यदि मध्या-

स्मात् प्राक् प्रातःकालादूर्ध्वं कालान्तरं स्यात् ततः प्रातर्मध्याह्ना-स्तमयकालेषु ऋग्यजुःसामवेदैरागमने सूर्य्यस्य कालान्तरे वेदशून्य-स्यागमनं स्यात्। तच्च "वेदैरशून्यस्त्रिभिरेति सूर्य्य इति विरुध्यते। शाखान्तरे "ऋग्भिः पूर्व्वाह्ण इति पाठान्तरात् प्रातःपूर्व्वाह्णयोरैक्याव-गमः, अतएव प्रथमं प्रहरमभिधायाहुः स्मार्त्ताः। "स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इत्येवमपि पूर्व्वाह्णाद्विभक्तेप्रातःकालः तर्हि तत्रोपक्रमस्य पूर्व्वाह्णे यागः। यदप्याहुः। "प्रातर्द्दैवमिति प्रोक्तं तत्रो-पपद्यत इति च।

तदप्युपक्रमाभिप्रायेणैव। पूर्व्वाह्णैकदेशत्वेप्रातःकालः तर्हि पूर्व्वाह्णविव-क्षया वचनद्वयेऽपि प्रातर्ग्रहणं, अन्यथा "पूर्व्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणां अपराह्णः पितॄणामिति श्रुतिविरोधः।

पश्चादेव कुर्व्वन्ति सदा पश्चादिकं चरुं।
पूर्व्वाह्ण एव कुर्व्वन्ति विद्वेऽस्यन्ये मनीषिणः॥

इति कात्यायनादिवचनात्। अथ यत् प्रातरनुदिते जुहोती-त्यत्रापि दर्शनात्।

षष्ठेऽध्याये जैमिनिना "उदगयनपूर्व्वपक्षपुण्याहेषु देवानि स्मतिरूपा-ण्यन्यार्थदर्शनादित्युक्ते भाष्यकारेणान्यार्थसन्दर्शने "पूर्व्वाह्णो वै देवा-नामिति दर्शितं।

अत्र च कर्कोपाध्याय, "पूर्व्वाह्णे दर्शयाग इति। अनेन "प्रातर्ह-होमनीयैर्भिरित्यादि व्याख्यातं। तेनैहिविषये वेधा विभाग इति सिद्धमिति। तदयुक्तं। अत्र हि पूर्व्वाह्णापराह्णौ द्विधा विभक्तस्याह्नः पूर्व्वापरभागौ विवक्षितौ। "आवर्त्तनात्तु पूर्व्वाह्णोऽप्यपराह्णस्ततः परः।

मध्याह्नस्तु तयोः सन्धिर्यदावर्त्तनमुच्यते"। इति वचनात् । न च पूर्वा-ह्णादिशब्दानां त्रेधा विभक्तस्याह्नः क्रमेण भागत्रयपरत्वं। "आवर्त्तने यदा सन्धिस्तत् पूर्वमथापि वा। तदह्वर्याग इष्येत परतश्चेत्परेऽहनि" इत्यादिवचनात् वक्ष्यमाणवक्रवचनविरोधप्रसङ्गाच्च। किञ्चान्यस्मिन् पक्षे मध्याह्नस्यावर्त्तनादुपरि घटिकापञ्चकपर्यन्तत्वात् तत्र सन्धौ तदहरेव याग' प्रसज्येत। न च प्रसज्यतामिति वाच्यं। तत्र प्रातः पर्वचतुर्थांशादिविहितकालासम्भवेन "पर्वणोयश्चतुर्थांश इत्यादिवच-नविरोधात् प्रातःकालस्य त्रिमुहूर्त्तत्वात्।

तथाच व्यास'।

सुहूर्त्तत्रितय प्रातस्तावानेव तु सङ्गव इति।

पराशरोऽपि।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्ते गते रवौ।

प्रात स्तनस्ततो कालोभागश्चाह्नः स पञ्चमः इति॥

पद्मपुराणेऽपि।

रेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव तु।

प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चम.॥

स्कन्दपुराणे प्रभासखण्डे।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तस्थिते रवौ।

प्रात काल इति प्रोक्तो भागश्चाह्न' स पञ्चम'॥

एवमन्येष्वपि प्रात शब्दार्थप्रतिपादकेषु वाक्येषु त्रिमुहूर्त्तात्मकः प्रात काल' कथित, न तु त्रिधा विभक्तस्याह्न' पूर्वो भागः प्रात काल-इति क्वचिदपि श्रूयते। यस्तु श्रुतौ प्रयोग. स न मुख्य' अनेकार्थत्वस्यान्या-

यत्वात्। सनाडिकाः प्रातःकाल इति प्रोक्तं स्थापनारोपणादिष्विति सोऽप्येवमेव। ननु सार्द्धप्रहरः प्रातःकाल "स एवाभ्यर्द्धसंयुक्तः प्रातरित्यभिधीयते" इति वचनात्। 'सः' प्रहरः, अधिक उपरि अर्द्धसंयुक्तः सार्द्धप्रहरः। ततश्च मध्यन्दिनान्त्यघटिकायां पर्वसन्धौ पञ्चसु घटिकास्वतीतासु प्रातःकालः पर्वचतुर्थांशश्च समाप्यतीति तदानी यागो यागः करिष्यते। तदुक्तं। "उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति प्रागुदयादमावास्यायाः" इति आपस्तम्बवचनात्। त्रिमुहूर्त्तात्मकः प्रात काले यदा पर्वचतुर्थांशसम्भवस्तदेतद्वचन भविष्यतीति चेत्। न। सङ्कोचे कारणाभावात्। न चादित्ये उदिते पौर्णमास्यास्तन्त्रप्रक्रम आदित्योदयात् प्रागमावास्यायास्तन्त्रप्रक्रम इत्यस्तु पञ्चघटिकास्वतीतासु करिष्यत इति वाच्यं। अङ्गप्रधानवत्यां भावनायां युगपत्पुरुषं प्रवर्त्तयता प्रयोगवचनेन मध्ये विलम्बनिषेधात्। तस्मादचनद्वयपर्य्यालोचनया त्रिमुहूर्त्तात्मके सार्द्धप्रहरात्मके च प्रात कालेऽवगम्यमाने आपस्तम्बवचनानुरोधात् त्रिमुहूर्त्तात्मक एव ग्राह्यः, तस्मादस्मिन् काले यागसिद्ध्यर्थं अस्मदुक्त एव विभाग आश्रयणीयः। ननु द्वेधा-विभागे यथावर्त्तनादुपरि घटिकामात्र एव सन्धिसम्भोत्तरेद्युरेव यागइति तथापि कात्यायनवादवचनविरोधस्तुल्य एव। नैवं। पर्वणो-यश्चतुर्थांश इत्यादिकात्यायनवाक्यादन्यथावगतेर्भवितव्यं, तदेतद्यागस्य कालान्वयेनेत्यभ्युपगन्तव्य, पर्वमात्रोत्तरेद्युर्यागे क्रियमाणे न यागस्य कालान्वय इति पूर्वेद्युरेव याग इत्यविरोध। नन्वेवं तर्ह्यपराह्ण-सन्ध्यायुत्तरेद्युर्यागविधान विरुध्येत। नैव। यत्रापराह्णे पर्वसन्ध्यायुत्तरेद्युः प्रतिपच्चतुर्थांशो यागो [illegible] भवति तत्राभ्युदयेष्टापराह्णश्चात्र प्रदय-

मित्यविरोध, युक्तञ्चैतत्, अन्यथा येनक्कालो ऽतिखर्वे तदहस्तन क्रियिदूने चतुर्दशघटिकामात्रे आवर्त्तन भवति तदा तत्रैव तिथि-वृद्धौ कदाचिच्छोडशनाडिकोऽपि चतुर्थांशो भवति तत्रावर्त्तनादु-परि घटिकामात्रसम्भावुत्तरेद्युरेव याग प्रसज्येत। न च तद्युक्त तत्र विहितकालसम्भवात् "न दृष्टमिति निषेधात् पूर्व्वेद्यु सम्भवाच्च । अतोऽपराह्णशब्दसङ्कोच एव न्याय्य, "आ मध्यमान्मुहूर्त्तादि दैव कार्यं प्रशस्यत इति वचन प्रात कालविधानात्तद्व्यतिरिक्तविषय भवतीत्येतदह्नोकार्य्ये अन्यथा त्रिधा विभक्तस्याह्नस्तृतीये भागे प्रातरा-त्मके भवता यागाङ्गलेन बौद्धेनोक्तेऽपि यागप्रसङ्गात्। तस्मात् द्वेधा विभक्तस्याह्न पूर्व्वापरभागावेव पूर्व्वाह्णापराह्णावत्र ग्रहीतव्यौ, तत्रापराह्णादिगते पर्व्वसन्धौ परेद्युर्याग पूर्व्वाह्णगते पर्व्वसन्धौ तदह-र्याग । यदा तु पूर्व्वापराह्णयो सन्धौ पर्व्वसन्धिस्तदा तदहरेव याग-इति प्रतिपादनार्थं मध्याह्नग्रहण। मध्याह्नशब्दो हि पारिभाषिक मध्याह्नमुहूर्त्त्याह्नो मध्यम क्षणमेवात्र प्रतिपादयति। अत एव शाता-तपोऽपि मध्यमशब्दमेव पठति ।

पूर्व्वाह्णे मध्यमे वापि यदि पर्व्व समाप्यते ।
तदोपवास पूर्व्वेद्युस्तदहर्याग इष्यते ॥

यत्तु "पूर्व्वाह्ण प्रहर सार्द्धं मध्याह्न प्रहरन्तथा। आ तृतीयादप-राह्ण सायाह्नस्ततः पर"॥ इति गोभिलवचनाच्चतुर्धा विभाग, यच्च "मुहूर्त्तत्रितय प्रातस्तावानेव तु सङ्गव । मध्याह्नस्त्रिमुहूर्त्त स्यादप राह्णोऽपि तादृश । सायाह्न त्रिमुहूर्त्तस्तु सर्व्वधर्म्मबहिष्कृत "॥ इति व्यासवचनात्पञ्चधाविभाग सोयुक्तरीत्या त्रिधाविभागवत् कर्म्मान्तर-

विषयः, आश्रितश्चायं द्विधा विभागः सकलसूत्रभाष्यकृद्भिर्वृद्धैरपि निबन्धकृद्भिः, युक्तश्चेति स एव स्वीकार्यः। तत्र रात्रिसन्धौ परेद्युरेव यागः "अपराह्णेऽथवा रात्राविति लौगाक्षिवचनात्" "पश्चान्ना उपवसथ्याः पश्चाद्योऽभियष्टव्या इति गोभिलवचनाच्च। मध्यन्दिनसमयादूर्द्ध्वं पर्वसन्धौ चतुर्दश्यामस्तमयात् प्रागूर्द्ध्वं वा अमावास्यायां अमावास्यायाः हस्तराविद्योतित्वे तत्रैव दोषादि युक्तं "यद्युपदेष एतां रात्रिमिहामावसति तस्मादमावास्या नाम तं गोभिरनुष्ठाय समभरन्निति श्रुत्या रात्रियुक्तायाममावास्यायां दध्यादिरूपस्य सोमस्य सम्भृतिर्देवैः कृतत्वकत्वात्। न च "पश्चाद्योऽभियष्टव्या इति वचनविरोधः, अहोरात्रव्यापिन्यामपि तस्य सम्भवात्। न च "अपराह्णेऽथवा रात्रावित्येतद्विरोधः, तस्य पौर्णमास्यामपि सम्भवात् स्मृतित्वेन दुर्बलत्वाच्च। उच्यते। रात्रिशब्दस्य तिथ्येकदेशलक्षकत्वात् "तदहरेवैष पुरस्तान्न दृश्येत तदहरुपवसेदिति क्वचिदहःशब्दस्यापि दर्शनात्, "स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेदिति क्वचिदहःशब्दस्यापि दर्शनात्, "स यत्रैष एतां रात्रिं पुरस्तान्न पश्चाद्दृशे" इत्यत्र पूर्वस्मिन् रात्रिशेषे पुरस्तादर्शनं उत्तररात्र्यादौ पश्चादेकस्यामेव वा पुरस्तात्पश्चाच्चादर्शनं वक्तव्यं। आद्ये पक्षे वा दिवामावास्या सैव स्यात्। द्वितीये पक्षे उत्तररात्रावपि तद्रूपं विद्यते इति सैव भवेत्। अथोच्येत उत्तररात्रौ प्रतिपदो विद्यमानत्वाच्छास्ततो दर्शनं प्रतिपद्यपि भवतीति।

आह कर्कोपाध्यायः।

दर्शनं शास्त्रतः प्रतिपद्येव भवतीति।

कात्यायनस्त्वमावास्याशेषे आह।

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमेंऽशे च ततः किल भवेदणुः ॥ इति ।

तदयत् यदि रात्रिसम्बन्धादपि प्राक्तनी निषिद्ध सिद्धं तत उद्-यात्प्राक् प्रतिपत्प्रवेशः तत्रोपवासो न कर्त्तव्यः पूर्वदिने चतुर्दशी रात्रावपि विद्यत इति तथापि चन्द्रक्षयाच्च कर्त्तव्य एव ।

उक्तञ्च स्मृतौ ।

भूतदिने चतुर्दश्यां अमां कुर्वन्ति ये द्विजाः ।
विहारं पितृयज्ञश्च तत्सर्वं निष्फलं भवेदिति ॥

'विहारः' विहरणमित्यर्थं आहवनीयादेः इत्यर्थः ।

तत्र तल्लोपः प्रसज्येत तस्मात् "पञ्चाम्ना उपवस्तव्याः पञ्चाद्योऽभि-यष्टव्या इत्येतदेव युक्तं तस्माद्रात्रिसन्धौ परेद्युर्यागः । ननु रात्रि-योगिन्यामपि पञ्चदश्यां प्रतिपदि त्रिमुहूर्त्तायां द्वितीयायां "त्रिमु-हूर्त्ता द्वितीया चेदिति वचनात् पञ्चदश्यां यागः कस्मान्न क्रियते विशेषावगमादिति ब्रूमः । यद्यपि रात्रिसन्धिशास्त्रं तदुत्तरस्यामपि प्रतिपदि सावकाशं, त्रिमुहूर्त्तद्वितीयाशास्त्रं दिवासन्धौ सावकाशं, यद्यपि च "पञ्चाद्यो यष्टव्या इत्येतदुपमर्द्दैनैव इतरेतद्बाधकाशित-दोषाभावस्तथापि रात्रिसन्धिशास्त्रस्यानन्यथासिद्धत्वात् "पञ्चाद्यो यष्टव्या इत्यत एवोत्तरदिने यागे प्राप्ते पर्वचतुर्थांशस्य प्रातः पूर्वदिने प्राप्त्यभावाद्यागप्राप्त्यभावे त्रिमुहूर्त्तशास्त्रे यावत् पूर्वस्मिन्नहनि प्राप-यितुमवकाशमपेक्षते तावद्रात्रिसन्धिशास्त्रं दृष्ट्वा विषयान्तरमेव चिन्त-यति, तत्रोपरिष्टाद्वक्ष्यामः। तस्मात् रात्रिसन्धौ परेद्युर्याग इति सिद्धं, अपराह्णसन्धावपि परेद्युर्यागः ।

ननु।

चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।

श्वोभूते प्रतिपद्यत्र भूते कथादिकी क्रिया॥

इति वचनात् पूर्वेद्युः कथाश्च गृह्यते। तथाच वचनान्तरं।

चतुर्दशी चतुर्याममभावास्या न लभ्यते।

श्वोभूते प्रतिपत्तेन् स्यात् पूर्वाह्णेनैव कारयेत्॥ इति॥

यद्यपि चतुर्दश्यां यामचतुष्टयव्यापिन्यमावास्या न लभ्यते किन्तु तदेकदेशव्यापिन्येव तथापि श्वोभूते प्रतिपदस्ति चेत् पूर्वेद्युरेवोपवास-इत्यर्थः। कात्यायनवचनेन पश्चादभ्युदय अमावास्येनेष्टेति, यथोप-वासदिने प्रतिपत्सम्भवः तत्र पितृविस्कोष्टिः प्रायश्चित्तत्वेनोक्ता। उच्यते। तस्याः प्रतिपदि सद्भावे द्वितीयायद्भावेऽप्युपपत्तिरन्यथा सिद्धा-पराह्णप्रत्यस्यात्र बौधायन उक्ता, तस्माद्द्वितीयेऽहनि यागः। ननु यदा पूर्वेद्युः प्रात. पर्वचतुर्थांशाभावः परेद्युश्च प्रातः पर्वचतुर्थांशः तदा कस्मिन्नहनि यागः क्रियते। न तावत् पूर्वेद्युः तत्र प्रातःकाले पर्व-चतुर्थांशादिसमावेशाभावेन यागकालाभावादपराह्णपर्वसन्धित्वाच्च। नापि परेद्युर्यागः तत्रापि विहितकालाभावात्।

अत्र केचिदाहुः अपरेद्युर्यागः कर्त्तव्यः पूर्वेद्युः पर्वचतुर्थांशादि-विहितकालासम्भवात् प्रतिपच्चतुर्थांशे यागनिवर्त्तकाभावाच्च। यस्त्व-यमस्ति निषेधो निवर्त्तकः।

न यष्टव्य चतुर्थांशे यागैः प्रतिपदः क्वचित्।

रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनीति॥

उच्यते मध्याह्नसन्धिविषयोऽयं प्रतिषेधो नापराह्णसन्धिविषयः, तत्र

परेद्युर्यागविधानात् । ननु अपराह्णसन्धावेव परेद्युर्यागप्राप्तेस्तत्र च प्रतिपच्चतुर्थांशासम्भवात् प्राप्तिपूर्वकत्वाच्च निषेधस्य तत्रैव सामञ्जस्यं मध्याह्नसन्धौ तु पूर्वेद्युर्यागविधानात् प्रतिपच्चतुर्थांशगन्धोऽपि नास्तीति निषेधानुपपत्तिः । अत्रोच्यते । "पक्षादयोऽभियष्टव्या इत्यस्य सम्पूर्णायां तिथौ खण्डतिथौ वा साधारणत्वं, तत्र द्वितीयेऽहनि प्रतिपच्चतुर्थांशस्य प्रातःकाले सम्भवात् प्राप्तिपूर्वकत्वं प्रतिषेधस्य घटत एव । न चैतावता प्रतिपच्चतुर्थांशे यागानुष्ठाने प्रत्यवायभाक्त्वं । "पक्षादयोऽभियष्टव्या इति तत्र यागस्य विहितत्वाद्विहितप्रतिषेधे च विकल्प एव स्यात् ।

उक्तञ्च भट्टवार्त्तिके ।

यद्यपि प्राप्य यत्किञ्चिद्विधिना तुल्यगोचरः ।
प्रत्यवायमतिं कुर्य्याद्विकल्पाश्रयणाय तत् ॥
दृष्टौ विधि-निषेधौ च तुल्यवीर्य्यैकगोचरौ ।
विकल्पेन तयोरेकः प्रामाण्यमनुतिष्ठतां ॥
अङ्गीकृतनिषेधानां नैव दोषोऽस्त्यकुर्वतां ।
चोदनालक्षणत्वन्तु न प्रामाण्यं विधेस्तदा ॥
विधेः प्रामाण्यपक्षे तु प्रतिषेधगिरां ततः ।
चोदनालक्षणे धर्मे न दोषोऽस्त्यनुतिष्ठतामिति ॥

न च "पक्षादयोऽभियष्टव्या इत्यस्याः प्रतिपद्यागचतुष्टयेऽपि साधारणत्वेन सावकाशत्वात् "नयष्टव्यं चतुर्थांशे इत्यस्य प्रतिपच्चतुर्थांशविषयत्वेन निरवकाशत्वात् विकल्पो न युक्त इति वक्तव्य । यतः सामान्यविषयस्यापि विधेर्विशेषनिषेधेन नात्यन्तबाधः क्रियते तदधीनलाभत्वात् ।

तदुक्तं वार्त्तिककारैस्तत्र टीकायां ।

अल्पदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति प्रतिषेधः प्रद्वेषेणारब्धविधाने चेत्यत्र वक्ष्यत इति ।

तस्मात्स्वात्मलाभार्थं स्वात्मप्रतिषेधासम्भवात् "नानुयाजेषु ये यजामहे करोती"तिवद्विकल्पः, न तु तद्वदेव, नहि पर्युदासाश्रयणाद्विकल्पः परिहर्त्तुं शक्यते। तथाहि साक्षाच्चोदितकालस्य पर्वचतुर्थांशप्रतिपदाद्यभागत्रयात्मकस्य प्रातःकाले दिनद्वयेऽप्यविद्यमानत्वेन यागानुपपत्तेर्नित्यचोदितकर्मणः परित्यक्तुमशक्यत्वात् प्रयोगवचनसामर्थ्येन किञ्चिद्विगुणेऽपि काले यष्टव्यमित्यापतिते पूर्वेद्युः प्रातःकाले पर्वचतुर्थांशमात्रेऽपि पर्वमात्रस्याबाधाद्यष्टव्यं, अथ वा परेद्युः प्रतिपदाद्यभागत्रयाभावेऽपि प्रतिपन्मात्रस्याबाधाद्यष्टव्यमिति प्रतिपच्चतुर्थांशेऽपि पाक्षिकी प्राप्तिर्न देवैरपि वारयितुं शक्यते। तस्मात्सर्वथा पर्युदासप्रतिपादने विकल्पस्यापरिहार्यत्वादरं मुख्यार्थत्वाय विकल्पप्रसक्तावपि प्रतिषेधवाचक एव नञस्तु। किञ्च पर्युदासासम्भवादपि प्रतिषेधः। तथाहि यदि तावत् प्रतिपच्चतुर्थांशस्य वर्जितत्वाविशेषात्। अथ चतुर्थांशवर्जितायां प्रतिपदि यजेतेति तर्हि पर्वचतुर्थांशे यागो न प्राप्नोति। अथ प्रतिपच्चतुर्थांशवर्जिते चोदिते काले यजेतेत्युच्यते तर्ह्यपराह्णपर्वसन्धावुपक्रमस्य चोदितकालत्वात्तत्रापि प्रतिपच्चतुर्थांशमात्रमेवावशिष्टमिति तत्पर्युदासत्वेन कुत्रान्यत्र विधीयते। अथ नोद्यन्तमादित्यमीक्षेतेति धात्वर्थेन नञः सम्बन्धादनीक्षणमङ्गत्ववद्यागसंकल्पो विधीयते। उच्यते। युक्तं तत्र रागप्राप्तमीक्षणं पर्युदस्यत इति। इह त्वपराह्णपर्वसन्धौ परेद्युर्यागः शास्त्रप्राप्त इति न

पर्युदसितुं शक्यते । न चात्र यथा चोदकप्राप्तस्यार्षेयवरणस्य "नार्षेयं वृणीते" इति प्रत्यक्षोपदेशेन बलीयसा पर्युदासः तथा न शक्यते वक्तुं । उभयोरपि प्रतिपच्चतुर्थीश्राद्धप्रापकपर्युदासयोरुपदेशशास्त्रत्वात् । न च यथा यागमात्रे प्राप्तस्य ये यजामहे इत्यस्य यागविशेषेष्वनुयाजेषु पर्युदासन्यायात् सम्भवति । न हि पर्युदासशास्त्रस्य पूर्वाह्णापराह्णादिपर्वसन्धिसाधारण्यस्यापराह्णादिपर्वसन्धिशास्त्रं प्रति विशेषशास्त्रता सम्भवति । न च पर्युदासशास्त्रस्य श्रुतित्वेन बलीयस्त्वं, श्रुतित्वासिद्धेः । तथाहि भाष्यकारेण चतुर्थीश्राद्धनिषेधः कात्यायनवचनादित्युक्ता "न यष्टव्यं चतुर्थ्याम्' इति श्लोकः पठितः । तस्माच्छ्रुतिमूलत्वाभिप्रायेण "श्रुतिरेषा सनातनी"त्युच्यते । ननु पर्युदासवचने तव्यप्रत्ययश्रवणेन विधेः स्पष्टत्वादपराह्णादिपर्वसन्धिवचने वर्त्तमानापदेशत्वेन कल्प्यविधित्वादित्यस्वप्राप्तौ वैषम्यं, नैतद्वं, प्रतिपदा पर्युदस्यते चतुर्थीश्राद्धो वा यागो वेति सन्देहो यावता विलम्बेनापनीयते तावतैवात्रापि वर्त्तमानापदेशो वा पञ्चमलकारो वेति सन्देहोऽप्यपनीयत एव । पर्युदासे नञोपलक्षणार्थत्वमित्यधिको दोषः । तस्मात् पर्युदासासम्भवात् प्रतिषेधोऽवश्यम्भावी । एवं विकल्पे स्थिते मध्याह्नसन्धिविषयत्वं निषेधस्यापराह्णसन्धिविषयत्वं विधेरिति । यतो लौगाक्षिणा पूर्वाह्णापराह्णसन्धिविषयभेदेन पूर्वान्तरदिनयोर्यागव्यवस्था कृता "पूर्वाह्णे वाथ मध्याह्ने इत्यादिना । यत्तु "पर्वणोयश्चतुर्थांश इति वाक्यन्तदपि न प्रतिपच्चतुर्थांशे यागं निवारयति । तथाहि न तावच्चतुर्थांशं निषेधति, अविहितत्वान्निषेधत्वेनाप्रतीतेः । नापि पूर्वेषामन्येषामंशानां विधायकत्वेनार्थादितरमंशं निवारयति, विधिविभक्त्यश्रवणत्वेन विधित्वस्याप्रतीतेः ।

मप्युपरि हि देवेभ्यो धारयतीतिवद्विधिः कल्प्यते, सिद्धवदनुवादात् प्रमाणान्तराविरोधाच्च विधयः कल्प्यन्ते। इह तु "पर्वण्येयश्चतुर्थ्यां च इत्यत्र प्रतिपद्यागस्यविधाने चतुर्थ्यानिवृत्तिप्रयोजने कल्प्यमाने "न पठेच्च चतुर्थ्यां" इति चतुर्थ्यामध्य पाक्षिकाध्यनुज्ञाशास्त्रं विरुध्येत। न च वाच्य विशेष इति विधिप्रत्ययः, "अर्हे कृत्यतृचश्चे-त्यर्हार्थेनापि घटमानत्वात्, भवतु वा विधिप्रत्ययः, तथाप्यनपेक्षिते ज्ञाने न तु यजतौ। अथ निर्वपत्यादिभतिवदनपेक्षितधात्वर्थतोऽपि विधिरिष्टमर्थं विधत्त इति। उच्यते। यद्यपि क्लिष्टकल्पने वेति न विलिष्टचतुर्थ्याध्ययनानुज्ञाशास्त्रबाधने सामर्थ्यं। तथापि धात्वर्थः श्रुत्या विधीयते तद्रूपत्वे धात्वर्थोऽन्यत्र विधीयते धात्वर्थे वान्यत् विधीयते। यच्च लक्षणैवान्यत्र विधीयते तदतिक्लिष्टं। अथ तद्दोषपरिहारार्थं धात्वर्थो ज्ञानमेव विधीयते कथं तर्हि कालस्य प्राप्तिः। अथ ज्ञाने विधीयमाने ज्ञेयसंस्काररूपमिति ज्ञानसंस्कार्यस्य कालस्य यागे विनियोगमन्तरेणानुपपद्यमानं विनियोगविधिं कल्पयतीत्युच्यते। तन्न संस्कारानुपपत्त्या संस्कार्यविनियोगकल्पनायाः सक्त्वधिकरणे निराकृतत्वात्। ननु "सोमाभावे पूतीकानभिषुणुयादिति तमसौ भक्ष प्रयच्छेदिति च भक्षाभिषवसंस्कारान्यथानुपपत्त्या फलचमसस्य पूतीकानां च यागविनियोगो यथा कल्पितस्तथेहापि ज्ञानसंस्कार्यस्य कालस्य विनियोगविधिः कस्मान्न कल्प्यते। उच्यते। युक्तं तत्र सोमेन यजेतेति क्रतुविनियोगस्य सोमस्य सोममभिषुणोतीति सोमचमस इति च समाख्यया भक्षाभिषवसंस्कारविधिर्न विरुध्यते इति, सिद्धे भक्षाभिषवयोः सोमसंस्कारत्वे

निरूढसंस्कारस्य द्रव्यान्तरसंस्कारविधानेन सुतरां द्रव्यस्य पूर्वद्रव्यसमानकार्यत्वकल्पनं, इह त्वनिरूढोऽज्ञातसंस्कारः संस्कार्यस्य कालस्य क्लृप्तमानान्तरलभ्यविनियोगादृते न निर्वहति सक्ताधिकरणन्यायादिति युक्तमेव ।

किञ्च सोमद्रव्यस्यैव विनियुक्तस्य कदाचिदलभ्यमानस्य प्रतिनिध्युपादाने प्राप्ते नियममात्रं क्रियते "पूतीकानभिषुणुयादिति, न त्वपूर्वो विनियोगः क्रियते । न हि विनियोजकान्तरेण विना सिद्ध्यति, तस्मात् "समुद्रं मनसा ध्यायति पृथिवीं मनसा ध्यायति देवस्य मनसा ध्यायतीत्यादावारादुपकारकत्वमेव कालज्ञानविधानस्येति न काले प्रापकत्वं । भवतु वा ज्ञानसामर्थ्यात्सिद्धे ज्ञानस्यार्थसिद्धत्वेनाविधेयत्वात् कालविधित्वमेव कालज्ञानविधानस्येति । तथापि यागकाल इत्येकस्मिन् पदे किञ्चिदुद्दिश्य किञ्चिदुपादीयत इत्येतदनुपपन्नमेव, यथैतत् षड्भिः सिद्धतरं यजतीत्यत्रापक्तुं प्रयम्भ इतिवत्, यथा हि वषट्कर्तुर्विशेषिणभक्षे प्राथम्यसम्बन्धो विधातुं न शक्यते तथा पदान्तरोपात्तपर्वचतुर्थ्यादिविशेषितस्य कालशब्दार्थस्य यागकाल इति समासपदैकदेशप्रतिपादितस्यैकदेशान्तरार्थेन सह सम्बन्धो विधीयत इति नोपपद्यते समस्यमानपदयोः परस्परसम्बन्धात् प्राक्पदान्तरसम्बन्धानुपपत्तेः "परिपूर्णं पदं पदान्तरमाकाङ्क्षतीति न्यायात् । अथ "पर्वणोऽयश्चतुर्थ्या आद्या" प्रतिपदस्तय इति पदान्तरोपात्तस्य कालस्य यागेन सम्बन्धो विधीयत इति उच्यते । तथापि यागकाल इति समासपदगतेनोपसर्जनीभूतेन यागेन सह सम्बन्धः प्राप्नोति ।

किञ्च फलेन वा कारकेण वा क्रियायाः सम्बन्धो भवति । न च कालो यागस्य फलं असाध्यत्वात् । नापि कारकः, कारकविभक्तिनिर्देशाभावात् । न हि "प्रतिपदि यजेतेतिवत् पर्वचतुर्दश्यादेरधिकरणविभक्तिनिर्देशो दृश्यते । तस्माल्लक्षणयाधिकरणार्थः कल्पनीय इत्यपरः क्लेशः ।

अस्तु वा कालविधित्वं, तथापि प्रतिपदाद्यभागत्रयविधानं नोपपद्यते । तथाहि इह कालद्वयमुपात्तं पर्वचतुर्दश्यौ प्रतिपदाद्यभागत्रयञ्च । न चोभयमेकेन वाक्येन विधातुं शक्यते, यागानुवादेन कालद्वये विधीयमाने वाक्यभेदप्रसङ्गात् । अथ कालस्य निमित्तस्वरूपकत्वात् कालयोर्योगो विधीयते न तु यागे कालावित्युच्यते तर्हि सुतरामेव वाक्यभेदः । तत्र कालभेदेन यागस्य भेदप्रतीते । अथ प्रतिपत्सु समार्गेषु विधीयमानेष्वपि यथा न वाक्यभेदस्तद्वदिहापि प्रतिकालं यागे विधीयमानेऽपि न वाक्यभेद इत्युच्यते । तन्न युक्तं । तत्र यस्मात् समार्गयोरेकेन यत्नेन सम्बन्धं विधाय श्रौते विधितात्पर्ये पर्यवसिते मत्वार्थिका व्यापारभेदा प्रतिपत्समुपजायमाना अपि न वाक्यं भिन्दन्तीति । इह [illegible] पर्वचतुर्दश्योः प्रतिपदाद्यभागत्रयस्य येनैव श्रौतविधितात्पर्येण यागसम्बन्धो येन शब्देन विधीयते तथाविधशब्दोपात्तयोरुभयोः पृथगुपात्तत्वात्तस्मात्तस्य यागस्यानेकस्मिन् सम्बन्धे विधीयमाने रेवतीवारवन्तीयाधिकरणपौर्णमास्यधिकरणादिपूर्वपक्षवद्वाक्यभेदः । ननु तद्वदेव तर्हि विशिष्टविधानेन वाक्यभेदपरिहारः कस्मान्नेष्यते । उच्यते । विशिष्टविधानेऽभ्युपगम्यमाने यागान्तरापत्तेरिदं पूर्णमा-

पयोरत्र कालविधि सिध्यति । दर्श-पूर्णमासयो शास्त्रान्तरप्राप्त-
योरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव । अथ "अर्द्ध-
मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यत्र लक्षणया सन्धौ मिनोतीति
विधाय यथा वाक्यभेद परिहृत तद्वत् पर्व प्रतिपद्भ्यामाभ्या सन्धि-
लक्षणया वाक्यभेदपरिहार इत्युच्यते । तच युक्तं । तत्र सन्धिदेशे
लक्षितेऽर्थप्राप्तत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात् । इह
तु सन्धिकाले लक्षितेऽपि न पर्वचतुर्थांश प्रतिपद्भागत्रयस्यानुवाद
सिध्यति । पूर्वापरयोरुभयोर्नियतयोर्विषमयोरप्राप्तभावात् ।

किञ्च सम्बन्धविधानस्य किं लक्षणाक्रमेण "सन्धौ यजेतेति श्रुत्या
सन्धिकाले विहितोऽपि प्रयोगायोग्य इति तत्सामीपलक्षणाया प्राप्ताया
किं पर्यन्त काल इत्यवध्यपेक्षाया पूर्वापरसामीप्यावधिविधानार्थं
वाक्यमागतमिति वक्तव्यम् । यदि पर्वचतुर्थांशादिविधायकमेतद्वाक्य
भवेत् "पर्वणोयश्चतुर्थांश आद्या प्रतिपदस्त्रय इति, तदपीदानीम-
नुपपद्यमान । यदि पुनरपि तमेव सन्धि लक्षयितु गच्छति तदा
किं तेन फल भवति, तथाद्यागस्य कालद्वयसम्बन्धविधाने वाक्यभे
दोऽपरिहार्य्य । अथ यो यागकाल इति यागकालमनूद्य स पर्वण
चतुर्थोऽश आद्या प्रतिपदस्त्रयोऽशा इति विधीयते । तर्हि याग-
काल इति विशिष्टानुवादे एकस्तावद्वाक्यभेद, पर्वचतुर्थांशस्य प्रति-
पद्भागत्रयस्य चोभयोर्विधानादपरोवाक्यभेद । यत्तदोर्व्यत्ययेनान्वय-
इत्यपरोदोष । अथ पर्वचतुर्थांश प्रतिपद्भागत्रय चानूद्य तयोरुभ-
योर्यागकालत्व विधीयते । एव तर्हि पर्वणोयश्चतुर्थाश इति विशि-
ष्टानुवादादेकोवाक्यभेद, आद्या प्रतिपदस्त्रयोऽशा इत्यपि विशि

किन्तु फलेन वा कारणेन वा क्रियाणां सम्बन्धो भवति। न च कालो यागस्य फलं, असाध्यत्वात्। नापि कारकं, कारकविभ-क्तिनिर्देशाभावात्। न हि "प्रतिपदि पञ्चदशीतिवत् पर्वचतुर्थ्यादे-रधिकरणविभक्तिनिर्देशो दृश्यते। तस्माल्लक्षणयाधिकरणार्थः कल्प-नीय इत्यपरः क्लेशः।

ययोरेव कालविधिं सिद्ध्यति। दर्श-पूर्णमासयोः शाखान्तरप्राप्त-
योरेकेन वाक्येन कालद्वयसम्बन्धे वाक्यभेद उक्त एव। अथ "यदर्द्ध-
मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदी"त्यत्र लक्षणया सन्धौ मिनोतीति
विधाय यथा वाक्यभेदः परिहृतः तद्वत् पर्व-प्रतिपद्भागाभ्यां सन्धि-
लक्षणया वाक्यभेदपरिहार इत्युच्यते। तन्न युक्तं। तत्र सन्धिदेशे
अवस्थितेऽर्धमात्रत्वेनान्तर्वेदि-बहिर्वेदिशब्दार्थयोरनुवादसम्भवात्। इह
तु सन्धिकाले अवस्थितेऽपि न पर्वचतुर्थांश-प्रतिपद्भागद्वयस्यानुवादः
सिद्ध्यति। पूर्वापरयोरप्ययोर्नियतयोर्विषमयोरर्धत्वाभावात्।

द्यनुवादाद्द्वितीयोवाक्यभेद, तयोरुभयोर्यागकालविधानात्तृतीयोवाक्यभेद, पर्वचतुर्थ्यास्य प्रतिपद्यागत्रयस्य च विधायकान्तराभावादनुवादोऽपि न शक्यते कर्त्तुमित्यपरोदोष ।

किञ्च कालस्यानुपादेयत्वात् कालविधिपरेषु वाक्येषु कालमुद्दिश्य कर्म्मैवोपादीयते, तदिह यदि पर्वचतुर्थ्यादिमुद्दिश्य स यागकाल इति विधीयते तर्हि विधेयस्य यागकालस्यापि कालरूपत्वेनानुपादेयत्वादुद्देश्यत्वमेव प्राप्नोति। न चोद्देश्यद्वयस्य मिथ सम्बन्ध सम्भवति। न चानयो समुदायीकरणार्थं एक शब्दोऽस्ति, येन समुदायस्य यागसम्बन्धविधानाद्वाक्यभेद परिह्रियेत। ननु यागकाल इति कालशब्देनोभयमेकरूपतया परामृश्य यागसम्बन्धोविधीयते। तन्न। याग-कालशब्देन याग-कालयो सम्बन्धविधानमशक्यमित्युक्तत्वात्।

किञ्च याग-कालशब्देन पर्वचतुर्थ्यादिकालोऽनूद्यते पुनस्तेनैव शब्देन यागस्य कालसम्बन्धो विधीयते, तदा वाजपेयोक्त वैरूप्यमापद्येत। न ह्येकस्मिन्नेव वाक्ये एकमेव वस्तु तद्वाक्यगतमेव किञ्चिदपेक्ष्यानूद्यते किञ्चिदपेक्ष्य विधीयते इति सम्भवति। यदि तु वैरूप्यपरिहारार्थं पर्वचतुर्थ्यादिपरामर्शमन्तरेण शब्दस्यैव कालस्य यागसम्बन्धो विधीयते। तदयुक्त। कालसम्बन्धविधानमन्तरेणापि सिद्धे। अथ "यागकाल स विज्ञेय इति तच्छब्देन पर्वप्रतिपद्यागान् परामृश्य यागसम्बन्धोविधीयते, तथापि पूर्व्वोक्त वैरूप्य दुर्वारमेव।

किञ्च स इत्ययन्तच्छब्द एकवचनान्तश्चतुर कालभागान् परा-

मर्ष्टुं न शक्नोति । अथानुषङ्गन्यायेन पृथगेकैकं परामृशतीत्युच्यते । नैवम् । एकस्मिन्वाक्ये प्रतिपदमनुषङ्गेणैकस्यानेकेषु सम्बन्धेषु गृह्यमाणेषु वाक्यभेदप्रसङ्गात् ।

किञ्च एकवचनान्तस्य च इत्यस्य तच्छब्दस्य "आद्या' प्रतिपद्स्तय इत्यत्र बहुवचनप्रतिनिर्देशात् अनुषङ्गोऽपि नोपपद्यते । यथा गच्छतामितस्य संयजचेरङ्गानीत्यत्र नानुषङ्गः ।

किञ्च यत्तदोर्नित्याभिसम्बन्धात्पर्वणोयस्तुर्थांश इति पर्वचतुर्थांशे यच्छब्दश्रवणात् स एव तच्छब्देन परामृष्टुं युज्यते न प्रतिपद्भागाः । अथ तत्रापि यच्छब्दोऽध्याह्रियते अन्यथा तयोः श्रुते गौणं स्यात् पुनरपि न तस्य परामर्शः । भवतु वाध्याहारः तथापि प्रतिपद्भाग- इति बहुवचनान्तत्वेन यच्छब्दस्याध्याहारादेकवचनान्तेन तच्छब्देन पुनरपि कथं सम्बन्धः । अथ पर्वप्रतिपद्भागसमुदाय एकवचनान्तेन तच्छब्देन परामृष्टुं शक्यते इत्युच्यते । तन्न । एकावच्छेदमन्तरेण समुदायानुपपत्तेः । यद्येकेन तच्छब्देनोपादानात् समुदायत्वमित्युच्यते । यथा विदद्वाक्ये पौर्णमास्यादिशब्दोपादानादाग्नेयादीनां समुदायत्वसिद्धिः, यथा वा राजसूयशब्देनोपादानादनुमत्यादीनां मखादीनां[1] पवित्रादीनाञ्च यागादीनां समुदायत्वसिद्धिः । तन्न । तच्छब्दोपादानात् समुदायत्वं समुदायत्वादेकवचनान्ततच्छब्दोपादानमितीतरेतराश्रयापत्तेः । आग्नेयादीनामेकशब्दोपादानव्यतिरेकेणाप्येकोपाधिसम्बन्धोऽविद्यत एव । यदुत्पत्तौ कालविशेषयोगित्वं नाम तदुक्तम् । "एककालाभिसंयोगाद्विधानामपि कर्मणाम् । समुदायार्पण

(१) अनुमत्यादीनामसादीनामिति क० ।

प्रक्रमैकदेशस्यानुष्ठानवत् ॥ इति। राजसूयेऽपि प्रकृतत्वविशिष्टयागत्वोपाधिसद्भावात् समुदायत्वं भविष्यत्येकफलसाधनत्वाद्वा। अन्यत्रापि प्रकृतत्वविशिष्टकालत्वोपाधिसद्भावात् पर्वचतुर्थ्यांश्च प्रतिपद्भागत्रयस्य च समुदायत्वं भविष्यति। मैवं। किं पदार्थरूपेण कालयोः प्रकृतत्वं, किं वा वाक्यार्थरूपेण, न तावद्वाक्यार्थरूपेण, महावाक्येऽवान्तरवाक्यार्थविवक्षाभावाद्विवक्ष्यमाणेऽवान्तरवाक्यभेदप्रसङ्गात्। नापि पदार्थरूपेण, न हि पर्वणोऽस्य चतुर्थ्याश्च इत्यत्र कस्यचिदेकस्य पदस्यार्थः पर्वचतुर्थ्याः प्रतिपद्भागत्रयं वा, तस्मात् प्रकृतत्वावच्छेदात् समुदायत्वं पर्वप्रतिपद्भागानाम्।

ननु यागसाधनत्वैकोपाधिसद्भावात् समुदायत्वं भविष्यति। नैतदेवम्। यागसाधनत्वात् समुदायत्वं, समुदायत्वादेकवचनान्तेन तच्छब्देन परामर्शः, तच्छब्दपरामर्शाद्यागविधानं, यागविधानाद्यागसाधनत्वं, यागसाधनत्वात् समुदायत्वमिति चक्रकापत्तिः। अत एवैकावच्छेदमन्तरेण समुदायत्वानुपपत्तेः कालद्वयप्रतिपादकावेव शब्दौ कालद्वयसमुदाय सचयत इत्येतदपास्तम्। अथ 'पर्वणोऽग्रे तुरीये तु कर्तव्येष्टिर्द्विजातिभिः' इति पर्वचतुर्थ्याश्च यागसाधनत्वावगमात् पश्चाद्योऽभिमष्टव्या," 'न षष्ठ्या चतुर्थ्या'" इति वाक्याभ्यां चतुर्थ्यावर्जितप्रतिपद्भागत्रयस्य यागसाधनत्वावगमात् 'पर्वणोयश्चतुर्थ्यांश्च' इति वाक्यमितरे प्रागेव कालावयवानां यागसाधनत्वलक्षणोपाधेः सिद्धत्वात् 'पर्वणोयश्चतुर्थ्यांश्च' इति वाक्ये नैषां समुदायापादकत्वानुपपत्तिरिति न चक्रकापत्तिरित्युच्यते। तदयुक्तं। एते कालाः यागसाधनतयाभिधीयमानेषु

वाक्यभेदापत्तेस्तत्परिहारार्थं समुदायरूपतयाप्येकत्वापत्तेर्विधेयानां कालभागानामपेक्ष्यते यागसाधनत्वमेव विधातुं। नच यदि पर-मिदानीं समुदायत्वापत्तेः प्रागेव वाक्यान्तरैः कालभागानां याग-साधनत्वं सिद्धं किमिदानीं समुदायत्वापत्त्या क्रियते।

किञ्च कालद्वयमिदं विधीयमानं किं समुच्चयेन विधीयते, किं वा विकल्पेन। न तावत् समुच्चयेन कालद्वयसम्बन्धः, तथा सत्युभयोरपि का-लयोर्यागानुष्ठानप्रसङ्गात्। नापि विकल्पेन, विकल्पो हि विरुद्धार्थयोः शास्त्रयोः परस्परतो विधानसामर्थ्याविर्भाव-तिरोभावादिना विरुद्ध-व्यापारचतुष्टयरूपेण क्रमेण कल्प्यमानोऽपि गत्यन्तराभावात् खेदे-नैवाभ्युपेयते। तथैकेनैव विधानात् तावत्प्रयोगोऽनुष्ठेयत इति किमे-तदाजपेयीक्लेशापत्तेः, एवं कालद्वयाभ्युपगमेन सर्वमेतदुक्तं।

किञ्च प्रातरादिकस्तृतीयोऽपि कालोऽस्त्येवोपास्य इति तस्मिन्नपि विवक्ष्यमाणे पूर्व्वोक्तेषु पक्षभेदेषु सुतरां वाक्यभेदादयः प्रसज्यन्ति, तस्मादभिमन्त्रणक्रियारम्भवचनस्य न प्रतिपद्यागसमयविधानमुखेन चतुर्थ्यांयुदासकत्वं, किं तर्हनेन वचनेन क्रियते, न किञ्चित् क्रियते। किन्तु "पर्व्वणोऽग्रे तुरीये तु कर्त्तव्येष्टिरिति पर्व्वचतुर्थांशे प्राप्ते "यथा-दयोऽभिपष्टव्या इति प्रतिपदि प्राप्तायां "प्रातर्यजध्वमिति प्रातःकाले प्राप्ते "न यष्टव्यं चतुर्थेंऽश इति पूर्व्वोक्तप्रकारेण प्रतिपच्चतुर्थांशे विकल्पेन निषिद्धे वैकल्पिकनिषेधेन सञ्चितो यावत्कालराशिरवशिष्यते, सामा-न्यतमासः [redacted] सर्वः पिण्डीकृत्यैकेन याज्ञिककारिकावाक्येन कथ्यते, स्मरणसौकर्य्यार्थं "पर्व्वणोयच्चतुर्थांश इति। यथा श्लोकेन वेदिसुद्धन्नी-त्यादिनानाशास्त्रसमारोऽर्थः पिण्डीकृत्यानूद्यते "एतानि वै दशयज्ञायु-

धानीति। यथाह वार्त्तिककारः, "एकादेशत्पत्तिसम्बन्धं कार्यैरहन-मादिभिः। यच्च यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते"॥ तथा "पर्वणो-यच्चतुर्थ्यां च" इत्यपि नानाशास्त्रपिण्डीकृतानुवादः न पुनः कस्यचि-त्कालस्य विधायकमेतत् येनार्थात् प्रतिपच्चतुर्थ्यौ व्युदस्येत्।

किञ्च "उक्तोमनीषिभिरित्युक्तशब्देन वाक्यान्तरैरुक्त एवार्थः स्मरणे सौकर्यार्थमेकत्र पिण्डीकृत्यानूद्यते न त्वपूर्वोऽर्थोऽनेन वचनेन विधी-यत इति दर्शयति। तस्मात्प्रतिपदादिभागचयस्यैव यागकालत्वमिति विधानाभावात् "न वाच्य चतुर्थ्यां च" इत्यनेन निषेधेनापि चतुर्थ्यास्य याज्ञिकप्रसिद्ध्यभ्यनुज्ञानपायाज्ञात्यन्तमयागकालत्वं प्रतिपच्चतुर्थ्योरस्य। यद्यप्यनेन वचनेन विधायकेन भवितव्यं तर्हि प्रातर्विधान-मस्तु सर्वमन्यद्वाक्यान्तरप्राप्तमनूद्यते। ननु प्रातःकालोऽपि "प्रात-र्यजध्वमिति शास्त्रप्राप्त एव। नैष दोषः। न हि पौरुषेयवाक्यानां वेदमूलत्वापराधेन विधात्वं विहन्यते, सर्वस्मृतीनामप्रामाण्यप्रसङ्गात्। येषामपि वक्तृज्ञानानुमापकानि पौरुषेयवचनानि तेऽपि कथञ्चित पौरुषेयेषु वचनेषु विध्यनुवादविरोध्यनुवादविवेकं कुर्वन्त्येव न पुनः सर्वानुवादकत्वं मन्यते। येनैवमाहुः यश्चोदनालक्षण इत्यनूद्य स धर्म इति विधीयत इति। ननु यदि वाक्यान्तरप्राप्तोऽप्यर्थो विधातुं शक्यते तर्हि पर्वचतुर्थ्यादिरपि कस्मान्न विधीयते। उच्यते। न पर्वचतुर्थ्यादिर्वाक्यान्तरप्राप्त इति न विधीयते किन्त्व-नेकविधाने वाक्यभेदभयाद्वाक्यान्तरप्राप्तत्वेन कथञ्चिदनुवदितुमपि शक्यत्वाच्च विधीयते। ननु यदि एक एव विधातव्य इति पर्व-चतुर्थ्यादिकालस्य वाक्यान्तरविहितत्वात् प्रातःकालो विधी-

यते तर्हि विपरीतं कस्मान्न भवति । उच्यते । "पर्वण्येव चतुर्थांश इति चतुर्थांशस्य यच्छब्दोपपन्नत्वादविधेयत्वं, प्रातःकालस्तु तदभावाद्विधीयते ।

किञ्च पर्वचतुर्थांशस्य "याः प्रतिपदस्तस्य इत्येतद्विहितश्च यागकालः स इति तच्छब्देन परामर्श इत्यपरः क्लेश' ।

किञ्च येनैव हेतुना वाक्यभेदभयाद्दिना कालनियमोऽनेन न विधीयते तेनैव पर्वचतुर्थांशादिरेकोऽपि कालो न विधीयते, तथाहि पर्वण्यश्चतुर्थांश इति, अत्र एते अर्था, किं तेषां अरुणैकहायनीन्यायेन प्रथमं क्रियया सह संबन्धमनुभूय पश्चात्पार्ष्णिकः परस्परसम्बन्ध', आहोस्वित्प्रथमं परस्परसम्बन्धः पश्चात्क्रियया सह सम्बन्ध' इति यद्यपि प्रथमं क्रियया सम्बन्धः तदापि किं विशिष्टविधानन्यायेन क्रियया सम्बन्धः, आहोस्वित्क्रियानुवादेन तेषां सम्बन्ध' इति । यदि तावद्विशिष्टविधानं तथा सति कर्मान्तरापत्तेर्न दर्श-पूर्णमासयोरयं कालविधिः सिध्यति । अथ क्रियानुवादेन पर्वचतुर्थांशस्य च सम्बन्धो विधीयते, तदा प्राप्तक्रियानुवादेनानेकगुणविधानादेकस्मात् वाक्यभेदः पुनस्तेषां परस्परसम्बन्धविधानेऽपि स एव दोष । अथ वाक्यभेदपरिहारार्थं चतुर्थांशादिविशेषणमनादृत्य पर्वमात्रस्य यागसम्बन्धो विधीयते, तर्हि पर्वणि यदा कदाचिद्यागः प्राप्नोति । चतुर्थांशश्रवणञ्च विधिविनानुवादत्वेन नानुपपद्यमानं व्याहन्यते ।

ननु पर्वणि यदा कदाचिद्दीजान कदाचिच्चतुर्थांशेऽपि यजत इत्यनुवाद' सम्भवति । नैतदेव । पाक्षिकानुवादस्य न्यायविदामसम्मतत्वात् ।

अथ चतुर्थाग्नयागयोः सम्बन्धो विधीयते, तदपि यस्य कस्यचिद्द्रव्यस्य चतुर्थांशो यागार्थ इत्युक्तं स्यात् न त्वभिमतविशेषोऽर्थः सिद्ध्यति। न चैकविधानसामर्थ्यान् विनानुपपत्तेरग्निमिति कस्मिंश्चिदाधेयत्वे बुद्धिस्थः पर्वरूपोऽग्निविशेषः किमिति त्यज्यते। उच्यते। बुद्धिस्थोऽपि विध्यसंस्पृष्टो न सिद्ध्यति। अथ यदि विधिना स्पृश्यते तर्हि तदेवानेकविधानमापद्यते। ननु विधिना स्पृश्यमानोऽप्यर्थात् स्पृश्यते न श्रुत्या न तत्रानेकविधानं दोषः। नैवं। न ह्यनेनाग्निविशेषेण विनाग्निविधेरनुपपत्तिर्येनार्थादिममेवाग्निविशेषं स्पृशेत्। न हि साधारणस्यानुपपत्तिरभिधानमात्रेण बुद्धिस्थे विशेषे पर्यवस्यति, तथा सति सर्वत्र गुणविधित्वाद् "सोमेन यजेतेति यागमात्रं विधाय विधौ पर्यवसिते या साधारणी द्रव्याकाङ्क्षा सा विधानमन्तरेणैव बुद्धिस्थे द्रव्यविशेषे सोमे पर्यवस्यतीति कथं विशेषविधानं स्यात्। यद्यपि प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदः प्रसज्यते तथाप्येकगुणविधानमेवास्तु, इतरस्तु गुणविशेषः सामान्यानुपपत्त्याक्षिप्यत इति वक्तुं शक्यत्वात्।

नन्वेवं तर्हि "पर्वणोऽग्नौ तुरीये [illegible] कर्तव्येष्टिर्द्विजातिभिः"। इति वाक्येन कथं पर्वचतुर्थांशो यागाय विधीयते तत्रापि पूर्वोक्तानां दोषाणां अविशिष्टत्वात्। उच्यते। "पर्वणोऽग्ने तुरीये इति पर्वाग्निरूपं पदार्थद्वयं परस्परसम्बन्धविशिष्टमेकीभूतं यागाय विधीयत इति विधेयभेदाभावान्न वाक्यभेदः। ननु "पर्वणोऽग्ने तुरीये इति पर्वाग्नयोः परस्परसम्बन्धो विधिव्यापारमन्तरेण न सिद्ध्यति। सत्यं न सिद्ध्यति। किन्तु विध्यन्तरमेवानयोः परस्परसम्बन्धविधायकमस्ति तद्यथा।

पञ्चदश्याः परः पादः प्रतादेः प्रथमास्त्रयः ।
कालः पार्वणयागस्य अन्यथा तु न विद्यते ॥

इति पञ्चदश्याः पादः इत्यनयोः सम्बन्धो विधीयते । ननेवं पञ्चदश्या आद्येऽपि पादे यागः प्राप्नोति अथ परः पादः इति विशिष्यते तर्हि वाक्यभेदः । नैष दोषः । "सन्धौ यजेतेति सन्धि-कालस्य यागार्थस्य विहितस्यायोग्यत्वात् सन्निसमीपवर्त्तिनि काले साधयितव्ये क्रियासमीपकालो लक्षित' किं नाडिका किं वा प्रहर-स्तिथ्यर्द्धं तिथिर्वेत्यपेक्षायां पञ्चदशीपादः सामीप्यविशेषाकाङ्क्षापरि-पूरणाय विधीयमानः सामीप्यावष्टम्भेन सन्निकृष्टतर एव सिध्यति न दूरवर्त्ती । नन्वत्र वाक्ये न केवल पञ्चदशीपादयोः सम्बन्धः प्रतीयते किन्तु यागसम्बन्धोऽपरः प्रतीयते । सत्यमेवं । किन्तु "पर्वणोऽंशे तुरीये तु कर्त्तव्येष्टिरिति विधीयमानोऽनूद्यते आगामिन्या अपि प्राप्तेरनुवा-दसम्भवात् । तस्मात् पञ्चदशीवाक्ये पञ्चदशीपादमात्र विधीयते । तस्य सम्बन्धस्य यागसम्बन्धमात्र "पर्वणोऽंशे तुरीये त्वित्यनेन विधीय-ते । तत्र पर्वांशस्य तुरीयत्वमविहितमपि सन्धिप्रत्यासत्तिमनूद्यत इति पूर्वमेवोक्तं । "पर्वणोंऽशतुर्यांश इत्यनेन प्रातःकालसम्बन्धमात्रं विधी-यते सर्वमन्यदनूद्यते । तस्मात् कश्चिदप्यनेकार्थविधानाभावान्न वाक्य-भेदः । ननु पञ्चदश्याः पादस्य सम्बन्धो वाक्यान्तरविहितो यागसम्ब-न्धविधानपरे वाक्ये वाक्यभेदं न करोतीति यदुच्यते तर्हि "पर्वणो-ऽंशतुर्यांश इति वाक्येनापि पञ्चदशीपादस्य यागसम्बन्धो विधातुं शक्यत एव । सत्यं शक्यत एव । किन्त्वसौ विशिष्टकालो यागाय "विधातव्यः" इत्यादिष्टस्य प्रातरात्मकस्य कालस्य विधानेऽपि

वाक्योपपत्तौ न युक्तं विशिष्टस्य वाक्यान्तरसम्पादितत्वेन विशिष्ट-विधाने वाक्यभेदे परिहृतेऽपि स्वरूपमात्रविधानापेक्षया किञ्चिद्वि-धिगौरवस्यापरिहार्यत्वाद्विशिष्टापादकवाक्यान्तरसापेक्षत्वाच्च । यत्र तु स्वरूपमात्रविधानयोग्यं किञ्चिदुपात्तं नास्ति तत्र गत्यभावा-द्विशिष्टमपि यागाय विधीयत एव यथा "पर्वणाऽग्रे तुरीये लिप्ति ।

ननु यदि कालभागयो विशिष्टत्वमेकेन वाक्येन क्रियते तस्य विशिष्टस्य यागसम्बन्धोऽपरेण वाक्येन तादृशेनैव प्रकारेण प्रतिपदाद्य-भागत्रयस्य यागसम्बन्धं कस्मान्नेष्यते । तथा हि "पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः"। इति पक्षादेः पादा अपि सन्निधानो-पादेयपदात् सन्निध्यासन्नाः पादाः प्रथमा एव सिद्ध्यन्तीति । नैतदेव । इह कालावयवद्वयसम्बन्धः प्रतीयमान आस्ते । न चैक-स्मिन्नेव सम्बन्धे विधेये इतरस्मिन् ज्ञातव्ये प्रथमप्रतीतं पञ्चदश्याः पादस्य च सम्बन्धं हित्वा पश्चादवगतः पक्षादेः पादानाञ्च सम्बन्धो विधीयत इति कोऽत्र नयः । किञ्च पञ्चदश्याः पादस्य च सम्बन्धः पाठसिद्धः पक्षादेः पादानाञ्च सम्बन्धोऽध्याहार्य इत्यपि तस्य दौर्बल्यम् । किञ्च विधीयतां नाम कामं पक्षादेः पादानाञ्च सम्बन्ध-स्तथापि केन वाक्येन प्रयोगो विधीयते न तावत्तेनैव, वाक्यभेद-प्रसङ्गात् । नापि 'पर्वणो यश्चतुर्थोऽंश आद्याः प्रतिपदस्त्रय इत्यनेन, तस्य प्राक् कालसम्बन्धविधानेनैव चरितार्थत्वमित्युक्तत्वात् । न चान्यद्वा-क्यमस्ति येन प्रतिपद्भागत्रयस्य यागेन सम्बन्धो विधीयेत । तस्माद्भा-गत्रयविधानासम्भवात् "न यष्टव्यं चतुर्थेंऽशे" इत्येतदेव चतुर्थांशनि-षेधकमवशिष्यते । तत्र प्रतिपच्चतुर्थांशस्यापि विकल्पेन प्राप्तिमनु-

आनातीत्युक्तं। तस्मात् पूर्व्वाह्णव्यत्रव्ययापराह्णादिपर्व्वसन्धौ प्रतिपच्-तुर्थांशो न निषिद्धाते पूर्व्वाह्णपर्व्वसन्धौ तु निषिद्धात इति सिद्धं। तथाच त्रिकाण्डमण्डनेनोक्तं ।

सन्धिर्यद्यपराह्णे स्यादागं प्रातः परेऽहनि ।
कुर्व्वाण प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

तदेतत्त्रिकाण्डमण्डनादिमतमन्ये नानुमन्यन्ते। कस्मात् पूर्व्वाह्णाप-राह्णसन्धयोरुभयोरप्युपवासे द्वितीयेऽहनि च यागेऽनुष्ठीयमाने पशा-दौ प्रतिपच्चतुर्थांशस्य च समत्वात् "पशादयोऽभियष्टव्याः"। "न यष्टव्यं चतुर्थांशे" इति शास्त्रद्वयस्याप्युपाह्णलाभयाह्णसन्ध्यावेकमपराह्ण-सन्धावपरमिति व्यवस्थाया प्रमाणाभावात्। न च लौकाचिका इव प्रमाणं, तस्य पूर्व्वोत्तरदिनद्वययागव्यवस्थापरत्वेन विधि निषेधव्यव-स्थाया तात्पर्य्याभावादसम्भवाच । तथाहि आदित्योदयसमनन्तर पर्व्वसन्धौ तद्दिवयागे क्रियमाणे पशादिशास्त्रस्य निषेधानुग्रहदर्शनात्। अपराह्णसन्ध्यावप्यपागतत्समयापर्व्वसन्धौ द्वितीयेऽहनि यागानुष्ठानेऽप्यु-भयोरनुग्रहदर्शनात्। एवं रात्रिसन्धावप्युभयोरनुग्रहः ।

अथ प्रतिपच्चतुर्थांशे यागाभावात् पूर्व्वाह्णसन्धौ पशादिशास्त्र-स्यानुग्रहो नास्तीत्युच्यते, तर्ह्यपराह्णसन्धावपि प्रतिपदाद्यभागे यागो नास्तीति पशादिशास्त्रमनुग्रहानमुच्यते। तथा शास्त्रान्तरवशादाद्ये भागत्रये यागेऽनुष्ठिते 'पशादयोऽभियष्टव्याः' इत्यस्यार्थोऽपि क्रियत-एव। तथा लब्धपशादिदर्शपूर्णमासयागो न शास्त्रीयलौकिकदेशे एव-मनुष्ठानं। यद्यपि "न यष्टव्यं चतुर्थांशे" इति निषेधान्यथानुपपत्त्या प्रतिपच्चतुर्थांशे यागकल्पनं तदप्यनार्षेयस्य नाम स्यादित्येतदधि-

करणविरुद्धम्। अत्र ह्यार्थेयं वृणीते इत्यस्य त्रीन् वृणीते इत्यस्मिन् विद्यमाने न चतुरो वृणीत इति निषेधकल्पविधिपरत्वं न सम्भवतीत्युक्तं। तद्विहापि "पञ्चाद्योऽभियष्टव्या इत्यस्य "पञ्चादेः प्रथमांशस्तथ इत्यस्मिन् विद्यमाने "न यष्टव्यं चतुर्थेऽंश इति निषेधादिद्धान्तरकल्पना न सम्भवतीति। तस्मात् "न यष्टव्यं चतुर्थे श इति नित्यानुवादोऽयं न चतुरो वृणीते इतिवत्। अथ वा पर्युदासोऽयं, "पञ्चाद्योऽभियष्टव्या इति प्रतिपदि यागकाले उच्यमाने "न यष्टव्यं चतुर्थेऽंश इत्यनेन चतुर्थांशवर्जिते प्रतिपदि यष्टव्यमित्युच्यते, एतदेव स्पष्टीकृतं स्मृत्यन्तरे "पञ्चादे. प्रथमांशस्तथ इति, "आद्या. प्रतिपदस्तथ- इति च। एवञ्च सति "पञ्चाद्योऽभियष्टव्या इत्यस्य "न यष्टव्य चतुर्थेऽंश इत्यस्य च प्रतिपद्भागत्रयपरतया सहैकश्रुतिमूलत्वं भविष्यति। यत्तु पर्युदासपक्षे दूषणमभिहितं अपराह्णपर्वसन्धौ षड्घटिकात्मके च तिथिद्वये पूर्वेद्युः पर्वचतुर्थांशाभावेऽपि पर्वतृतीयांशे यष्टव्यम्, परेद्युः प्रतिपदाद्यभागत्रयाभावेऽपि चतुर्थभागे यष्टव्यमिति प्रयोगवचनसामर्थ्यादापतितो विकल्पो न दैवैरपि वारयितुं शक्यते, पर्युदासस्य न मतो मुख्योऽर्थः किन्तु लक्षणेति। तदसत्। यदि हि पर्वतृतीयभागवत् प्रतिपच्चतुर्थांशो न पर्युदस्तः स्यात् तदैवमपि भवेत्, इह "न यष्टव्य चतुर्थेऽंश इति पर्युदाससद्भावात् पर्वतृतीयभाग एव याग प्राप्नोति। न च पर्युदासे लक्षणेत्येकादशी निर्णये दर्शितं, अनेनैव न्यायेन निषेधपक्षेऽपि पूर्वेद्युरेव याग प्राप्नोति। अनुपपत्या हि पर्वतृतीयप्रतिपच्चतुर्थभागयोर्विकल्पेन यागे प्राप्ते "न यष्टव्य चतुर्थेऽंश इति प्रतिपच्चतुर्थांशे यागस्य निवारितत्वात्।

अन्यथा सुद्रमतिनिषिद्धेन मासानां ग्रहणे मासि षष्ठेऽध्याये जैमिनिनाभिहितं "प्रतिषिद्धं वा विशेषेण विहितं तु श्रुतिरिति, कात्यायनेन च "प्रतिषिद्धं प्रत्ययादिति, तथापि वक्तुं शक्यते प्रतिषिद्धानामपि मासानामस्तु ग्रहणमिति। अत्रापि परिहारोऽर्थमात्रे निषेधो बाधक एवेति स इह समान इति। यत्तु किञ्चिदेतत्पर्वचतुर्थ्यामस्य श्रुतत्वमसिद्धमित्युक्तं। तन्न। कात्यायनेन "श्रुतिरेषा सनातनीत्यभिधानात्। यत्तु भाष्यकारेण कात्यायनवचनादित्युक्तं तच्छ्रुतित्वेऽप्यविरुद्धं "श्रुतिरेषा सनातनीत्यस्य कात्यायनवचनत्वात्। दिङ्मात्रमत्र दर्शितं ग्रन्थविस्तरभयादिति। तस्मात् यथोक्त एव काले याग इति सिद्धं।

अन्ये त्वेवमाहुः "न चाहस्य चतुर्थंऽशस्तत्र यदत्र तत्पूर्वाह्णसन्धिविषयमिति व्याख्येयं। न च पूर्वाह्ण-मध्याह्नसन्धिमात्रेऽपि पर्वचतुर्थांशे यागविधायकं न तत्र प्रतिपच्चतुर्थांशे यागस्य प्राप्तिरस्ति यत्र प्राप्त्यभावेन प्रतिषेधानर्थक्यं प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति वाच्यं। तत्र प्राप्त्यभावेऽपि "पञ्चदश्योऽभियद्यादित्यनेन प्राप्तिसम्भवात्। न च "प्राचां प्रतिपदन्तम् इत्यनेनाप्युपसंहार इति वाच्यम्। अस्य कालान्तरोपलक्षकत्वेनाविरोधादुपसंहारपरत्वानुपपत्तेरिदंतयेऽप्युक्तयागकालचतुर्थांशाभावे मध्याह्ने यागकालान्तरमभ्युपगन्तव्यम्। न च तत्रान्यज्ञापकं शास्त्रमस्ति। अपराह्णाह्णयोः यज्ञापरत्वेनापूर्वकालविधायकत्वानुपपत्तेः उभयपरत्वे वाक्यभेदप्रसङ्गात् केवलकालविधिपरत्वे च अपराह्णे निष्प्रमाणिको स्यात् तस्मात्कालान्तरोपलक्षकमेवैतदिति सिद्धं। तदयुक्तं। किमा

कारण लक्षणाप्रसङ्गात् यागकालसम्बन्धस्य त्रिमुहूर्त्ता द्वितीया चेत्यादिवाक्येणार्थसिद्धेः, अतो न वाक्यभेदोऽपीति यत्किञ्चिदेतत्। तस्मात् प्रतिपच्चतुर्थांशे याग इति सिद्धम्।

ननु हेमन्तकालेऽह्नामतिह्रस्वत्वात् किञ्चिन्न्यूने चतुर्दशघटिका-मात्र आवर्त्तन भवति, तत्र तिथिवृद्धौ सत्यां षोडशनाडिकोऽपि पर्वचतुर्थांशो भवति, तत्र तन्मोपक्रमकालादारभ्य प्रातः पर्वचतुर्थांशोऽस्ति द्वितीयदिने च प्रातः प्रतिपत्तृतीयांशस्तत्र कुत्र याग। अत्र केचिदाहुः अपराह्णपर्वसन्धिमत्परेद्युर्याग इति। तदयुक्तं। "पर्वणोऽंशे तुरीये तु कर्त्तव्येष्टिर्द्विजातिभिः। द्वितीयासहिते यत्राह्वयनपाश्वायना" ॥ इति हारीतवचनात् "त्रिमुहूर्त्ता द्वितीया चेत्यादिवाक्याविरोधाच्च। अपराह्णसन्धिशास्त्रं तु त्रिमुहूर्त्तशास्त्राविरुद्धे विषये व्यवतिष्ठते। नन्वपराह्णसन्धिशास्त्राविरुद्धे विषये पूर्वाह्णपर्वसन्धौ त्रिमुहूर्त्तशास्त्रं किमिति न व्यवतिष्ठते। उच्यते। पूर्वाह्णसन्धौ त्रिमुहूर्त्तानद्वितीयाप्रसक्त्यभावात् त्रिमुहूर्त्तग्रहणमविवक्षितं स्यात्। त्रिमुहूर्त्तद्वितीयाशब्देन व्यवहिततरनिष्प्रयोजनपूर्वाह्णपर्व्वसन्धिलक्षणाप्रसङ्गाच्च चतुर्दशीमदिने यागनिषेधकपञ्चवाक्यविरोधाच्च। अपराह्णपर्वसन्धिविषयत्वे तूक्तदोषाभावात् तद्विषयतैव युक्ता।

किञ्च मध्यपक्षे सन्धिसामीप्यं स्वपक्षे तथाभीष्टेनात्र विशेष। तस्मात्प्रातर्विहितकालसम्भवात् तत्रैव याग इति। यदा तु सार्द्ध-प्रहरद्वयं किञ्चिदधिकं चतुर्दशी पञ्चदशी मुहूर्त्तत्रयं प्रतिपत्तिथिर्दि मुहूर्त्तत्रयं द्वितीया तदा पूर्वस्यां याग "यस्यां तिथावस्तमियात् सूर्यस्त्रिमुहूर्त्तकं। याग दान-जपादिभ्यस्तामेवोपक्रमेत् तिथि" ॥

इति वचनात् । ननु,—

पञ्चदश्याः परः पादः पञ्चाद्यः प्रथमास्तथा ।
कालः पार्व्वणयागस्य अन्यथा तु न विद्यते ॥

इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले यागो न युक्तः, सत्य, यथा पक्षादयोऽभिपद्यस्या इत्येतत्प्रतिपादितयागकालव्यतिरिक्ते काले पर्व्वचतुर्थांशे वचनान्तराद्याग इष्यते एवमिहापि भविष्यति । यदा तु सम्पूर्णा चतुर्द्दशी पञ्चदशी प्रतिपच्चादित्याष्टमयामाद्र्वागेव समाप्यते, द्वितीयाप्रभृतेर्व्वात्यन्तिकः क्षयः तदा पूर्व्वेद्युरेव यागः ।

चतुर्द्दशी च सम्पूर्णा द्वितीया क्षयगामिनी ।
अपरेद्युरमायां स्यान् भवेत् कन्वादिकी क्रिया ॥

इति वचनात् । यदा चतुर्द्दशी सम्पूर्णा पञ्चदश्यां न्यूनत्रिमुहूर्त्ता प्रतिपत् प्रतिपदि त्रिमुहूर्त्ता द्वितीया तदा पूर्व्वेद्युरेव यागः ।

त्रिमुहूर्त्ता द्वितीया चेत्प्रतिपच्चापराह्णिकी ।
अन्वाधानं चतुर्द्दश्यां परतः सोमदर्शनात् ॥ इति वचनात् ।

तथा ।

आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदयाद्यदा ।
प्रतिपत्प्रतिपत्तिः स्यात् पञ्चदश्यां यजेत च ॥ इति ।

यदा पञ्चदश्यां मुहूर्त्तत्रयाधिका प्रतिपत् प्रतिपदि च तावती द्वितीया ततोऽधिका वा तदा पूर्व्वानुष्ठानमिति सम्मुहूर्त्तत्रयाधिकेषु मुहूर्त्तेषु विद्यमानत्वात् पूर्व्वस्यामेव यागः ।

उक्तञ्च ।

प्रतिपदि समुदिता चेद्दर्शमन्वादधीत भूतदिने ।

विरमति पर्वद्विता चेत् तद्यागं तु पौर्णमास्यां ॥

अन्यापि ।

अपूर्णेऽनलगे चैव औपवस्तामम मत ।

प्रतिपत्तु यदा पर्वेह्णीनो वाभ्युदितः शशी ॥ इति ।

ननु यदेतत् "चतुरिष्टिरमावास्या भूते कार्यादिकी क्रिया" इति, तथा "प्रतिपद्यतिपत्ति॰ स्यात् पञ्चदश्यां यजेत च" इति, तथा "अन्वाधान चतुर्दश्यां परतः सोमदर्शनात्" इत्येवमादिभिः पञ्चदश्यां यागविधानं कृतं तत्पर्वचतुर्थांशे प्रातर्विद्यमाने तु भवतु। "पर्वणोयश्चतुर्थांश इति पर्वचतुर्थांशस्यैव यागकालत्वेन विधानात्पर्वद्वितीयचतुर्थांशे यागो न युक्त इत्युच्यते ।

पर्वाणस्तृतीयाद्यश्च द्वितीया तु प्रदृश्यते ।

तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखाः ॥

इत्येतावत्मात्र ।

यदि तु ब्रूयते तर्हि पर्वचतुर्थांश एव पूर्वस्मिन्नहनि याग इत्युक्तं स्यादिह तु "विशुद्धमा द्वितीया चेदित्यादिभिर्निमित्तविशेषे पञ्चदश्यां यागविधानात् न पर्वचतुर्थांशानुरोधेन बाधो युक्तः । तस्माद्यथोक्त एव काले याग इति सिद्धं। यदा तु पौर्णमादिवसाद्यघटिकायां पर्वसन्धिर्मुहूर्त्तचतुष्टयावधि भात पर्वद्वितीयांश, परेद्युस्त्रिमुहूर्त्ता द्वितीया तदा पर्वद्वितीयांशे याग ।

तथा चाश्वलायन ।

पर्वणोंऽशे तृतीये तु कर्त्तव्येष्टिर्द्विजातिभि ।

द्वितीयावर्जित यस्माद्दृष्टमन्याश्वलायनः ॥

यदा तु मुहूर्त्तत्रयादूर्ध्वं पूर्व्वेद्युः पर्व्वचतुर्थांशस्य प्रवेशः परेद्युश्च मुहूर्त्तषट्कादूर्ध्वं प्रतिपच्चतुर्थांशः स्यात् तदा परेद्युर्यागः, मुहूर्त्तषट्कात्प्राक् प्रवेशे तु पूर्व्वेद्युः ।

यदाह गार्ग्यः ।

यज्ञकालस्तिथिर्द्वैधे षड्भो यदि लभ्यते ।

पर्व तत्रोत्तरं कार्यं हीने पूर्व्वमुपक्रमेत् ॥

कलाश्च मुहूर्त्ता न तु घटिका "त्रिमुहूर्त्ता द्वितीया चेदिति शास्त्रविरोधात् । स्मृतिप्रदीपकृताप्येव कलाशब्दस्य मुहूर्त्तार्थतोक्ता । पराशरवाक्ये तु षण्मुहूर्त्तास्तु विद्यत इति पाठः ॥

अत्र वाक्ये केचिद्विवदन्ते । तथाहि चन्द्रदर्शने यागः सर्व्वथैव न कर्त्तव्यः, किन्तु तत्पूर्व्वदिने यागः पूर्व्वतरदिने तन्वाधानमिति तस्य वाक्यस्यार्थः प्रतिभाति, स चायुक्तः आपस्तम्बोऽन्वाधान-यागदिनयोरन्यतरत्र विकल्पेन चन्द्रदर्शनं परिहरणीयमित्याह न पुनर्नियमेन यागदिने चन्द्रदर्शनं परिहरणीयमिति । यथाह—

यदहर्न दृश्यते तदहरमावास्यां यो न दृश्यत इति वेति ।

वाजसनेयिनोऽप्युभयोरन्यतरत्रैव चन्द्रदर्शनं नियच्छन्ति न पुनरुभयत्रापि ।

यथाहुः ।

यदेके दृष्टोपवसन्ति तस्माद्यदैवैनं न पुरस्तान्न च पश्चात् पश्येत तर्ह्येवोपवसेदिति च ।

कात्यायनोऽप्याह ।

चन्द्रादर्शनेऽमावास्यामुपवसेत् सम्पूर्णां पौर्णमासीमिति केचित् ।

लौगाक्षिरप्याह ।

यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्वीत दृश्यमानेऽप्यमागताद्धि भवन्तीति ।

तथा सोमदर्शनदिने यागविधायिका निषेधाधिकारश्रुतिर्दृश्यते।

यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजमान इमान् लोकानभ्युदेष्यतीति एषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेतास्मिन् काले यजमानो लोकेऽर्द्धुकं भवतीति यस्मिन्नहनि पुरस्तात्परस्तात्सोमो न दृश्यते तदहर्यजेत इति ।

तदेतेषां विरुद्धाम्नायानां व्यवस्था पर्वविचारे प्रतिपादिता बह्वृचाचार्यमतानुसारादपराह्णादिपर्वसन्धौ सोमदर्शनदिने यष्टव्यमन्यथा नेति ।

किञ्चैवं श्रूयते उत्तरामुपवसेदनिर्याचेति ।

तस्यार्थः किं पूर्वामुपवसेदुत्तरां वेत्यनिर्णीय यत्र एतादृशं निश्चितं ज्ञानं नास्ति तत्रोत्तरामेवोपवसेदिति । एवं सन्देहेऽपि चेदुत्तरमेव पर्वोपवसनीयं किं पुनर्यदा पर्वविचारोक्तया व्यवस्थयोत्तरमेव पर्व निश्चितं प्रतीयत इति, तदनुसारेणैव "त्रिमुहूर्त्ता द्वितीया चेदिति वाक्यं व्याख्यातव्यं न स्वातन्त्र्येण । यदि तु स्वतन्त्रमर्थं कथ्यते तावदध्याहारक्लेशेन प्रथमतो विधिसम्बन्धितमाख्यातार्थपदलभ्यं तस्मिंल्लब्धेऽपि पुनरन्तरायाधीन किञ्चिदपि न प्रसज्यते । तथाहि यदि चतुर्दश्यामन्वाधानाय कर्षो विधीयते तदेवं योजना, चतुर्दश्यामन्वाधानं कर्त्तव्यं परतः सोमदर्शनादिति । तन्नेदमुच्यते । अन्वाधानोत्कर्षः कस्मान्न विधीयत इति । तथाहि प्रतिपद्यपराह्णिकी

यद्यपि द्वितीया तथापि चतुर्दश्यां सोमदर्शनात्परतोऽन्वाधानं परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चन्द्रदर्शने यागनिषेधवदन्वाधानस्यापि निषिद्धत्वात् । तद्यथा "यदेवैनं न पुरस्तान्न पश्चात्पश्येत्तदेवोपवसेदिति चन्द्रदर्शनेऽमावास्यामुपवसेदिति, "यदहर्न दृश्येत तदहरमावास्यामिति च, तस्माच्चतुर्दश्यां सोमदर्शनात्परित्यागेनान्वाधानोत्कर्षविधानमेव युक्तं । नन्वेवं चतुर्दश्यां सोमदर्शनाच्चतुर्दशीतः परत्र दिनेऽन्वाधानं कर्त्तव्यमिति चतुर्दशीपदस्योभयत्र सम्बन्धाद्वाक्यभेदश्चतुर्दशीत इति विपरिणामकल्पना च स्यात् । उच्यते, न तावद्विपरिणामकल्पना चतुर्दश्यां सोमदर्शनादिति व्यवहितान्वयस्यादुष्टत्वाद्वाक्यभेदोऽपि नास्ति श्रुत्यर्थाभ्यां सम्बन्धस्याभ्युपगमात् ।

यथाह ।

श्रुत्यर्थाभ्यामनेकार्थविधानं न विरुध्यत इति ।

श्रौतान्वयनानात्वे हि वाक्यभेदो भवति।

यथाह ।

कुमारिलः श्रौतव्यापारनानात्वे शब्दानामतिगौरवमिति ।

अत एवार्थिकत्वाद्द्वितीयसम्बन्धस्य शब्दविपरिणामकल्पनादोषोऽपि न प्राप्नोति । यथा रात्रिसत्रार्थवादस्थेनोपपदेनापि प्रतिष्ठार्थेन प्रतिष्ठाकाम इत्यधिकारेण विशेषणं भवन्ती न वाक्यं भिनत्ति, न च विपरिणामदोषं जनयति । ननु व्यवहितकल्पनादयो दोषा गत्यन्तराभावेऽभ्युपगम्यन्ते । अस्ति त्विह गत्यन्तरं चतुर्दश्यामन्वाधानापकर्षविधानं नाम । उच्यते । यदि व्यवहितकल्पनादिभयादन्वाधानापकर्षविधानमङ्गीक्रियते तर्हि तत्रापि कियन्तो दोषाः प्रसज्यन्ते तदाकर्णय ।

तत्र। अनन्तरैकदोषवर्जं पूर्वोक्तसर्वदोषाणां तदवस्थत्वात् प्रतिपदि कदाचिदपि द्वितीयाऽप्रवेशादनुभाव्यमानार्थत्वमप्युक्तं स्यात्। अथ प्रतिपद्युक्तायां द्वितीयायां सोमदर्शनादिरुच्यते। तत्र। सर्वथा अपि द्वितीयायाः प्रतिपद्युक्तत्वाविशेषेणाविशेषणत्वप्रसङ्गात् पूर्वोक्तानामपि दोषाणां तदवस्थत्वात्। अथ द्व्येव प्रतिपद्युक्तायां प्राक्-द्वितीयायां सोमदर्शनादिरुच्यते। तत्र। अनन्तरैकदोषवर्जं पूर्वोक्तदोषाणामन्यथाप्यपरिहारात्।

किञ्च आदित्यवारे षष्टिनाडिकायाममावास्यायां सत्यां प्रतिपदि घटिकाद्वयविच्छेदाय सोमवारं व्याप्य मङ्गलवारे घटिकाद्वयमात्रायां प्रतिपदि सत्यां द्व्येव प्रतिपद्युक्ता द्वितीया जातेति तत्र सोमदर्शनाच्चतुर्दश्याममावास्याममपकृष्येत। अथ त्रिमुहूर्त्तायां द्वितीयायां सोमदर्शनादिरुच्यते। तत्र। नहि कदाचिदपि त्रिमुहूर्त्तैव द्वितीया भवति। यद्यप्यत्यन्तह्रासो भवति तथापि त्रिमुहूर्त्ताधिकह्रासाभावात् सार्धत्रिमुहूर्त्तन्यूनद्वितीया न कदाचित् सम्भवति। अथ यस्मिन्नहनि त्रिमुहूर्त्तैव द्वितीया तत्र सोमदर्शनादिरुच्यते। तत्र। तृतीयायुक्ता द्वितीया यस्मिन्दिने तत्र सोमदर्शनादपि हि चतुर्दश्याममावास्यापकर्षः प्रसज्यते। अथ प्रतिपद्दिनवर्त्तिन्यां त्रिमुहूर्त्तायां सोमदर्शनादिरुच्यते, तर्हि षण्मुहूर्त्तायां वा प्रतिपदि द्वितीयायामपि चतुर्दश्याममावास्यापकर्षो न विधीयेत। अथ न्यूनत्वव्युदासार्थं त्रिमुहूर्त्तग्रहणं नाधिकव्युदासार्थमित्युच्यते, तत्रापि तावदेको दोषः कलाशब्दानां न्यूनाधिकनिवर्त्तकत्वाभावात् न्यूनमात्रनिवर्त्तकत्वमिति। अयमपरो न्यूनत्रिमुहूर्त्तायां

सोमदर्शनाविशेषेऽपि अन्वाधानानपकर्षः प्रसज्येत । अथापराह्णिक्यां द्वितीयायां सोमदर्शनादित्युच्यते। नैतदेवं। न हि कदाचिदपि तिथिः सैवस्वपूर्वाह्णसमन्विनी विद्यत इति, सर्वस्याः अपराह्णसम्बन्धिताविशेषेण व्यावृत्त्यभावेन व्यर्थविशेषणत्वप्रसङ्गात् । अथापराह्णमात्रेण या द्वितीया सैवापराह्णिकी तस्यां सोमदर्शनादित्युच्यते। नैव। अपराह्णमात्रवर्त्तिन्यां द्वितीयायां कदाचिदपि सोमदर्शनाभावेनार्थसम्भवादयुक्तमुक्तं स्यात्। आपराह्णिक्यां द्वितीयायां सन्ध्यादिवर्त्तिन्यामेव सोमस्य दृश्यमानत्वात्। अथापराह्णिकी द्वितीया यस्मिन्दिने विद्यते तदीयसन्ध्यादिकाले सोमदर्शनादित्युच्यते, तर्हि तदीयसन्ध्यादिवहूनां पदानां अध्याहारः प्रसज्येत । पूर्वोक्तवाक्यान्तरव्यवहितकल्पनादयो दोषा अपि तदवस्था एव। तस्मात् सोमदर्शनदिने यागनिषेधश्रुतीनान्तद्दिने यागविधायकश्रुतीनाञ्च वक्ष्यमाणमतानुसारेण व्यवस्थितविकल्पः, एवंविचारे प्रतिपादितत्वयैवैतदपि यत्न नेतव्यं न स्यात्तन्नेष्ट । तस्मान्नियमेन चतुर्दश्यामन्वाधानापकर्षविधायकमेतदिति युक्तं। तदयुक्तं। "यस्मिन्नपरम् पुरस्तात्परत" सोमं ॥ दृश्यते तदहर्यजत इति श्रुत्या यागस्य चन्द्रादर्शनदिने विधानात् ।

तथाच स्मृति ।

> यदहश्च न दृश्येत सम्पूर्णश्च यदा भवेत् ।
> स एव कालो यागस्य एतेन हविषा यजेत् ॥ इति ॥

उपवासोऽपि तस्मात् "यदहैवैतस्य पुरस्तात्र पश्चात्पश्येत्तदहर्वोपवसेदिति वचनेन चन्द्रादर्शनदिने विहितस्तयोरैकतावश्यकत्वाद्विनि चन्द्रदर्शनेऽङ्गगुणविरोधे च तादर्थ्यादिति न्यायेनाङ्गकाल एव

परित्याज्यः, प्रधानविरोधेनाङ्गमपि परित्याज्यं किमङ्गगुणमपि ।

अतएवोपवसेदित्यनुवदत्यापस्तम्बः ।

यदहर्न दृश्यते तदहरमावास्यायां श्वो न ददर्श इति येति ।

सम्पूर्णायाममावास्यायां तत्रोपवासः, अन्यस्यां तु पूर्वदिने उपवासः, चन्द्रादर्शनदिने याग इत्यर्थः, अन्यथाङ्गकालानुरोधेन प्रधानकालबाधप्रसङ्गात् ।

ननु "यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन्त इति चन्द्रदर्शनेऽपि यागं दर्शयति । उच्यते । इयं श्रुतिः चन्द्रोदयदिने यागमाह, न चन्द्रदर्शनदिने । तथापि चन्द्रोदयात् प्रागेव याग इत्याह श्रुतिः, "तदेनमह्नः औषधीभ्यः सम्भृत्याऽऽहुतिभ्योऽधिजनां जनयतीति । उदितञ्च जना न तस्मिन्नहनि पश्यन्ति किन्तु द्वितीय एवेति । अतः खण्डतिथावपि तथैव यष्टव्यं अन्यथा श्रुतिविरोधः । यदपि "स एष आहुतिभ्यो जातः पश्चाद्ददृशे" इत्यादिभाष्याभिप्रायेणैव । अथ वा प्रतिपद्याहुतिभ्योजातः पश्चाद्द्वितीयदिने ददृश इत्यर्थः, अत एव स्मृतिकाराश्च अचन्द्रदर्शनदिने यागकरणादित्यत आहुः ।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति ।

तथा ।

यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।

तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातय इति ॥

तस्माच्चन्द्रदर्शनदिने सर्वथा यागो न कर्त्तव्यः, चन्द्रदर्शने यागनिषेधेनैव प्रतिपच्चतुर्दश्योर्निवृत्ते तन्निषेधो गुरुत्वख्यापनार्थः । एतेन "त्रिमुहूर्त्ता द्वितीया चेति वाक्यमन्वाधानोत्कर्षविधायकमिति निरस्तं।

किञ्च अन्वाधानोत्कर्षविधाने चतुर्दश्यां सोमदर्शनाच्चतुर्दशीतः परञ्च दिने अन्वाधानमिति व्यवहितसम्बन्धद्वयं प्रसज्यते भवदुक्तदोषप्रसङ्गाच्च । यदि प्रतिपच्चापराह्णिकी त्रिमुहूर्त्ता द्वितीया तदा चतुर्दश्यामन्वाधानं कर्त्तव्यं परतः प्रतिपदि त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमाणे अन्वाधानापकर्षविधानेऽपि दोषाभावात् । न ह्यत्र प्रतिपच्छब्दस्य वा द्वितीयाशब्दस्य वा सोमदर्शनादित्यनेन सम्बन्धः येन वाक्यभेद-विपरिणाम-व्यवहितकल्पनाः भवेयुः परत इत्यनेनैव प्रमाणाभावात् चतुर्दश्यामन्वाधानं परतः सोमदर्शनादित्युक्ते चतुर्दशीपरतः तिथिग्रहणे प्राप्ते अमावास्यायाः प्रतिपदि चन्द्रदर्शनासम्भवात्तु द्वितीया गृह्यते तथा अपि चतुर्दशीपरत्वात् तदतिक्रमेण तिथ्यन्तरग्रहणे प्रमाणाभावाच्च । न द्वितीयामात्रे सोमदर्शनं चतुर्दश्यामन्वाधाने हेतुस्त्रिमुहूर्त्तग्रहणविरोधात् तस्माच्चतुर्दश्यामन्वाधानं, परतस्त्रिमुहूर्त्तद्वितीयायां सोमदर्शनादित्यर्थे स्वीक्रियमाणे दोषाभावात् प्रतीयमानान्वयनिर्वाहादङ्गकालानुरोधेन प्रधानकालबाधाभावाच्चान्वाधानापकर्षविधानमेव युक्तं ।

किञ्च चन्द्रदर्शनदिने यागे स्वीक्रियमाणे बहुवाक्यविरोधोऽपि प्रसज्येत नारायणीयगृह्यपरिशिष्टात् ।

यावत्पूर्णस्य हीनत्वं यावच्चास्तमितोदयः ।
औपवस्थ्यं यागश्च तावदिदुरिति श्रुतेः ॥

यावत्पूर्णस्य पौर्णमासीचन्द्रमसो हीनत्वं न भवति तावदौपवस्थ्यं कार्यमित्यर्थः । यावच्चामावास्यायां चन्द्रमसोऽस्तगतस्य प्रतिपद्युदयो न भवति तावद्यागकाल इत्यर्थः ।

पूर्णे शशिन्यौपवस्तं यागश्च समसङ्गमे ।

पर्वण्यस्तङ्गते कुर्यात् यागश्चन्द्रार्कसङ्गते ॥

इति पूर्वोक्तएवार्थोऽनेन वाक्येन स्पष्टीक्रियते, पौर्णमास्यां पूर्णे चन्द्रमसि औपवस्ताख्यं व्रतं कार्य्यं तदनन्तरं चन्द्रार्कयोः समसङ्गमे प्रतिपदि यागः कार्य्यः इत्यर्थः ।

उदितो यदि वा क्षीणो दृश्यते यदि चन्द्रमाः ।

प्रतिपत्सु न कार्य्यः स्यात् विश्वेदेवाः पराङ्मुखाः ॥

उदितोदर्शप्रतिपदि क्षीणः पौर्णमासीप्रतिपदि चन्द्रमा दृश्यते तदा यागो न कर्त्तव्यः यतःसर्व्वे देवास्तत्र पराङ्मुखा भवन्ति ।

तथा ।

पुरा तु सूर्य्यास्तमया द्वितीया यदि दृश्यते ।

यागस्तत्र न दृश्येत विश्वेदेवाः पराङ्मुखाः ॥

ऋष्यापवादः ।

त्रिधायां प्रथमे भागे दृश्यते पूर्णता तथा ।

तद्यात्ययो दिवा नास्ति तत्र यागः परेऽहनि ॥

रात्रेस्तु प्रथमे भागे न दृश्येत्पूर्णता तथा ।

क्षीणोदितौ दिवा यत्र तत्रेष्या यागमादिशेत् ॥

अत्र केचिदाहुः प्रतिपदि सोमदर्शने प्रतीष्टिकरणं वैकल्पिकं द्रष्टव्यं, यदि हि प्रातः प्रतिपत्तृतीयांशे लभ्यमानेऽपि सोमदर्शनेनैव दर्शयाग' प्रतिषिध्यते तदा ।

पञ्चमीयेऽह्नि सोमश्चेदाकाश्यां यदि दृश्यते ।

तत्र व्याहृतिभिर्हुत्वा दण्ड दद्याद्द्विजातये ॥

इति कात्यायनवचनमसङ्गतार्थमेव स्यात् । "त्रिमुहूर्त्ता द्वितीया चेदित्यनेन चतुर्दश्यामन्वाधानं विधाय पञ्चदश्यामर्धादिच्छिते यागे कृते द्वितीयेऽहनि प्रतिपदि यजनीयेऽहनि सोमयेदित्युच्यमानमसङ्गतं स्यात् । तस्मादग्रे यजनीयत्वाभावात्पूर्वाह्णस्य तदा यजनीयत्वात् "तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये" इति यागाभावे व्याहृतिहोमो दण्डदक्षिणादानं विधीयमानमपि आकस्मिकत्वादसङ्गतं, सोमदर्शनेन तु याज्ञिके यागप्रतिषेधेऽभ्युपगम्यमाने चन्द्रदर्शनेऽपि सति यद्यनेनैव वचनेन व्याहृतिहोम-दण्डदक्षिणादानसहितो यागो विधीयते तदेवमर्थवत्त्वमन्यथा । तदयुक्तं । तथाहि किमयं प्रायश्चित्तविधिर्निमित्तविधिर्वा, आद्येऽपि किं यजनीयदिने चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शने प्रायश्चित्तं, उत चन्द्रदर्शनदिने यागे । न तावत् प्रथमः कल्पः, यो ह्यज्ञानाच्चन्द्रदर्शनदिने यागं अनुतिष्ठति तस्य पश्चाच्चन्द्रदर्शने प्रायश्चित्तविधायकत्वेनास्योपपत्तेः श्रौत-स्मार्त्तनिषेधप्राप्तिकत्वापादनसामर्थ्याभावात् । किञ्च प्रायश्चित्तं विहितनिषिद्धातिक्रमे भवति, तच्च यदि यजनीयदिने चन्द्रदर्शने प्रायश्चित्तमिदं भवेत् तर्हि तन्निषेधकल्पना प्रसज्येत यदि चन्द्रदर्शनदिने यागे इदं विधीयेत । उत चन्द्रदर्शनदिने यागे निमित्ते प्रायश्चित्तं भवेत्तदा तन्निषेधस्य श्रुतत्वान्न काचित्कल्पनेति तथैवेदं प्रायश्चित्तं । नापि द्वितीयः निषेधप्राप्तिकत्वाभावप्रसङ्गात् । निमित्तविधित्वेन किं यजनीयदिने चन्द्रदर्शननिमित्तमिदं विधीयते उत चन्द्रदर्शनदिने यागे निमित्ते इति । नोभौ पूर्वोक्तदोषात् । द्वितीयपक्षे यजनीयदिने चन्द्रदर्शननिमित्तत्वप्रतीतिरपि बाध्यते । तस्माच्चन्द्रदर्शनदिनयागनिषेधो न प्राप्तिक-

इति। अत्र केचिदाहुः सर्वदा प्रतिपद्येव यागो न द्वितीयाविद्ध-प्रतिपदि यागः, नापि पर्वचतुर्थांशे याग इति।

यदाह कात्यायनः।

पक्षादावेव कुर्वीत सदा पक्षादिकर्म यत्।
पूर्वाह्न एव कुर्वन्ति विद्धेऽप्यन्ये मनीषिणः। इति॥

अन्ये तु तस्य विकल्पसूचनार्थं अन्ये न कुर्वन्तीत्यर्थं, यथा षोडशि-ह्येके समामनन्ति षोडशिन्येके इति। तदप्ययुक्तं। पूर्वोक्तसन्धि-निमित्तपूर्वदिनयागविधायकपर्वचतुर्थांशयागविधायकद्वितीयाविद्ध-प्रतिपन्निषेधकवचनसन्दर्भगतदिनयागनिन्दावचनबहुतरश्रौतस्मार्त-वचनसङ्कोचप्रसङ्गात् अनेकदोषदुष्टविकल्पप्रसङ्गाच्च। न चात्र विधि-विभक्तिरस्ति, आचारमात्रोपदेशात्। न चेदृशस्य स्पष्टविधिविभक्ते-र्युक्तबहुतरवाक्यार्थविकल्पापादने सामर्थ्यं, तस्मादेतद्वाक्यममनीषिण-इत्यकारप्रश्लेषेण व्याख्येयं। तस्मादुक्तैव व्यवस्था युक्ता। अत्र बौधा-यनसूत्रनिबन्धकाराः केचिदपराह्णगतेऽपि पर्वसन्धौ पूर्वेद्युरुपोष्य तद-हर्यागानुष्ठानं वदन्ति तथाप्यपराह्ण एव सन्धिसमीपे यागमिच्छन्ति। तदनुपपन्नं। प्रातर्यजध्वमितिमन्त्रलिङ्गविरोधात्।

ननु प्रातर्यजमानेऽपि सन्धौ यजेतेति विरुध्यते। नैष दोषः। सन्धि-शब्दस्य सामीप्यपरत्वात् सामीप्यस्य चापेक्षिकत्वात् यत्र कालोऽन्यापे-क्षया समीप इति वक्तुं शक्यत इति न सन्धिशास्त्रविरोधः, अपराह्णस्तु न कथञ्चित् प्रातरिति वक्तुं शक्यत इति अपराह्णयागानुष्ठाने भवति प्रातःकालविरोध इति न तत्र यागो युज्यते। ननु यावत्स-न्धिरतिसामीप्यं भवति तावत्सन्धिशास्त्रमनुसृत्यातीत्यपराह्णगतसन्धौ

तत्समीप एव यागापेक्षा। हन्त रात्रिगतेऽपि पर्व्वसन्धौ तत्रैवानुष्ठानं प्राप्यते । अथ पूर्व्वेद्युरग्निं गृह्णात्युत्तरमहर्द्देवता यजत इत्यहर्विधानाद्रात्रेस्तु साक्षाद्विधानाभावात् सन्धिसमीपस्य कथञ्चिदहन्यनुपपत्तेर्न रात्रौ यागानुष्ठानमिति। हन्तापराह्णगतेऽपि सन्धौ तत्र यागेऽनुष्ठीयमाने प्रातर्विधिविरोधादपराह्णस्य साक्षाद्विधानाभावात् सन्धिसामीप्यस्य प्रातरनुपपत्तेर्नापराह्णे यागानुष्ठानं। अथ सन्धौ यजेतेति प्रत्यक्षविधित्वात् प्रातर्यजनार्थमिति प्राग्भवर्णितोऽस्पष्टविधिर्दुर्बलः। अथोत्तरमहर्द्देवता यजत इत्यपि वर्त्तमानापदेशत्वेनास्पष्टविधित्वात् दुर्बलत्वमविशिष्टं। अथोच्यते। विरोधे सति बलाबलं चिन्त्यते रात्रिगतस्य सन्धेरहरपि समीपं भवति इति सन्धिशास्त्रस्य सामीप्यपरत्वादहःशास्त्रेणाविरोधः, इत्थं तत एव हेतोः प्रातःशास्त्रेणाप्यविरोधः।

किञ्च सन्धिशास्त्रस्य सामीप्यं न मुख्योऽर्थः, किन्तु लाक्षणिक इति, तथाप्यविशिष्टमस्पष्टत्वं। न च प्रातर्विधेरप्रकरणाधीनत्वं दोषः, अप्रकरणाधीनमपि स्मार्त्तदक्षिणाचारादिकं प्रकरणाधीनाच्छ्रौतात् प्रत्यासत्त्यपेक्षकाङ्क्षायोगशास्त्राद्बलीय इत्युक्तं शिष्टाकोपाधिकरणे। तस्माच्चोदितदेश-कालाद्यबाधेन यावत्सामीप्यं सम्भवति तावदेव गृह्णाति। अन्यथा सामीप्यलोभेन प्रातःकालबाधे क्रियमाणे सर्व्वाङ्गकालबाधोऽपि प्रसज्यते। तस्मात् सन्धिसमीपवर्त्तिनि पर्व्वचतुर्द्दश्यादिचोदितकालानुरोधिनि प्रातःकाले यष्टव्यं। ननु "न सायमस्ति देवयागाय जुष्टमिति सायंकाले यागनिषेधाद्विशिष्टोऽपराह्णादिरभ्यनुज्ञातो गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वात् यथा वामेन

चक्षुषा पश्यतीत्युक्ते दक्षिणेन न पश्यतीति गम्यते। अयेदं यद्ययं निषेधः स्यात् तदा तयं निषेधः एकस्मिन्नेव वाक्ये प्रातःकालविधिः सायंकालनिषेध इत्युभयपरत्वे वाक्यभेदप्रसङ्गादवश्यमेको विधिरितरो नित्यानुवाद इत्यभ्युपगन्तव्यं। तत्र यदि सायंकालनिषेधोऽभ्युपगम्यते तदा पारिशेष्यात् प्रातरपराह्णादिकालः सर्वोऽपि यागार्थः पाक्षिकः प्राप्नोति इति न प्रातःकालस्य नित्यवद्यागसम्बन्धानुवाद उपपद्यते। अथवा यदि प्रातःकालविधिरभ्युपगम्यते तदा तद्व्यतिरिक्तानां सर्वकालानां नियमेन निवृत्तत्वात् सायंकालनिवृत्तिरपि नित्यानुवादः।

किञ्च प्रातर्यजध्वमिति प्रैषरूपत्वात् प्रैषस्य च प्रवर्त्तनात्मकत्वाद्विधिकल्पनमेव युक्तं, न सायमस्तीति तु वर्त्तमानापदेशत्वेन प्रवर्त्तनाक्षेपः प्रतीतिरपि नास्तीति नेदन्निषेधविधानं निषेधस्य स्पष्टमनवगतेः प्रागुदाहृतप्रातःपूर्वाह्णे यागप्रतिपादकबहुवचनविरोधप्रसङ्गात्। ननु यदा प्रातः पर्वचतुर्थ्योरोऽस्ति तदेवं भवतु, यदा तु तस्याभावः तदा किं प्रातःकालो बाध्येत उत पर्वचतुर्थांश इति कथं निर्णय। उच्यते। अपराह्णे यागे क्रियमाणे पूर्वाह्णप्रातःकालतन्त्रप्रक्रमकालाः बाध्येरन्, प्रातस्तु क्रियमाणे पर्वचतुर्थांशमात्रबाधः इति बाधलाघवाय स एव युक्तः। तस्मादपराह्णगतेऽपि पर्वसन्धौ परेद्युरेव याग इति सिद्धं। मध्याह्नसन्धौ तु तद्दहरेव यागः प्रागुदाहृतकौगाक्ष्यादिवचनात्।

पुनः प्रणीय तत्रेष्टिं ततः कुर्याच्च नान्यथा ।

इति गर्गवचनेन पञ्चदश्यामिष्टिसमाप्तौ पुनर्यागविधानात् द्वितीयेऽह्न्येव यागो युक्तः । मध्याह्नसन्धिशास्त्रं क्षयगामिन्या तिथौ उत्तरदिने यागकालाभावे "प्रतिपत्प्रविष्टायामित्यनेन सह विकल्पनादुपपद्यते, वृद्धिगामिन्यां तु परतो यागकालस्य सद्भावे मध्याह्नशास्त्रं न प्रवर्त्तत एव "पश्चाद्योऽभियष्टव्या इति नियमस्य बाध्यते(१) । तदयुक्तं । "त्रिमुहूर्त्ता द्वितीया चेदित्यादिपञ्चवाक्यविरोधात् । विकल्पस्याष्टदोषदुष्टत्वाच्च । तस्मादेतद्वाक्यपर्य्यालोचनया प्रातःकाले समाप्तियोग्यं सर्वं कृत्वा विरम्य प्रतिपदि प्रविष्टायां ब्राह्मणभोजनमन्त्यपदार्थसमाप्तिश्च कर्त्तव्या । अत्र केचिदिदमूचे । साङ्गस्य प्रधानस्य पूर्वाह्ण एव कर्त्तव्यत्वाद्ब्राह्मणतर्पणस्य चाङ्गत्वादिरम्य व्यापारे साङ्गप्रधानवत्यां भावनायां विधिना प्रवर्त्तितत्वात्तद्विरोधः । वार्त्तिककारैश्च पार्वण्यधिकरणे पौर्णमास्यतिरिक्तात्पर्वव्यवच्छेदपरा श्रुतिः । "अमायामपि तद्वत् स्यान्न त्विहैव प्रतीयते इत्येतच्छ्लोकव्याख्याने उक्तं, यदि तथात्वमत्कर्मणः पूर्वापरचोदनावशेन पौर्णमासी न व्याप्यते न किञ्चिद्दुष्यतीति यदुक्तिरिष्टिसमाप्तिरपि पूर्वाह्णे दर्शिता । तस्मात्पौर्णमास्यां सद्यस्कालत्वपक्षाङ्गीकारे "पूर्वां पौर्णमासीं उत्तरां वोपवसेदिति पूर्वोपवासपक्षे सद्यस्कालता नास्तीत्येतदर्थमिदं वचनं, यावता द्वितीयदिने प्रतिपदः पूर्वाह्णस्य च विद्यमानत्वात्पुनःकरणं युक्तमिति । तदयुक्तं । "प्रतिपत्प्रविष्टायामितिवाक्यस्यौचित्यभङ्गात् प्रयोगवचनाच्छिन्नाङ्गप्रधानैककालस्य वचनवशेन हेयत्वात् न तद्योगेन

(१) भाव्यत इति ख० ।

मद्रोचो युक्तः "सन्धिमभितो यजेतेति श्रुतिविरोधात्। सा हि सन्धेरुभयतो यागप्रयोगो यथा भवति तथा यजेतेति प्रतिपादयति। तथापराह्णादिपर्वसन्धौ तदहःप्रातरन्वाधाय परेद्युर्यागेऽनुष्ठीयमाने सन्धिगर्भता भवत्येवेत्यविरोधः। पूर्वाह्णपर्वसन्धौ [illegible] पूर्वेद्युरन्वाधाय तदहःसन्धेः प्रत्यक् समाप्तौ सन्धिगर्भत्वं हीयते तेनोत्तमः पदार्थः समाप्तिशब्दवाच्यो माध्यन्तर्पणात्मकः केवलं सन्धेरूर्द्ध्वं उत्कृष्टव्यः, तावता प्रयोगे सन्धिगर्भता चेत्स्यति न तु मध्ये विरामः कस्मात्सन्धिगर्भप्राप्त्यभावादिति ब्रूमः। ननु सन्धिगर्भत्वमुत्कृष्यमाणमपि सर्वमुत्कृष्यते प्रयोगभेदनुत्वर्यार्थं, तत्र प्रातःकालबाधप्रसङ्गादैरन्तर्यं हि प्रयोगवचनेनार्थोद्राक्षिप्यमाण साक्षादुदितकालादिपदार्थविरोधे दुर्बलं तदेवंविधोदाहरणे प्रातःकाले समाप्तिवर्जं निर्वर्त्य विरम्य सन्धिपर्यन्तं प्रतीक्ष्य सन्धेरुपरि प्रतिपत्काले समाप्तिपदार्थ एव केवलः कार्य्यः तस्मान्मध्याह्नसन्धौ परेद्युर्याग इति। पूर्वाह्णपर्वसन्धावपि तदहरेव यागः चारायणीयवचनपरिशिष्टात्।

विप्रकर्षे परे यागः सन्निकर्षे परे तथा।
श्लोकद्वन्द्वः समाख्यातो मुनिभिस्तत्त्वदर्शिभिः॥
चतुर्दशेऽपि च यागः स्यात् तथा द्विदर्शेऽपि च।
सूर्य्याचन्द्रमसोः पूर्वे पूर्वाह्णे सन्निकर्षतः॥

चतुर्दशे पौर्णमास्यां, द्विदर्शे त्वमावास्यायां, सूर्य्याचन्द्रमसोः परस्परं पूर्वाह्णे यदा सन्निकर्षः तदा यागः कर्त्तव्य इति वाक्यार्थः।

तथा।

वृथा यज्ञमुपासीत न हि भस्मनि हूयते ॥

"प्रतिपद्यप्रविष्टायामित्युक्तपरिहारं ।

अथ केचिदाहुः ।

ग्रीष्मकालेऽह्नामतिदीर्घत्वात् किञ्चिदधिके षोडशघटिके आवर्त्तनं भवति तत्र तिथिह्रासे सति कदाचिच्चतुर्दशघटिकः पर्वचतुर्थांशः तदावर्त्तनसमीपे पूर्वाह्णे पर्वसन्धिर्यदि भवति तदा सूर्य्योदयसमीपे तस्योपक्रमकाले पर्वचतुर्थांशाभावेऽपि प्रधानयागावसरे प्रातःकाले विद्यमानत्वात्तत्रैव यागः न परेद्युः प्रातः प्रतिपच्चतुर्थांशे "न यष्टव्यं चतुर्थांशे इति निषेधात् । यत्र हि प्रधानयागाङ्गभूतविहितकालविरोधो भवति तत्राङ्गगुणविरोधन्यायेनाङ्गकालपरित्यागस्यैव युक्तत्वादत्रोऽपि न परेद्युर्यागः । यदा त्वस्मिन्नेव विषये परेद्युः प्रातः प्रतिपत्तृतीयांशः तदापि न तत्र यागः "त्रिमुहूर्त्ता द्वितीया चेदित्यादिगाथायां चन्द्रदर्शनदिने यागनिषेधकवचनविरोधात्, तस्मादुक्तविषये पूर्वदिन एव याग इति । यदपि वचनान्तरं ।

षोडशेऽहन्यमीष्टेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशी जघन्येष्टिः पापा सप्तदशेऽहनि ॥ इति ।

तेन सप्तदशेऽहनि इष्टिं न कुर्य्यात् नादधीतेति । अन्वाधानमेव निषिध्यते न यागः, तथात्वे तिथिवृद्धाविष्टेरननुष्ठानमेव स्यात् । अतो यजनीयादारभ्य सप्तदशेऽहनि औपवसथ्य कर्म्म न कार्य्यमित्यवगन्तव्यं ।

अतएव बौधायनः ।

अतएव स्वस्थानानि चतुर्दशी षोडशी न तु त्रयोदशी सप्तदशीति ।

तदैव यागः परतो यदि स्यात्
तस्मिन् विकल्प्याः प्रकृतेः परेद्युरिति ॥

अत्र केचिदाहुः ।

प्रयाह्यः षण्मुहूर्त्ता चेद्यस्यां वृद्धिः परेऽहनि ।
त्रिमुहूर्त्तमपि ग्राह्या यस्यां ह्रासः परेऽहनि ।
त्रिमुहूर्त्ते ॥ कर्त्तव्यं हीनं तत्रापि निर्दिशेत् ॥ इति ।
अभिषेचेत् सङ्गवादूर्द्धं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इत्यनेनैव स्मृतिवचनेनाग्रयणादिविकृतितिथिषु सद्यस्कालत्वेन विहितात्तु द्वितीयदिने प्रतिपद्वृद्धौ पूर्वदिने सद्यस्कालत्वं नास्तीति। तथा ।

त्रिमुहूर्त्ता द्वितीया चेत् प्रतिपच्चापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

इत्यस्मिन् वचने प्रदर्शितो यागनिषेधः प्रतिपदि तिथिवृद्धौ नास्तीत्यत्र "अपराह्णे त्रिमुहूर्त्ते याह्यमेवेति वचनद्वयस्याभिप्राय इति । अत्रोच्यते यत्तावदुक्तं "अभिषेचेत् सङ्गवादूर्द्धमिति वचनं विकृतिविषयमिति। तदयुक्तं। इदं हि वचनं दर्श-पूर्णमासप्रकरणपठितं वा अनारभ्याधीतं वा उभयथापि विकृतिनिवेशो न सम्भवति । न च विकृतिविशेषप्रकरणपाठः सर्वविकृतिविषयत्वमङ्गीकुर्वता स्वीक्रियते विद्यते वा। न च सर्वविकृतिपाठः सम्भवति, तेन प्रकृतिविषयमेतत् । न च तत्रापि सद्यस्कालत्वापवादः सम्भवति, तदभावे किं प्रतिपदि यागस्तस्मिन् पर्वणि वा, न प्रथमः एवंविध-

विषये द्वितीयदिने प्रतिपद्भावपि त्रिमुहूर्त्ताधिकद्वितीयासद्भावेन "त्रिमुहूर्त्ता द्वितीया चेदित्यादिवचनविरोधात्, न वाजसनेयि-मताभिप्रायमिदं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनस्य मध्याक्रात् प्राक्पर्वसन्धौ प्रतिपद्वृद्धौ तत्र यागो न कर्त्तव्यः किन्त्वन्वाधानमे-वेत्येतदर्थप्रतिपादकत्वाभावात् । अथ प्रतिपदि त्रिमुहूर्त्ता द्वितीया चेत्यस्यैतदर्थेन ह्रासविषयत्वेन संकोच इति चिरस्तं । "अमावास्याः षण्मुहूर्त्ताः स्युरित्यपि वचनं नैतदर्थप्रतिपादकं, तस्मादेवमिदं वचनद्वयं व्याख्येयं षण्मुहूर्त्तामपि यदा चतुर्दशीदिनसम्बन्धि अन्वाधानेन ग्राह्यं यदि द्वितीयदिने वर्द्धते ह्रासे तदपि ग्राह्यं । अन्यथा "त्रिमुहूर्त्ता द्वितीया चेति वाक्ये चन्द्रदर्शनयागनिषेध-वाक्यविरोधः । एवं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनान्तराविरो-धेनान्वाधानविषयमेव व्याख्येयं ।

अपरे त्वाद्यं वचनं पर्वप्रतिरिक्तविषयमित्याहुः । किं बहुना बहुवाक्यविरोधान्न तदीया व्याख्या युज्यत इति ।

एवं पञ्चम्यामपि द्रष्टव्यं, अतएव तत्राप्युक्तं "यद्यहर्दृष्टो भवति नियतं पर्वसन्धि परस्तात् कृत्वा तस्मिन्नहनि च पशुं तत एव ब्रूत वा प्रारभ्याथ प्रकृतिरथ चेत् पर्वसन्धिः पुरस्तात् कृत्वा तस्मिन् प्रकृति-र्य तु क्षात्रपशुं तत एव" इति, पूर्वोक्तसन्ध्यानुसारेणुर्विहितकालत्व-त्वात् अत एवेत्युक्तं । अयं च अविहितविशेषकालास्तु विकृतिषु इष्टिषु च निर्णयः, यत्र कालविशेषो ब्रह्मकालत्वं वा श्रूयते तत्र तेनासुष्ठानमित्यवगन्तव्यं ।

आश्वयपेक्ष्यास्तु श्रुतौ विशेषो दर्शितः ।

'आवर्त्तनात् प्राक्' सङ्गवादूर्द्ध्वमिति शेष ।

सन्धिर्येत् सङ्गवादूर्द्ध्वं प्राक् पर्य्यावर्त्तनाद्रवेः ।

सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इति कात्यायनस्मरणात् ।

एतच्च सद्यस्कालत्वं वैकल्पिकं "सद्यस्त्वा वा क्रियते समस्तमिति वचनात् ।

तथापस्तम्बः ।

खर्विकां तृतीयां वाजसनेयिनः समामनन्ति ।

'खर्विकां' अल्पिकामिति यावत् । अल्पत्वञ्च दिनादूर्द्ध्वव्याप्त्यभावात् ।

उक्तञ्च गृह्यार्थसंग्रहकारेण ।

मध्यन्दिनात् स्यादवनीच यस्मिन्

प्राक् पर्वणः सन्धिरियं तृतीया ।

सा खर्विका वाजसनेयिमन्या

तथासुमोध्याथ परेद्युरिष्टिः" ॥ इति ।

केचित् "पौर्णमास्यामित्यादि "सद्योवेत्येतदन्तं एकं सूत्रं । अपरन्तु "सद्यस्कालायां सर्वं क्रियत इति वदन्ति, तत्र सर्वस्यां पौर्णमास्यां अन्वाधानादीनि सद्यः पूर्वेद्युर्वा क्रियन्त इति पूर्वसूत्रस्यार्थः, द्वितीयस्य तु सद्यस्काला विकृतिस्तस्यां सर्वं ब्राह्मणतर्पणान्तं क्रियते नेष्टान्तादिकमिति । नैतद्युक्तं । अपराह्णसन्धौ सद्यस्कालपक्षे "सन्धिमभितो यजेतेतिश्रुतिविरोधात् ।

विधिरप्यत्रतायुक्त ।

प्रकृतेश्च न कदाचिदप्यस्वकालत्वमिति ।

यथाह ।

प्रकृतेरन्यथाभावं न प्रशंसन्ति पण्डिताः ।
यथोक्तं सर्वमित्येतद्धित्ययर्थसुदाहृतम् ॥ इति ।

तदयुक्तं प्रकरणबाधप्रसङ्गात् ।

एवं प्रकृतावुक्तं, विकृतौ तु यद्यपि 'दर्श-पूर्णमासाविष्टीनां प्रकृतिरित्यनेन दर्शपौर्णमासिकविध्यन्तातिदेशात्तत्रापि स एव चतुर्थ्यादिलक्षणः काल इति प्रतिभाति, तथापि "यदोष्वा यदि पशुना यदि सोमेन यजेत, अमावास्यायां पौर्णमास्यां वा यजेतेत्यापस्तम्बेन विकृतौ पुनः कालविधानात्पञ्चदश्यामेव यागसमाप्तिरतो यत्र संपूर्णैव पञ्चदशी प्रतिपच्च तत्र पञ्चदश्यामेव विकृतिं समाप्यानन्तरं प्रकृतिरन्यथाबाधादि । खण्डतिथौ तु यदा पूर्वाह्णे पर्वसन्धिस्तदा विद्युत्पदिष्टकालालाभसम्भवेऽपि कर्मापवर्गसद्भावासम्भवेन सा-प्रधानव्यापित्वासम्भवात् "सर्वाङ्गैः प्रधानं देशे काले कर्तरि निर्दिश्यत इत्यापस्तम्बेन वाक्येन विहितकालसम्बन्धविधानादुत्त-रमुखरपि प्रकृतेः पूर्वाङ्गत्वात् "अपूर्वमन्ते स्यादित्यापस्तम्बेनैव विकृते, वै प्रकृतिविधानात् तदनन्तरमेवातिदेशिके प्रतिपदाद्यभागवर्ये-प्रधानपर्याप्ते विकृत्यनुष्ठानमित्यवगन्तव्यम् । यदा त्वपराह्णे रात्रौ पर्वसन्धिस्तदा तदहरेव यागः तत्रैवोपदिष्टकालसम्भवात् । एतत् मभिसन्धायोक्तं ।

आवर्त्तनात्प्राग्यदि पर्वसन्धिः
कृत्वा [illegible] तस्मिन् प्रकृतिं विकृत्या ।

तथाच वचनान्तरे ।

यत्नौपवसथं कर्म यजनीयात् त्रयोदशे ।
भवेत्पञ्चदशे वापि तत्प्रयत्नेन वर्जयेत् ॥ इति ।

ननु च दिनद्वयस्य क्षय-वृद्ध्योरसम्भवात् त्रयोदशेऽहनि पञ्चदशे वा कदाचिदौपवसथं कर्म न कार्यमिति कथं निषेधः, उच्यते यद्यप्राप्तिस्तर्हि शास्त्रान्तरे न दिवौनित्यवचित्यानुवाद इति।

ननु षोडश्यामुपवसथे क्रियमाणे "पञ्चान्ते उपवस्तव्या" इति वचनं विरुध्यते पञ्चदशदिनात्मको हि पक्षः तत्र प्राक्तनयजनीयदिनादारभ्य पञ्चदशभिः पक्षे गते षोडशीयमतिरिच्यते। अथ वा प्राक्तनयजनीयोपरितनदिनादारभ्य पक्षः क्रियते तर्हि प्राक्तनयजनीयात्पञ्चादित्वं हीयते। उच्यते। पञ्चदशभिस्तिथिभिः पक्षो भवति, न तु पञ्चदशभिर्दिनैर्ज्योतिर्विदां स्मरणात्तथाच तिथयः कदाचिच्चतुर्दशसु दिनेषु समाप्यन्ते पञ्चदशसु षोडशसु वा तावत्स्वयं पञ्चदश्यैव तत्र पञ्चादिशब्देन प्रतिपदुच्यते पञ्चान्तशब्देन पञ्चदशी तिथिः तस्मात्षोडशादिदिनगतायामपि तस्यामेवोपवसथः क्रियत इति। यद्वास्य वचनस्य पूर्वार्द्धममावास्यायामुत्तरार्द्धं पौर्णमास्यां वेदितव्यं पौर्णमास्यादिपक्षस्यामावास्यापक्षस्यापि विद्यमानत्वात्। प्रतिपद्यौपवसथं कर्म मागस्य तथायं पञ्चदशीति निषेध उच्यते।

उक्तं।

समे पञ्चदशी याज्या मासे याज्या तु षोडशी।
ऊने वाप्यधिके वापि नेज्या पञ्चदशी क्वचित् ॥

अथ कालमाधवस्य विशेषवचनैरेव बाध्यत्वात् क्षय-वृद्धिवचनमन्यविषयं।

क्षय-वृद्धी न जानीते तिथीनां चन्द्रमण्डले ।
यातुधानः स विज्ञेयो यथा भस्मनि हूयते ॥

इत्यस्य क्षय-वृद्धिज्ञानविधेरयमुपयोग उत्तरदिनक्षय-वृद्ध्यो-र्दर्शयोः पूर्वदिनप्रवेशगमिति ।

तथाच स्मृत्यन्तरे ।

तिथेः परस्या घटिकास्तु याः स्यु-
र्न्यूनास्तथैवाभ्यधिकास्तु तासां ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ॥ इति ।

'परस्यास्तिथेः' प्रतिपदः, या घटिकाः पूर्वस्यास्तिथेर्न्यूना अधिका वा तस्यासामर्द्धं पूर्वस्मिन्दिने ह्रासेऽस्य वियोज्यं वृद्धौ च संयोज्यमित्यर्थः । तदनेन पर्वसन्धिज्ञानं कार्यमित्युक्तं भवति । पौर्णमास्यां स्वापस्तम्बेनोक्तो विशेषः ।

च पौर्णमास्या मन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायां सर्वं क्रियत इति ।

अस्यार्थः सद्यस्कालायां पौर्णमास्यां अन्वाधानादीनि यद्यपि तत्र समानेऽहनि क्रियन्ते पूर्वेद्युर्वा तत्र सर्वं आज्ञ्यस्तर्पणान्तं क्रियते तेन तदेकमिति । उक्तञ्च भाष्यार्थसंग्रहकारेण ।

अन्वाहितिश्चास्तरणोपवासौ
पूर्वेद्युरेतत् खलु पौर्णमास्यां ।
आवर्त्तनात्प्राक् यदि पर्वसन्धि-
स्तदास्तदा वा क्रियते समस्तं ॥

'आवर्त्तनात् प्राक्' मध्याह्नादूर्द्धमिति शेषः ।

सन्धिर्येन मध्याह्नादूर्द्धं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इति कात्यायनस्मरणात् ।

एतच्च सद्यस्कालत्वं वैकल्पिकं "सद्यस्का वा क्रियते समाप्तमिति वचनात् ।

तथाचापस्तम्बः ।

खर्विकां तृतीयां वाजसनेयिनः समामनन्ति ।

'खर्विकां' अल्पिकामिति यावत् । अस्याश्च दिनार्द्धव्यापित्वाभावात् ।

उक्तञ्च स्मृत्यर्थसारकारेण ।

मध्यन्दिनात् स्यादथवापि यस्मिन्
प्राक् पर्वणः सन्धिरियं तृतीया ।
सा खर्विका वाजसनेयिमध्या
तथाप्युपोष्याथ परेद्युरिष्टिः ॥ इति ।

केचित् "पौर्णमास्यामित्यादि "सद्योऽथेत्येतदन्तं एकं सूत्रं । अपरन्तु "सद्यस्कालायां सर्वं क्रियत इति वदन्ति, तत्र सर्वस्यां पौर्णमास्यां अन्वाधानादीनि सद्यः पूर्वेद्युर्वा क्रियन्त इति पूर्वसूत्रस्यार्थः, द्वितीयस्य तु सद्यस्काला विष्टिमात्र्यां सर्वं प्राक्षणतर्पणान्तं क्रियते नेडान्तादिकमिति । नैतद्युक्तं । अपराह्णसन्धौ सद्यस्कालपक्षे "सन्धिमभितो यजेतेतिश्रुतिविरोधात् ।

विधिरत्नमालायामप्युक्तं ।

प्रकृतेस्तु न कदाचिदप्यकालत्वमिति ।

यथाह ।

> प्रकृतेरन्यथाभावं न प्रशंसन्ति पण्डिताः ।
> यद्योक्ता सर्वमित्येतद्विकृत्यर्थं तदाहृतम् ॥ इति ।

तदप्युक्तं प्रकरणबाधप्रसङ्गात् ।

एवं प्रकृतावुक्तं, विकृतौ तु यद्यपि 'दर्शं पूर्णमासाविष्टौ वा प्रकृतिरित्यनेन दर्शपौर्णमासिकविध्यन्तातिदेशात्तथापि स एव चतुर्थ्याद्यादिलक्षणः कालः इति प्रतिभाति, तथापि "यदीष्ट्या यदि पशुना यदि सोमेन यजेत अमावास्यायां पौर्णमास्यां वा यजेतेत्यापस्तम्बेन विकृतौ पुनः कालविधानात्पञ्चदश्यामेव यागसमाप्तिरतो यत्र सपूर्णैव पञ्चदशी प्रतिपच्च तत्र पञ्चदश्यामेव विकृतिः समाप्यानन्तरं प्रकृतेरन्वारम्भणादि । खण्डतिथौ तु यदा पूर्वाह्णे पर्वसन्धिस्तदा पूर्वेद्युरुपदिष्टकालासम्भवासम्भवेऽपि कर्मोपक्रमदशायामसम्भवेन साङ्गप्रधानव्यापित्वासम्भवात् 'पराह्णे प्रधानं देशे काले कर्तरि निर्दिश्यत' इत्यापस्तम्बेन साङ्गस्यैव विहितकालसम्बन्धविधानादुत्तरेद्युरपि प्रकृतेः पूर्वोक्तत्वात् अपूर्वमन्ते आदित्यापस्तम्बेनैव विकृतेः पूर्वं प्रकृतिविधानात् तदनन्तरमेवातिदेशिके प्रतिपदाद्यभागत्रये ऽङ्गप्रधानपर्याप्ते विकृत्यनुष्ठानमित्यवगन्तव्यम् । यदा त्वपराह्णे रात्रौ वा पर्वसन्धिस्तदा तदहरेव यागः तत्रैवोपदिष्टकालसम्भवात् । एतत् सर्वमभिसन्धायोक्तं ।

> आवर्त्तनात्प्राग्यदि पर्वसन्धिः
> कृत्वा तु तस्मिन् प्रकृतिं विकृत्या ।

तदैव यागः परतो यदि स्यात्
तस्मिन् विकृत्याः प्रकृतेः परेद्युरिति ॥

अत्र केचिदाहुः ।

अमावास्या षण्मुहूर्त्ता चतुर्दश्यां वृद्धिः परेऽहनि ।
त्रिमुहूर्त्तामपि यात्रां यस्यां ह्रासः परेऽहनि ।
त्रिमुहूर्त्तं न कर्त्तव्यं हीनं तत्रापि निर्दिशेत् ॥ इति ।
सन्निधेत् सङ्गवादूर्द्ध्वं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥

इत्यनेनैव स्मृतिवचनेनाग्रयणादिविकृतितिथिषु सद्यस्कालत्वेन विहितासु द्वितीयदिने प्रतिपद्वृद्धौ पूर्वदिने सद्यस्कालत्वं नास्तीति। तथा ।

त्रिमुहूर्त्ता द्वितीया चेत् प्रतिपच्चापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

इत्यस्मिन् वचने प्रदर्शितो यागनिषेधः प्रतिपदि तिथिवृद्धौ नास्तीत्यन्यत्र "अपराह्णे त्रिमुहूर्त्तं ग्राह्यमेवेति वचनद्वयस्याभिप्राय इति । अत्रोच्यते यत्तावदुक्तं "सन्निधेत् सङ्गवादूर्द्ध्वमिति वचनं विकृतिविषयमिति। तदयुक्तं। इदं हि वचनं दर्श-पूर्णमासप्रकरणपठितं वा अनारभ्याधीतं वा उभयथापि विकृतिनिवेशो न सम्भवति । न च विकृतिविशेषप्रकरणपाठः सर्वविकृतिविषयत्वमङ्गीकुर्वता स्वीक्रियते विद्यते वा । न च सर्वविकृतिपाठः सम्भवति, तेन प्रकृतिविषयमेतत् । न च तत्रापि सद्यस्कालत्वापवादः सम्भवति, तदभावे किं प्रतिपदि यागस्तस्मिन् पर्वणि वा, न प्रथमः एवंविध-

विषये द्वितीयदिने प्रतिपद्व्याप्तावपि त्रिमुहूर्त्ताधिकद्वितीयासद्भावेन "त्रिमुहूर्त्ता द्वितीया चेदित्यादिवचनविरोधात्, ॥ वाजसनेयिमताभिप्रायमिदं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनस्य मध्याह्नात् प्राक्पर्वसन्धौ प्रतिपद्वृद्धौ तत्र यागो न कार्य्यः किन्त्वन्वाधानमेवेत्येतदर्थप्रतिपादकताभावात् । अथ प्रतिपदि त्रिमुहूर्त्ता द्वितीया चेत्यत्रैतदर्थेन ह्रासविषयेत्यनेन संकोच इति निरस्तं । "अपराह्णः षण्मुहूर्त्ताः स्मृरित्यपि वचनं नैतदर्थप्रतिपादकं, तस्मादेवमिदं वचनद्वयं व्याख्येयं षण्मुहूर्त्तमपि यद्दा चतुर्दशीदिनसम्बन्धि अन्वाधानेन यागं यदि द्वितीयदिने वर्द्धते ह्रासे तदपि याह्यं । अन्यथा "त्रिमुहूर्त्ता द्वितीया चेति वाक्ये चन्द्रदर्शनयागनिषेधवाक्यविरोधः । एवं "त्रिमुहूर्त्तं न कर्त्तव्यमिति वचनान्तराविरोधेनान्वाधानविषयमेव व्याख्येयं ।

अपरे त्वाद्यं वचनं पर्वव्यतिरिक्तविषयमित्याहुः । किं बहुना बहुवाक्यविरोधाच्च तदीया व्याख्या युज्यत इति ।

एवं पक्षावपि द्रष्टव्यं, अतएव तत्राप्युक्तं "यद्धौदिक्षो भवति नियतः पर्वसन्धिः परस्तात् कृत्वा तस्मिन्नहनि च यागं सद्य एव द्व्यहं वा आरभ्याथ प्रकृतिरथ चेत् पर्वसन्धिः पुरस्तात् कृत्वा तस्मिन् प्रकृतिमथ ॥ स्यात्यागः सद्य एव" इति, पूर्वाह्णमध्याह्नत्तरेष्वविहितकालासम्भवात् सद्य एवेत्युक्तं । अयं च अविहितविशेषकालासु विकृतिषु पशुषु च निर्णयः, यत्र कालविशेषो द्व्यहकालत्वं वा श्रूयते तत्र तथैवानुष्ठानमित्यवगन्तव्यं ।

शाखाविशेषेणान्तु श्रुतौ विशेषो दर्शितः ।

यस्मिन् काले अमावास्या सम्पद्येत तयेष्ट्वाथैतया यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पूर्णमासेन यजेतेति ।

यस्मिन् काल दृष्ट्यावर्त्तनात् पूर्वं, 'तयेत्यमावास्यया, 'एतये-त्याग्रयणेष्ट्या, यदि पौर्णमास्यावर्त्तनात्पूर्वं सद्यस्काला च स्यात्तदा तयाग्रयणेष्ट्वाथ पूर्णमासेन यजेतेत्यर्थः ।

तदुक्तं वार्त्तिककृता ।

पौर्णमास्या तु पूर्वं स्यात् द्वितीयेऽह्नि प्रभिषवे ।
यजेत् पूर्वं पूर्णमासादूर्द्धं दर्शेन चेद्यजेत् ॥ इति ।

अत्रेष्ट्याग्रयणेष्टिः ।

उपवसदिनवर्ज्यानि परिशिष्टे दर्शितानि ।

शाकं मांसं मसूरांश्च चणकान् कोरदूषकान् ।
माषान्मधुपराक्वानि वर्जयेदौपवस्तके ॥

पर्वज्ञानोपायो गोभिलः ।

अधीयीत तद्विद्भ्यो वा पर्वागमयेत् ।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तश्रीकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्व्वर्ग-चिन्तामणौ परिशेषखण्डे कालनिर्णये पर्वसन्धिनिर्णयः ।

---

## अथ नवमोऽध्यायः ।

---

## अथ ग्रहणकालनिर्णयः ।

तत्र मत्स्यपुराणे ।

चन्द्र सूर्यग्रहे नाद्यादद्यात् स्नात्वा तु मुक्तयो ।
अविमुक्तास्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥

अत्र केचिदाहुः ।

चन्द्र-सूर्यग्रहशब्देन तदुपलक्षितमहोरात्रं लक्ष्यते आतातपादिवचनैश्चन्द्र-सूर्यग्रहे अहोरात्रभोजननिषेधादिति । तदयुक्तं चन्द्र-सूर्यग्रहशब्देन स्वसम्बन्धकाललक्षणाया एवोचितत्वात् । वाक्यान्तरस्याप्यर्थोऽनेनैव प्रतिपाद्यत इति च निष्प्रामाणिकं मार्कण्डेयादिवाक्यैश्च ग्रहणकाले यामचतुष्टयादिषु भोजननिषेधात् तदुपलक्षणताया अपि प्रसङ्गात् ।

विष्णुरपि ।

चन्द्रार्कोपरागे नाश्नीयादविमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि ।

ब्रह्मपुराणे ।

नाश्नीयाच्च तत्काले ग्रस्तयोश्चन्द्र-सूर्ययो ।
मुक्तयोस्तु ततः स्नात्वा पश्चाद्भुञ्ज्यात् स्ववेश्मनि ॥

अत्र तु “पश्चात्कुर्यादिति पाठ तच्छ्राद्धमिति विपरिणतमनुषज्यते ।

विष्णुधर्मोत्तरे ।

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।

ग्रहणन्तु भवेत्तत्र न पूर्वं भोजनक्रिया ॥ इति ।

नाचरेत्सग्रहे चैव तथैवास्तमुपागते ।

यावत्स्यादोदयस्तस्य नाश्नीयात्तावदेव तु ।

मुक्तं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि ॥

'तत्र' तद्दिनाहोरात्रे ।

शङ्ख-लिखितौ ।

तद्दिवसनिशि नाश्नीयात् पश्चात्सा यावदेव तु ।

मुक्तं दृष्ट्वा तु भुञ्जीत स्नात्वा चैव यथाविधि ॥

विष्णु-शातातपौ ।

अहोरात्रन्तु नाश्नीयात् चन्द्र-सूर्य्यग्रहे सदा ।

मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥

सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः ।

धौतपापो विशुद्धात्मा मोदते तत्र देववत् ॥

नाद्यात्सूर्य्यग्रहात्पूर्वं अह्नि सायं शशिग्रहात् ।

ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयात्तु मुक्तयोः ॥

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।

स्नात्वा दृष्ट्वा परेऽह्न्याद्यग्रस्तास्तमितयोस्तयोः ॥

ब्रह्मवैवर्त्ते ।

अर्द्धरात्रादधश्चन्द्र राहुर्ग्रसति नारद ।

तदा मुक्तौ प्रकर्त्तव्य वह्निरेव च भोजनम् ॥

पद्मपुराणे ।

अर्द्धरात्रादधश्चोर्द्धं यदा चन्द्रग्रहो भवेत् ।

पूर्वं पूर्वंच भोक्तव्यमुत्तरे चोत्तरेऽपि च ॥

'पूर्वंच' पूर्वाह्णे, 'उत्तरे' उत्तराह्णेऽपि।

स्कन्दपुराणे।

यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत्।
भोक्तव्यं तात पूर्वाह्णे नापराह्णे कथञ्चन ॥
पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्।
तदा दिवा न कर्त्तव्यं भोजनं ग्रिपिवाहन ॥

मार्कण्डेयः।

ग्रहणन्तु भवेदिन्दोः प्रथमादधियामतः।
भुञ्जीतावर्त्तनात् पूर्वं प्रथमे प्रथमादधः ॥

'आवर्त्तनं' दिनमध्यं। अयमर्थः यस्मिन् यामे ग्रहणं ततः पूर्वं यामचयं त्यक्त्वा भुञ्जीतेत्युक्तं भवति।

स्मृत्यन्तरे।

सन्ध्याकाले यदा राहुर्ग्रसते शशि-भास्करौ।
तदा दिवा न भोक्तव्यं बालक-स्त्री-मिश्रून् विना ॥

ब्रह्मवैवर्त्ते।

चन्द्र-सूर्यग्रहे नाद्यादर्वाक् यामचतुष्टयं।
केचित्तियमित्याऽऽहुर्मनयो भृगुनन्दन ॥

वृद्धगौतमः।

सूर्य्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयं।
चन्द्रग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना ॥

मार्कण्डेयः।

सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भोजनक्रिया ॥

एतद्बालादिविषयम् असमर्थविषयं वा समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनस्मृतौ षट्त्रिंशन्मते च ।

चन्द्र-सूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति ॥

स्मृत्यन्तरे ।

सायाह्ने सङ्गवेऽश्नीयाच्छारदे सङ्गवादध ।
मध्याह्ने प्रातरोऽश्नीयान्नोपवासो रविग्रहे ॥

'शारदे' अपराह्ण इत्यर्थः, यदपराह्णः शरदिति श्रुतेः, 'रविग्रह' इति अग्निग्रहणस्याप्युपलक्षणम्, एतच्च पुत्रवद्गृहस्थविषयम् ।

तथा च जैमिनिः ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
पारणं चोपवासञ्च न कुर्यात् पुत्रवान् गृही ॥ इति ।

स्मृत्यन्तरे ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्य्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

ननु यदा सन्ध्याकाले सूर्य्यग्रहस्तदा दिवा तावदुक्तवाक्याच्च भोजनं नापि रात्रौ, 'अमुक्तयोरस्तङ्गतयोर्दृष्ट्वा स्नात्वा परेऽहनि' इति वचनात्। नाप्युपवासः पुत्रवतो गृहस्थस्य तन्निषेधात् अतः सन्ध्याकाले ग्रहणे सन्ताससमये पुत्रवता गृहिणा किं कार्य्यं

उच्यते। तदा मार्कण्डेयाद्युक्त "मायाह्ने ग्रहणं चेत् स्यादिति पक्ष-श्वाश्रयणीय ।

वृद्ध ।

उपरागदिने यत्स्नानं सन्ध्यायामुदिते रवौ ।
चन्द्र-सूर्योपरागे च प्राजापत्येन तत्समम् ॥

विष्णुः ।

अयने विषुवे चैव चन्द्र-सूर्यग्रहे तथा ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥

अत्र केचिदहोरात्रोपोषितः पूर्वस्मिन्दिने कृतोपवास इति व्याचक्षते, तदयुक्तं चन्द्र-सूर्यग्रहणसम्बद्धाहोरात्रपरित्यागेनाहोरात्रा-न्तरग्रहणे प्रमाणाभावात् ।

ब्रह्मपुराणे ।

नित्यन्दयोरयनयोस्तथा विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नात्वा श्राद्धं दानं तथा जपं ।
यः करोति प्रयतात्मा तस्य तत्साक्षयं च तत् ॥

यम ।

अयने विषुवे चैव चन्द्र-सूर्यग्रहे तथा ।
कृतोपवासो यः स्नायात्सर्वपापैः प्रमुच्यते ॥

लिङ्गपुराणे ।

एकरात्रमुपोष्यैव स्नात्वा दद्यात्र शक्तितः ।
कसुकादिव कोशस्य निरस्ति पापकोशतः ॥

त्रिरात्रं समुपोष्यैव ग्रहणे चन्द्र-सूर्य्ययोः ।
स्नात्वा दद्याच्च विधिवन्मोदते ब्रह्मणा सह ॥

मार्कण्डेयपुराणे ।

चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महापदे ।
स्नानं कथितं पुण्यं तथार्के तु विशेषतः ॥

'दृष्टे' दर्शनयोग्य इत्यर्थः ।

व्यासः ।

सूर्य्यवारे रविग्राहः सोमे सोमग्रहस्तथा ।
चूड़ामणिरिति ख्यातस्तत्रानन्तफलं लभेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्र सूर्य्ययोः ।
तत्पुण्यं कोटिगुणितं ग्राहे चूड़ामणौ स्मृतम् ॥

कात्यायनः ।

स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

'स्वर्धुनी' गङ्गा ।

व्यासः ।

सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥
इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥
गङ्गाकोटिसहस्रस्य यत्फलं लभते नरः ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे ॥

दिवाकरेण शुद्धस्य दशपद्ममुदाहृतम् ॥
चन्द्र-सूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम् ॥

देवीपुराणे ।

कार्त्तिके ग्रहणं श्रेष्ठ गङ्गा-यमुनसङ्गमे ।

गङ्गा-यमुनमित्यत्र "सर्व्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः ।

मार्गे तु ग्रहणं शोभं देविकायां महामुने ।
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ॥
फाल्गुने वरुणा पुण्या चैत्रे चैव सरस्वती ।
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ॥
ज्यैष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ।
श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी ॥
आश्विने सरयूः श्रेष्ठा भूय पुण्या तु नर्मदा ।
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥
सूर्य्ये च राहुणा ग्रस्ते समोभूते महामुने ।
नर्मदातोयसंस्पर्शात्तृप्तास्तस्या भवन्ति ते ॥
ये सूर्य्ये सैंहिकेयेन ग्रस्ते रेवाजलं जनाः ।
स्पृशन्ति चावगाहन्ति न ता प्रकृतिमानवी ॥
स्नात्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ।
स्पृष्ट्वा गोमेधतुल्यन्तु पीत्वा सौत्रामणिं लभेत् ॥
स्नात्वा वाजिमखं पुण्य प्राप्नुयादविचारतः ।
रवि-चन्द्रोपरागे तु अयने चोत्तरे तथा ।

एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥
शिवादित्यफलं यस्य मण्डले समुदाहृतं ।
सपदे मण्डले याते तदपि प्राप्नुयान्नरः ॥
ऊषरारण्यक्षेत्रेषु पुण्यं यत्समुदाहृतं ।
तद्व कालमाहात्म्यादुपरागेऽधिकं भवेत् ॥

मत्स्यपुराणे ।

गङ्गा कनखले पुण्या प्रयागं पुष्करं गया ।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे ॥

ब्रह्मवैवर्त्ते ।

मकरे वर्त्तमाने तु ग्रहणं चन्द्र-सूर्य्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥

शातातपः ।

सैंहिकेयो यदा सूर्य्यं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम् ॥

आह व्याघ्रपादः ।

राहुग्रस्ते यदा सूर्य्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

विष्णुः ।

राहुदर्शनदत्तं हि श्राद्धमाचन्द्र-तारकम् ।
पुण्यं च सर्वकामीय पितॄणामुपतिष्ठते ॥
सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

शातातपः ।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

देवलः ।

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

श्राद्धं प्रकृत्य कूर्म्मपुराणे ।

नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्र-सूर्य्ययोः ।
बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा ।
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ॥

मार्कण्डेयपुराणे ।

विशिष्टे ब्राह्मणे प्राप्ते सूर्य्येन्दुग्रहणेऽयने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया ॥

अत्र सूर्य्यग्रहणादिकालेषु तथा इच्छया श्राद्धं प्रति सर्वश्राद्धं कुर्य्यादथवा पूर्वोक्तेष्वेव कालेषु इच्छया स्वर्गादिफलकामनया श्राद्धं कुर्य्यादितीच्छयेत्यर्थः, न पुनर्यदीच्छति कर्त्तुं तर्हि कुर्य्यात् न चेन्न कुर्य्यादिति ।

शातातपः ।

आपद्यनग्नौ तीर्थे च चन्द्र-सूर्य्यग्रहे तथा ।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात् सदैव हि ॥ इति ।

क्वचित्पूर्वार्द्धमेवं पठ्यते ।

आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा । इति ।

भविष्योत्तरे ।

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं संग्रहे च तथा स्त्री-शूद्रयोरपि ॥

जाबालिः ।

सङ्क्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्र-सूर्योपरागे तु यावद्दर्शनगोचरः ॥

तत्र केचिदाहुः ।

चन्द्र-सूर्योपरागे तु निमित्तत्वप्रतिपादनात् स्नानस्यैव च निमित्तत्वात् स्नानमात्रे प्राप्ते "यावद्दर्शनगोचरः" इति "राहुदर्शने" इत्यादिवचनाच्चाक्षुषज्ञानविषयस्यैव निमित्तत्वाच्चाक्षुष एव ज्ञाने दर्शनपदस्य मुख्यत्वात्तेन न मेघादिच्छन्ने स्नानादि कर्त्तव्यमिति, तदयुक्तं चक्षुर्जनितज्ञानविषयविवक्षाया ।

नेक्षेतोद्यन्तमादित्यं नास्तयन्तु[1] कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुना गृहस्थस्य ग्रस्तादित्यदर्शननिषेधात् स्नानाद्यभावप्रसङ्गात् तद्बाधे तु स एव दोषः । न च शास्त्रीयज्ञानविवक्षायां देशान्तरग्रहणेऽपि स्नानादिप्रसङ्ग इति वाच्यं ।

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति षट्त्रिंशन्मतनिगमवचनेन तत्र स्नानादिनिषेधात् ग्रस्ते चन्द्र सूर्ये वानवेक्षमाणैरेव शिष्टैः स्नानाद्याचरणाच्च ।

---

(१) नास्तं यान्तमिति ख० ।

किञ्च यदा चक्षुर्जनितज्ञानविषयता न तदा स्नानादि सम्भवति, यदा च स्नानादि न तदा चेत्यनुपपत्त्यर्थं वाच्यं स्यात्, योग्यता-विवक्षाया अभ्रादिच्छन्नेऽपि स्नानादिकं कर्त्तव्यं स्वरूपयोग्यतायास्तत्रापि भावात्। व्यवहितस्य तु अयोग्यतया न स्नानादिनियमो यदि तर्हि च जह्वे न निरीक्षते तत्रापि स्नानादि न स्यात्। अभ्रादिच्छन्नेऽपि शिष्टैः स्नानाद्याचरणाच्च। तस्माद्यावति काले चन्द्र-सूर्योपरागः शास्त्रप्रतीतः तावान् पुण्यकाल इत्यर्थः। यदारभ्य चाक्षुषज्ञानविषयतयोग्यता विवक्षितेति केचित्।

अपरे तु ग्रस्तास्तमयाभिप्रायेण व्याचक्षते यावद्दर्शनगोचरः तावत्पुण्यकालः यदा लक्षणतो न दृश्यते तच्च तदा पुण्यकाल इति। तथाच ग्रस्तास्तमये च शिष्टाः पूर्वमेव स्नानाद्यनुतिष्ठन्ति नोर्द्धं।

शिवरहस्ये।

सूर्येन्दोर्ग्रहणं यावत्तावत्कुर्याज्जपादिकम्।

न स्वप्यान्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः॥

शङ्ख-लिखितसूत्रौ तु चन्द्र सूर्यग्रहे यावद्विति प्रथम पादः।

वृद्धवशिष्ठ।

त्रिदशाः सर्वसमये तृप्यन्ति पितरस्तथा।

मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥

अत्र केचिदाहुः।

स्पर्शसमये देवपितृत्रमभिधानात्तत्साधनमविशेषात् सर्वं देव-पितृदैवत्यं कर्म कार्यमिति तद्युक्तं।

स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम्।

इति ब्रह्मवैवर्त्तवचनेन होम देवार्च्चनयोर्मध्ये विधानात् ।

ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥

इति वचनाच्च ।

तस्माद्धोम-देवपूजाव्यतिरिक्तविषयमेतत् ।

पद्मपुराणे ।

उपमर्द्दे लक्षगुणं ग्रहणे चन्द्र-सूर्य्ययोः ।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम् ॥

शातातपः ।

अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्र-सूर्य्ययोः ॥

विमोक्षे वर्त्तमाने न तु विमुक्तयोरित्यर्थः, "उपरागे तु तत्कालमिति वशिष्ठवचनात् ।

यद्विज्ञायते ।

सर्व्वेषामेव वर्णानां सूतकं राहुसूतके ।
सचेलं तु भवेत् स्नानं सूतकान्नञ्च वर्ज्जयेत् ॥

'सूतकान्न' राहुसूतकान्नं, न मतिना भते न मणिषा सभे न राज्ञा राजकर्म्मणि कुर्व्वति सूतमन्नं विवर्ज्जयेत् ।

लिङ्गपुराणे ।

चन्द्र-सूर्य्यग्रहे स्नायात्सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

दान-श्राद्धादिविषयमेतत् न तु स्नानमात्रविषयम् ।

ग्रहणे शावमाशौचं विमुक्ते सूतकं स्मृतम् ।
तयोः सम्पातमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इति ब्रह्माण्डपुराणवचनविरोधात् स्नान-होम-देवपूजा-दानक्रियानुष्ठाने हि क्रम उपपद्यते। स्नानमात्रानुष्ठाने स्नानस्य पूर्ववाक्येनैव सिद्धेर्द्वितीयवाक्यवैयर्थ्यप्रसङ्गाच्च। भवत्पक्षे द्वितीयवाक्येनैव स्नानसिद्धेः पूर्ववाक्यवैयर्थ्यप्रसङ्ग इति चेत्। न। अस्नातस्यानिष्टविशेषसम्बन्धप्रतिपादनार्थत्वात् यावच्छावकत्वादनुपपत्तिप्रसङ्गाच्च स्नानस्योदाहृतवाक्येरपरागादावेव विधानाच्च राहुसूतके मृत-सूतकयोरभावाच्च ।

तथाच सत्यव्रते ।

सूतके मृतके चैव यदि स्याद्राहुदर्शनम् ।
तावत्तत्सूतकं नास्ति यावद्राहुर्न मुञ्चति ॥

स्कन्दपुराणे ।

सूतके मृतके चैव सूतकं राहुदर्शने ।
तावदेव भवेत्तच्च यावन्मुक्तिर्न दृश्यते ॥

षट्त्रिंशन्मते ।

स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके ।

राहुसूतकं विना अन्यस्मिन् सूतक इत्यर्थः। अपरे त्वेवं व्याचक्षते सूतके यः स्मार्त्तकर्मपरित्यागः स राहुसूतकं विनेति। कश्चित्तु "राहोरन्यत्र दर्शनादिति पाठ", बहुवाक्यसंकोचप्रसङ्गात्, तस्माच्च स्नानमात्रविषयमेतत्।

मत्स्यपुराणे ।

चन्द्र-सूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्यात् दत्तमक्षयकारकम् ।

क्वचित्तु दत्तमित्यत्र श्राद्धमिति पठ्यते । अत्र गर्गः ।

पुष्यमाजपदञ्चैव याम्यं भाग्यञ्च पैतृकं ।
ऐन्द्राग्नमग्निदैवत्यं सर्वेतान्यनला गणाः ॥

'आजपदं' पूर्वा भाद्रपदा । 'याम्यं' भरणी । 'भाग्यं' पूर्वफल्गुनी । पैतृकं मघा । 'ऐन्द्राग्नं' विशाखा । 'अग्निदैवत्यं' कृत्तिका ।

आनले मण्डले दृष्टं ग्रहणं रवि-सोमयोः ।
राज्ञां भयङ्करं विद्यात्प्रजानां वह्निदोषकृत् ॥
अहिर्बुध्न्यं मघा पौष्णं मूलमाप्यञ्च शाङ्करं ।
वारुणं सर्पदैवत्यं वारुणं मण्डलं स्मृतं ॥

'अहिर्बुध्न्यं' उत्तरा भाद्रपदा । 'पौष्णं' रेवती । 'आप्यं' पूर्वाषाढ़ा । 'शाङ्करम्' आर्द्रा । 'वारुणं' शततारकाः । 'सर्पदैवत्यमश्लेषा ।

एतस्मिन्नुपरागे स्याद्वारुणे सोम-सूर्ययोः ।
दुर्भिक्षामयनाशस्तु प्रजानामिति निश्चयः ॥
उत्तराणमार्यमादीनां चतुर्णाञ्च पुनर्वसुः ।
सौम्यञ्चैवाश्विदैवत्यं वायव्यं मण्डलं भवेत् ॥

'आर्यमादीनि' उत्तराफाल्गुन्यादीनि । 'सौम्यं' मृगशीर्षः । 'अश्विदैवत्यं' अश्विनी ।

समरं सभयञ्चैव दुर्भिक्षं कुरुते चिरात् ।
व्याधिजन्ताधिकोपश्च मण्डलेऽस्मिन्नुपप्लुते ॥

ज्येष्ठा ब्राह्मं तथा मैत्रं माहेन्द्रं वासवं तथा ।
वैष्णवं वैश्वदेवञ्च पुरुहूतस्य मण्डलम् ॥

'ब्राह्मं' रोहिणी । 'मैत्रम्' अनुराधा । 'माहेन्द्रम्' अभिजित् । 'वासवम्' धनिष्ठा । 'वैष्णवम्' श्रवणं । 'वैश्वदेवम्' उत्तराषाढ़ा ।

मण्डलेऽस्मिन् समुत्पन्ने ग्रहणे जगतां शुभम् ।
आनन्दं सर्वभूतानां विदधाति विशेषतः ॥

काश्यपस्तेतान्येव मण्डलान्युक्त्वा ।

आग्नेयी कारयेच्छान्तिं शान्तिं कुर्याच्च वारुणीं ।
वायव्या शान्तिरित्येव माहेन्द्री तत्र कारयेत् ॥

इति तत्तद्देवतायाग-होम-जपादिकमुक्तवान्, तच्चात्राभिषेकादि-साधं तथा कार्यं । एवं जगतोग्रहणदोषस्य प्रशमनञ्च । प्रतिपुरुषन्तु यथा ।

एवं तु भास्करस्थाने राहुश्चन्द्रमुपक्रमेत् ।
कर्मक्षयपरिक्लेशान् प्राप्नुवन्ति च ते जनाः ॥
पितृपक्षविनाशाय सूर्यस्थाने भवेद्ग्रहः ।
मातृपक्षविनाशाय चन्द्रस्थाने भवेद्ग्रहः ॥
होरायां दृश्यते यत्र नक्षत्रे वा निशाकरः ।
प्राणसन्देहमाप्नोति स वा मरणमृच्छति ॥
अभिभवति हि सैंहिकेयश्चन्द्रार्कौ यस्य यस्य जन्मनक्षत्रे ।
तस्यान्नकादिभयं विषादुच मनस्तापं ॥
ग्रस्येते जन्मनक्षत्रे यस्येते शशि भास्करौ ।
तस्यातीना भवेत्पीड़ा नराः शान्तिविवर्जिताः ॥

षड्भमनगो येषां जन्मत्रितये च वाहिसंस्थः ।
बहुरोग-मृत्युजननो दानाहुतयो जपश्च कर्त्तव्यः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तश्रीकरणाधीश्वर-
सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्ग-
चिन्तामणौ परिशेषखण्डे कालनिर्णये
ग्रहणकालनिर्णयः ।

---

## अथ दशमोऽध्यायः।

---

## अथोपाकर्मकालनिर्णयः।

तत्र याज्ञवल्क्यः।

> अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु।
> हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु॥

'अध्यायानां' वेदानां, 'श्रावण्यां श्रावणस्य पौर्णमास्यां श्रवणेन युक्तेऽहनि वा। पञ्चम्यां हस्तेन युक्तायां उपाकर्म कार्यं। अपरे तु हस्तेन युक्तेऽहनि वा पञ्चम्यां वेति व्याचक्षते, 'ओषधिभावे प्रादुर्भावे, 'श्रावणस्येति च सर्वं सम्बध्यते।

आश्वलायनः।

अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन वा श्रावणस्य पञ्चम्यां हस्तेन वेति।

निगमः।

> श्रावण्यां श्रावणीकर्म यथाविधि समाचरेत्।
> उपाकर्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे।
> हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन वा॥

कात्यायनः।

अथातोपाकर्म[१] श्रवणेन श्रावण्यां पौर्णमास्यां।

बौधायनः।

---

(१) अथातोपाकर्म इत्येव पाठो भवितुं युक्तः।

श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्य छन्दांस्यधीयीत एतेषां पक्षाणां स्वस्वशाखानुसारेण व्यवस्था। यदा त्वत्र श्रावणे मासि ओषधयो न प्रादुर्भवन्ति ग्रहसङ्क्रान्तिदोषो वा कथञ्चिद्वा श्रावणमासातिक्रमः तदा प्रौष्ठपद्यां कार्य्यम्।

अत एव शौनकः तद्वार्षिकमित्येतदाचक्षत इति।

वर्षाकाले भवं 'वार्षिकं'।

वशिष्ठोऽपि।

अथातः स्वाध्यायोपाकर्म श्रावण्यां प्रौष्ठपद्यां वेति।

'प्रौष्ठपदी' भाद्रपदस्य पौर्णमासी।

गोभिलः।

प्रौष्ठपदी हस्तेनोपाकरणमिति।

प्रौष्ठपदी मास्येत्यर्थः।

मनुरपि।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्॥

'अपि'शब्देन भाद्रपदश्रवण-हस्त-पञ्चमीनामुपादानम्। तथाच गृह्यपरिशिष्टकारिका।

अत्रौषधयश्चाविर्भावे तु न भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते॥ इति।

उपाकर्मप्रभृति सार्द्धांश्चतुरो मासान् शुक्लपक्षेषु निरन्तरं स्वाध्यायमधीयीतेत्यर्थः।

वशिष्ठः।

अर्द्धपञ्चमान्मासानधीत्योत्सृजन्ति, पञ्चार्द्धमासान् षष्ठार्द्धमासान् वा।

गौतमः ।

श्रावणादिवार्षिकं प्रौष्ठपदीं वोपाकृत्याधीयीत छन्दांस्यर्द्धपञ्चमान्मासान् पञ्च दक्षिणायनान् वा ।

हारीतः ।

अर्द्धपञ्चमान्मासानधीत्योत्सृजन्ति पञ्चार्द्धपक्षान् वा।

कात्यायनः ।

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।

एतच्च चरणाध्ययनं गृहस्थस्यापि । यदाह शौनकः ।

समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जातीया येऽधीत्यैके।

'इतरे' ब्रह्मचारिणः । अतएव गृहस्थस्यापि चरणाध्ययनेऽधिकारं ज्ञापयितुं तत्प्रकरणेऽध्ययनविधिः ।

कालवृद्धावुपाकर्मोत्कर्षः कात्यायनेन दर्शितः ।

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ।

अभिषेकादिवृद्धौ न तूत्कर्षो युगादिषु ॥

यत्तूत्कर्षप्रतिपादकं च्यवनवचनं ।

इष्टयस्तु नोत्कर्षमर्हन्ति युगादिषु ।

उपाकर्म महापर्व्व ह्येतदिष्टं दृष्टादितः॥ इति।

तच्छन्दोगविषयं। तेषां हि कालवृद्धावपि सिंहेऽर्क एवोपाकर्म।

यदाह गार्ग्यः ।

सिंहे रवौ [illegible] पुष्यर्क्षे मध्याह्ने विचरेद्वहिः ।

छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्वच्छन्दसां ।

शुक्लपक्षे तु हस्तेन उपाकर्मापराह्निकम् ॥

एतच्च ग्रहणादुष्टश्रावणादौ कार्य्यम्।

तथाच स्मृतिः।

उपाकर्म्म प्रकुर्व्वन्ति क्रमात्सामर्ग्यजुर्विदः।
ग्रहसंक्रान्त्ययुक्तेषु हस्त-श्रवण-पर्व्वसु ॥

तथा।

संक्रान्तौ ग्रहणे चैव सूतके मृतके तथा।
गणकानां न कुर्वीत नारदस्य वचो यथा ॥
अथ चेद्दोषसंयुक्ते पर्व्वणि स्यादुपक्रिया।
दुःख-शोकामयप्राप्ता राष्ट्रे तस्मिन् द्विजातयः ॥

तथा।

यदि स्याच्छ्रावणं पर्व्व ग्रहसंक्रान्तिदूषितम्।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥

स्मृतिमहार्णवे।

संक्रान्तिर्ग्रहणं वापि यदि पर्व्वणि जायते।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥

अत्र केचिदाहुः। हस्तयुक्तायां पञ्चम्यां केवलायां वेति विकल्पः, न तत्र संक्रान्तियुक्तपर्व्वणो विकल्पः तत्र दोषश्रवणात्। न च हस्तयुक्तायामन्यस्यां तिथौ पञ्चम्यां वेति विकल्पः। हस्तयुक्तायामित्यस्य विशेष्याकाङ्क्षायां उपात्तपञ्चम्यैवान्वयात्। "यदि स्याच्छ्रावणं पर्व्वेत्यादिवाक्यस्य पर्व्वणो ग्रहसंक्रान्तिदोषे पञ्चमीमात्रे उपाकर्म-विधायकत्वात्" इति पक्षे सद्दोषपर्व्वग्रहणम्। नन्वेवं पञ्चमीपदस्यावृत्तिः

प्रसज्यते सा च सद्दोषादुष्टा। नैवं। हस्तयुक्तायामित्यस्य विशिष्याका-ङ्क्षायामवश्यम्भाविनि पदद्वयेऽप्यध्याहारे बुद्धिस्थस्यैवाध्याहार इत्य-भिधानात् तथापि हस्तयुक्तत्वाभावे नैवस्वेति। तदयुक्तं। पञ्चम्यां वेति पञ्चम्याश्रिष्यन्तरविकल्पप्रतीतेस्तद्विशेषापेक्षायां हस्तयुक्ताया-मित्यस्य तद्विषयतायाः एव युक्तत्वात्। एवं च पदद्वयेऽपि बुद्धि-स्थस्यैवाध्याहारे तस्मिन् पक्षे पञ्चमीपर्वं यथाश्रुतन्तु भवत्पक्षे तु हस्तयुक्तत्वाभावविशिष्टपञ्चमीपरं इति विशेषः। ननु हस्तयुक्त-पञ्चम्यां षोडशधा विकल्पः कस्मात् भवति। उच्यते। स्ववाक्योपात्त-लाभे वाक्यान्तरीयानाश्रयणात्, एवञ्च विकल्पे स्थिते षड्दोषोऽपि बलादापतितः स्वीक्रियते। तस्मात्पञ्चम्या हस्तयुक्तेत्यन्तरेण विकल्पः। तथापि हस्तयुक्ताया अभावे नैवस्वेति, एतच वाजस-नेयिविषयं। तथाच स्मृतिमहार्णवे वचनान्तरं।

> संक्रान्तिग्रहणं वापि पौर्णमास्यां यदा भवेत्।
> उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः॥

अत्र केचित् पूर्ववाक्यसाधारण्यादाजसनेयिपदस्योपलक्षणतां मन्यमानाः तैत्तिरीयाणामपि पञ्चम्यामुपाकर्मेच्छन्ति। तदयुक्तं। लक्षणा-प्रसङ्गात् लक्षणतस्योपहारस्य युक्तत्वात्। यदि च पूर्ववाक्यस्य साधार-ण्याद्य लक्षणा तर्हि "पुरोडाशश्चतुर्धा करोतीत्यस्य साधारण्यादाग्नेयं चतुर्धा करोतीत्यत्र लक्षणाप्रसङ्ग। अत्र च पञ्चमी तन्मासमतैव स्मृत्युते मान्यमासभता अप्रकृतत्वात्, तस्मादाजसनेयिविषयमेतत्। तिष्ठतु वाज-सनेयिवाक्यं तथापि न पूर्वस्मादावाक्यात् षष्ठस्मान्तिदोषे तैत्तिरीया-णामुपाकर्म प्राप्नोति। तथाहि ऋचोपाकर्मणि स्मृतिषु नानाकाला-

विहिताः तेषां च तत्तद्गृह्यानुसारेण व्यवस्थितविकल्पाश्रयणं युज्यते। न च तैत्तिरीयगृह्ये पञ्चम्यामुपाकर्म श्रूयते। येषां तु गृह्ये पञ्चम्यामपि श्रूयते तेषामव्यवस्थितविकल्पप्राप्तौ यदा श्रावण्यामप-ञ्चमीसम्भवे न कालान्तरमिति व्यवस्थाप्राप्तावितं वचनमुपतिष्ठते, एवं चापेक्षितं समर्थयिष्यते न तु तैत्तिरीयाणां उपाकर्मणि प्रमाणका-लविधौ, तस्माद्रविसंक्रान्तिदुष्टायां श्रावणस्य पौर्णमास्यां तैत्तिरीयकैः प्रौष्ठपद्यां उपाकर्म कार्यमिति सिद्धं।

अथ केचिदाहुः।

पर्वणि ग्रहणेऽपि चतुर्द्दशीस्थेऽपि श्रवणेनोपाकर्म कार्यं।

त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवं।
मासकेषु समस्तेषु ग्रहणे चन्द्र-सूर्ययोः॥

इति वचनात्। प्रकारान्तरेणापि वेधः स्मृत्यन्तरे दर्शितः।

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः।
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम्॥

दिनद्वयमत्र पूर्वोत्तर "त्र्यह खण्डग्रहे तयोरिति वचनात् तदयुक्तं।

नित्य-नैमित्तिके जप्ये होमे यज्ञक्रियासु च।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते॥

इति वचनात्। हस्त-श्रवण-पर्वाण्योदयिकानि ग्राह्याणि। तथाच परिशिष्टे।

धनिष्ठा-प्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वित।

बुधे मन्दाकिनी नाम मन्दा सुरगुरोर्हिते ॥
मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे ।
एताः संक्रान्तयः सप्त फलमासां तथोच्यते ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रेध्वाङ्क्षी विज्ञानीयादुग्रेघोरा प्रकीर्तिता ॥
चरेमहोदरी ज्ञेया क्रूरेष्वेषु राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षेषु संक्रमे ॥

'ध्रुवाणि' स्थिराणि चोत्तरात्रयाणि रोहिणी च। 'मृदूनि' अनुराधा-चित्रा-रेवती-मृगशीर्षाणि । 'लघूनि' अभिजित्हस्ताश्विनी-पुष्याणि । 'उग्राणि' पूर्वात्रयं भरणी मघा च। 'चराणि' पुनर्वसु-श्रवण-धनिष्ठा-स्वाती-शतभिषाः।'क्रूराणि' तीक्ष्णाणि तानि च मूल-ज्येष्ठार्द्राश्लेषा ॥ 'मिश्रं' कृत्तिका विशाखा च

त्रिषट्त्रिपञ्चकाष्टमनवदाश्च एव च ।
क्रमेण घटिका ज्ञेयाःपुण्यं पारमार्थिकम् ॥

यथासंख्येन सर्वासु संक्रान्तिषु सप्त काला: द्रष्टव्याः, पारमार्थिकं च वसोर्धारादिकर्म सूक्ष्मतमसंक्रान्तिकाले धर्मानुष्ठाने यत्फलं लभ्यते तदेव फलमेतास्वपि घटिकासु लभ्यत इत्यर्थः । तस्मिन् सुख्यं तत्पुण्यं । तथा ।

मन्दा विप्रजनैः शस्ता मन्दाकिन्यस्तु राजनि ।
ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा ॥
महोदरी तु चोराणां शौण्डिकानां तथावधा।
चण्डाल-पुक्कसानाञ्च ये चान्ये क्रूरकर्मिणः ।

सर्वेषां कारुकाणाञ्च मिश्रिता वृत्तिवर्द्धिनी ॥

'मन्दाकिन्यन्तु राजनीति क्षत्रियस्य प्रशस्ता भवन्तीत्यर्थः । 'घोराष्टिकायां जयावहेत्यत्र राक्षसीति द्रष्टव्यं । एवञ्च या यस्य जयावहा स तस्यां भूतायां अभ्युदयसाधनानि कर्म्माणि कुर्य्यात् । यस्य या जयावहा तस्यां दोषनिवृत्त्यर्थं शान्तिकानि कुर्य्यात् । अन्यमपि शान्तिकानुष्ठानार्थं विशेषमाह ।

नृपाः पीड्यन्ति पूर्वाह्णे मध्याह्ने तु विप्रोत्तमाः ।
अपराह्णे तथा वैश्याः शूद्राश्चास्तमये रवेः ॥
पिशाचास्तमये चापि अर्द्धरात्रे तु राक्षसाः ।
अर्द्धरात्रे व्यतीपाते पौगण्डे नट नर्त्तकाः ॥
उषःकाले तु संक्रान्तौ घ्नन्ति गोस्वामिनो जनान् ।
घ्नन्ति प्रव्रजितान् सर्व्वान् सन्ध्याकाले विशेषतः ॥
संक्रान्तिर्जायते यत्र भास्करे भूसुते शनौ ।
विद्यात्तत्र भयं तत्र दुर्भिक्षादृष्टि चोरजम् ॥
आदुत्यितस्य किन्तुघ्ने शकुनौ कौलवे रवेः ।
सङ्क्रान्तिस्तैतिले नागे प्रसूतस्य चतुष्पदे ॥
विनष्टस्य वरे विद्या बवे वणिजि वालवे ।
विष्ट्यादौ क्रमादिष्टं निर्दिष्टं मध्यमं फलम् ॥
प्रद्योतनस्य सङ्क्रान्तिर्यादृशेनेन्दुना भवेत् ।
तत्रापि तादृशं प्राहुः शुभाशुभफलं नृणाम् ॥

नागरखण्डे ।

रवेः सङ्क्रमणं राशौ सङ्क्रान्तिरिति कथ्यते ।

स्नान-दान-तपः-श्राद्ध-होमादिषु महाफला ॥

रवेः राशौ संक्रमणं या सङ्क्रान्तिः सा यद्यन्तरसंक्रान्तिभ्यो महाफलेति कथ्यत इत्यर्थः ।

शातातपः ।

रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः ।
सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते ॥

क्वचित्तूत्तरार्द्धमन्यथा पठ्यते ।

सप्तजन्मान्तरे रोगी दुःखभागी सदा भवेत् ॥
संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्र-सूर्ययोः ॥

स्कान्दे नागरखण्डे ।

य एते तत्र प्रोक्ताः कालाः संक्रान्तिपूर्वकाः ।
नैतेषु विद्यते विप्रि यतस्तावचयवर्जिताः ॥
अश्रद्धयापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः ।
अकालेऽपि च तत्सर्वं सम्यगक्षयतां व्रजेत् ॥

देवीपुराणे ।

विषुवेषु च यज्जातं दत्तं भवति चाक्षयम् ।
एवं विष्णुपदे चैव षडशीतिमुखेषु च ॥

भारद्वाजः ।

षडशीत्यान्तु यद्दत्तं यद्दानं विषुवद्द्वये ।

दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते ॥

वशिष्ठः ।

अयनेषु च यद्दत्तं षडशीतिमुखेषु च ।
चन्द्र-सूर्योपरागे च दत्तं भवति चाक्षयम् ॥
अयने कोटिगुणञ्च लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्रन्तु षडशीत्यां स्मृतं बुधैः ॥
शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकं ॥

वृद्धवशिष्ठः ।

अयने विषुवे चैव त्रिरात्रोपोषितः पुमान् ।
स्नात्वा योऽर्च्चयते भानुं सर्वकामफलं लभेत् ॥

आपस्तम्ब ।

अयने विषुवे चैव ग्रहणे चन्द्र-सूर्ययोः ।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

एतच्च पुत्रवद्गृहस्थव्यतिरिक्तविषयं ।

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्र-सूर्ययोः ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥

इति पुत्रिणो गृहस्थस्य तत्रोपवासनिषेधात् ।

ब्रह्मपुराणे ।

तुला प्रत्यासमस्तूर्द्ध्व विषुवे दिवसे सति ।
ब्राह्मणेभ्यः प्रदेयानि वस्त्राण्यभिनवानि वा ॥

तथा ।

मेषसंक्रमिणे सूर्य्ये शैशिरं घृत-कम्बलम् ।
अपाद्य देयाद्देवेभ्यः पूजा कार्या प्रयत्नतः ॥

कालिकापुराणे ।

कनकं कुलिशं नीलं पद्मरागश्च मौक्तिकम् ।
एतानि पञ्चरत्नानि न्यसेद्देवस्य मूर्द्धनि ॥
रत्नानां चाप्यभावे तु कर्षं कर्षार्द्धमेव च ।
सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे ॥
विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा ।
प्रणाल्य मर्द्दयित्वा तु प्रदद्यात् घृतकम्बलम् ॥
दत्त्वा चोपस्करं भूयो ब्राह्मणान् यतिभिः सह ।
सम्भोज्य दक्षयित्वा तु कल्पयेदनिवारितम् ॥

'कुलिशं' हीरकं। 'दक्षयित्वा' दक्षिणया सम्पूज्य। 'कल्पयेदन्नो-
दनमिति शेषः ।

उपोष्य सर्व्वमेवैतत् कुर्य्याद्भक्तिपुरःसरम् ।
पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्ततम् ॥
तिलैः स्नानं प्रकुर्व्वीत तैरेवोद्वर्त्तनं बुधः ।
देवतानां पितृणाञ्च उभाभ्यां तर्पणं तथा ॥

'पारयेत्' पारणं कुर्य्यात्। तिलस्नान-पारणयोर्नायं क्रमो
विवक्षितः । उभाभ्यामिति तादर्थ्ये चतुर्थी ।

होमं तैश्च प्रकुर्व्वीत सर्व्वदैवोत्तरायणे।
तान् वै देवाय विप्रेभ्यो घाटकेन सम ददेत् ॥
यस्मादेव करोत्येव चित्त ग्रामौ निवेश्य च ।

उत्तरायणमासाद्य नरः कस्मात् स मोघते ॥

ब्रह्मपुराणे ।

शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा सा वै सप्तमी भास्करप्रिया ॥
स्नानं दानं जपो होमः पितृ-देवादिपूजनम् ।
सर्वं कोटिगुणं प्रोक्तं तपनेन महाजया ॥
यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् ।
सोऽश्वमेधफलं प्राप्य ततः सूर्य्यपुरं व्रजेत् ॥
पयसा स्नापयेद्यस्तु भास्करं भक्तितत्परः ।
विमुक्तः सर्वपापेभ्यो याति सूर्य्यसलोकताम् ॥
अर्कवर्णेन विमानेन किङ्किणीजालमालिना ।
तेजसा रविसङ्काशः कान्त्याचेन्दुसमो भवेत् ।
स्थित्वा तत्र चिरं कालं राजा भवति निश्चयः ॥
मयैषा कथिता पुण्या सप्तमी त्रिपुरान्तक ।
यामुपोष्य नरो भक्त्या अचलाम् मङ्गलाम् लभेत् ।
ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥

संक्रान्तिविशेषेण देयविशेषमाह विश्वामित्रः ।

मेषसंक्रमणे भानौ मेषदानं महाफलम् ।
वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥
वस्त्रान्न-पान-दानानि मिथुने विहितानि तु ।
घृतधेनुप्रदानन्तु कर्कटे परिशस्यते ॥
ससुवर्णं छत्रदानं सिंहे च विहितं सदा ।

कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥
तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥

अत्र 'कीट' वृश्चिकः ।

धनुःप्रवेशे वस्त्राणां यानानाञ्च महाफलम् ।
झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥
कुम्भप्रवेशे दानं तु गवाम्बु तृणस्य च ।
मीनप्रवेशे स्नानमाल्यानामपि चोत्तमम् ॥

दानान्यथैतानि मया द्विजेन्द्र
प्रोक्तानि काले तु नरः प्रदत्वा ।
प्राप्नोति कामं मनसस्त्वभीष्टम्
तस्मात्प्रयच्छेत् हि कालदानम् ॥

स्कान्दे ।

धेनुं तिलमयीं राजन्दद्याद् यश्चोत्तरायणे ।
सर्वान् कामानवाप्नोति विन्दते परमं सुखम् ॥

विष्णुधर्मोत्तरे ।

उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् ।
तिलपूर्णमनड्वाहं दत्वा रोगैः प्रमुच्यते ॥

शिवरहस्ये ।

पुरा मकरसङ्क्रान्तौ शङ्करो गोसवे कृते ।
तिलानुत्पादयामास तृप्तये सर्वदेहिनाम् ॥
तस्मात्तस्यां तिलैः स्नानं कार्यं चोद्वर्त्तनं बुधैः ।

देवतानां पितॄणाञ्च मोदकैस्तर्पणं तिलैः ॥
तिला देयाश्च विप्रेभ्यः मन्त्रैर्चोत्तरायणे ।
तिलांश्च भक्षयेत्पुण्यान् होतव्याश्च तथा तिलाः ॥
तस्यां तिथौ तिलैर्हुत्वा येऽर्चयन्ति त्रिलोचनम् ।
त्रिदिवे ते विराजन्ते गोमयस्थमदायिनः ॥
तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः ।
सतिलैस्तण्डुलैर्देवं पूजयेद्विधिवद्द्विजः ॥
घृताभिषेकं वा कुर्य्यान्महापुण्यफलेप्सया ।
घृतपूर्णेन भाण्डेन सावित्रेण लहर्निशम् ॥
गव्येनाज्येन वा शम्भोः प्रदद्यात् घृतकम्बलम् ।
सर्पिषा स्नपनं रात्रं कृत्वा श्रेयोऽभिवृद्धये ॥
इयं च संक्रान्तिरतिसूक्ष्मकाला ।
तथाच देवीपुराणे ।

एतत्सूक्ष्मविभागस्तु मुनिकालस्य कीर्त्तितम् ।
परमार्थेन या संख्या कथयामि नृपोत्तम ॥
स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।
तस्यां त्रिंशत्तमो भागस्तत्परः परिकीर्त्तितः ॥
तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्रभागाद्धं तत्काले रविसङ्क्रमे ॥
तत्काले तु द्रवीभूतं त्रैलोक्यं सचराचरम् ।
अत ब्रह्मापि सन्दिग्ध उवाच सुरसत्तमः ॥
दानाध्ययन-जप्यादि विरुद्ध वह्निहोमतः ।

श्रावणं कर्म कुर्वीरन् ऋग्यजुःसामपाठकाः ॥

व्यासः ।

श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञितम् ॥

निगमः ।

ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी ।
तथा हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे ।
धनिष्ठामिश्रिते कार्य्यमुपाकरणसंज्ञितम् ॥

कालिकापुराणे ।

चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान्स्वीकुर्व्वतः पद्मयोनेस्तौ जहृतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
श्रवणश्रुतिर्भद्रा पर्वण्यौदयिके पुनः ।
अतो भद्रयुते तस्मिन्नोपाकरणमिष्यते ।
आसुरं वर्जयेत्कालं वेदाहरणशङ्कया ॥

वृद्धप्रचेताः ।

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।
ब्राह्मणान् भोजयेत् तत्र पितॄनुद्दिश्य देवताः ॥

भविष्योत्तरे ।

संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनक्षये ।
स्नानं कुर्वीत मतिमान् श्रुति-स्मृतिविधानतः ॥
ततो देवान् पितॄंश्चैव तर्पयेत्परमाम्भसा ।
उपाकर्म द्विवेदोक्तऋषीणां चैव तर्पणम् ।
कुर्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य यत्नतः ॥

अत्र चौदयिके पर्वण्युपाकर्म तैत्तिरीयकैः कार्यं। एतदुक्तं बह्वृचपरिशिष्टकारिकासु ।

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥ इति ।

अन्येस्तु पूर्वविद्धा एव ।

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति वचनात् ।

अत्र केचिदाहुः। नैतत् युज्यते तथाहि अत्र तैत्तिरीयका एव पर्वणीति न नियन्तुं शक्यन्ते अन्येषामपि चरणानां पर्वण्युपाकर्मविधानात्। न च पर्वण्यौदयिके यदुपाकर्म तैत्तिरीयका एव कुर्युरिति वाक्यार्थो युज्यते, विधिद्वयानुवादे वाक्यभेदप्रसङ्गात् विशेषणानामप्राप्तेरनुवदितुमशक्यत्वात् एतावति च विशिष्टे कर्मणि तैत्तिरीयकाणां विधानानुपपत्तेः कर्त्तुर्हि कर्म विधीयते न कर्मणि कर्त्ता ।

किञ्च उपाकर्म तत्कालस्य पौर्णमासी तयोर्द्वयमन्यैरेव विहितत्वात् नात्र कारिकाया तद्विधानं। अत्र तु पौर्णमासीकालस्याङ्ग-

औदयिककालेन सम्बन्ध उद्दिश्यते। तत्र यदि तैत्तिरीयकैरौदयिकत्वस्यापरः सम्बन्ध उद्दिश्यते तदा सम्बन्धद्वयाभिधानात् भिद्यते वाक्यं ।

किञ्च तैत्तिरीयका कर्त्तारोऽप्यङ्गमेव, न चाङ्गाना मिथः सम्बन्धोऽस्ति। न चारुणैकहायनीन्यायेन पर्य्यान्ततोगुणानां सम्बन्ध इति वाच्यं। तत्र हि अरुणगुणैकहायनीद्रव्यविशिष्टः क्रयो विधीयते अनन्तरं द्रव्य-गुणयोः परस्पराकाङ्क्षात्सामानाधिकरण्यात् अन्वयो भवति। अत्र पुन कारिकाया नोपाकर्मविधानं। न च पर्वौदयिक-तैत्तिरीयकयोः द्रव्य-गुणत्वेनापि सामानाधिकरण्यं अन्योन्यद्रव्याकाङ्क्षा च अतोऽहविरुभयत्ववदविवक्षितार्थं तैत्तिरीयपदमुपलक्षणार्थं भूतानुवादः, शाखान्तराधिकरणन्यायेन च सर्वशाखेषु उपाकर्मव्यवस्था, तैत्तिरीयशाखामुक्त पर्वौदयिकत्वमविरोधादन्यैरपि ग्राह्यं ।

तथाच परिशिष्टे विहित ।

यन्नाम्नात स्वशाखाया पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

"श्रावणी दुर्गनवमीत्यादिवचनस्य कर्मविशेषानुपादानात् हिरण्यगर्भस्य पवित्रारोपणं विषय, उपाकर्माङ्गभूतमाभ्युदयिकञ्च श्रावणीकर्म चेति। तस्मात्तैत्तिरीयाणामेवौदयिके पर्वण्युपाकर्मेत्युक्तमिति । तदयुक्त। यत्र त्वनन्यगतिपद तत्र पदवैयर्थ्यभिया विशिष्टस्योद्देश्यत्वं यथा "अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिषु, उभयपदस्य तु प्रायश्चेनाग्नेयहविरार्त्तिनिमित्तत्वमिति अमावस्योदनार्थत्वाद्यानन्यगतिकता। न च वाक्यभेदः, उद्देश्यविशेषणविवक्षायां हि स

न तु विशिष्टोद्देशे। प्रपञ्चितं चैतद्भवदेवेन। "योऽत्र विप्रतिपद्यते तं प्रति विशिष्टविध्याश्रयणेन परिहारो वक्तव्यः न्याय्यत्वात्"। अपि च पूर्व्वोदाहृतवचनैरौदयिके पर्व्वण्युपाकर्म्मप्राप्तेरनुवादोपपत्तेः, कर्म्मण्यपि च कालविधिरुपपन्नः अप्राप्तविषयत्वात् विधेः। न च सम्बन्धद्वयविधानाद्वाक्यभेदः, विशिष्टविध्याश्रयणात्, अन्यकर्त्तृभेदेन पौनरुक्त्यपरिहारात् अन्यथा सर्व्वशास्त्रोच्छेदापत्तेः। एवमनभ्युपगमे च लक्षणा-निष्प्रयोजनानुवादौ स्याताम्। ननु यथा वैश्वदेवेन यजेतेत्यत्र विशिष्टविधौ गौरवप्रसङ्गात् वैश्वदेवशब्दो लक्षणया तच्चिन्न्यायेन प्रकृतयागेषु प्रवर्त्तत इति स्वीकृतं, तथा विशिष्टविधिगौरवाल्लक्षणापि स्वीक्रियत इति चेत्। न। तत्रापि लक्षणाया अभावात्। न हि विश्वेदेवदेवतायोगाद्वैश्वदेवशब्दप्रवृत्तिः, किन्तु विश्वदेवकर्त्तृयोगात्। तथा च तैत्तिरीयके श्रूयते "यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमिति, अर्थवादगतशब्दप्रवृत्तिनिमित्तं सर्व्वत्र स्वीकृतं "यदाश्विनीषु तदाश्वानामाश्वत्वमित्येवमादिषु, यत्तु लक्षणाभिधानं तदभ्युपगमवादपरत्वेन विशिष्टविधेयतया लक्षणास्वीकारे अव्यवस्थाप्रसङ्गात्। किञ्च तत्र विशिष्टविधौ गौरवं कर्म्मान्तरातिदेशकल्पना च अनुवादस्य सप्रयोजनः। अत्र विशिष्टविधौ गौरवमात्रं तदभावे तु लक्षणा निष्प्रयोजनश्चानुवाद इति वैषम्यं। विशिष्टविधौ च गुणानां पार्ष्णिकसम्बन्ध उपपद्यते। कर्त्तुश्च कर्म्मानुष्ठानार्थं कालविशेषाकाङ्क्षा विद्यत एव। न चात्र शाखान्तराधिकरणन्यायः, "पर्व्वण्यौदयिके कुर्युः श्रावण्यामित्यनेनैवान्येषामपि प्राप्तौ तैत्तिरीयकपदवैयर्थ्यप्रसङ्गात्। न च तैत्तिरीयशब्दो पर्व्वौदयिकत्वं विहितं। यदि च कालिकापुराणे मताख्यानसाधारण्यात् तैत्तिरीयव्यतिरिक्तानामप्यौ-

पण्डितपरितोषकता दूषणमभिहितमनुपपन्नमेतत्, चान्द्रमास एव माघे वैशाखादिव्यपदेशभागिता तत्र च गौणी शब्दप्रवृत्तिरिति, तावत्पूर्वमेव निराकृतं।

यत्तु पितृकार्यप्रधानत्वाद्युगादीनां पितृकार्येऽपि चान्द्रमास-स्ततस्तद्गतयुगादिग्रहणमिति, तन्न, सौरे चान्द्रे पितृकार्ये विधि-रित्युक्ता मोक्त। न च पितृकार्ये प्राधान्य युगादिषु देव-पितृकार्य-समन्वितत्वात्। तथाचोक्त। "अनन्तपुण्यास्तिथयस्तत्वदति। तथा चाह। "स्नान-दानादिकं सर्वं युगाद्यावश्यं भवेत्" इति। न च सिताषितपक्षमेव तावच्चान्द्रस्य, सौरेऽपि तत्सम्भवात्।

यत्तु "माघासिते पञ्चदशीत्युदाहृतं न तेन चान्द्रमासादिगता-मावास्यादिका तिथिर्युगादिरित्युच्यते, किन्तु चान्द्रे मासे मघा-युक्ता सिनीवाली पितृक्षये भवतीति न तु योऽयं काल(१) पितृ-क्षयश्च युगादिर्मघापरपक्षादिष्वभावात्। माघे अमावास्या युगा-दिश्चान्द्रेऽपि सा तिथिर्युगादिरिति चेत्। नैव। सौर-चान्द्रमासवि-निगमहेतोरभावात्। न चोभयथापि युगादित्वं, अतस्तु इति परिश-ष्टाभावानुपपत्ते.। न च श्राद्धकालाभिप्रायेणैतद्वचन, "एतस्रो युगाद्य इति वाष्टका व्रीहि-यवपाकादिति वचनाद्युगाद्ययस्तस्तिथय इति गम्यते, तथापि का युगादिरित्युच्यते सौरमासमतेति, अन्यथो-त्कर्षं स्यात्(२)। न च पितृकार्योत्कर्षो वचनादिति मन्तव्य, वचना-

(१) यत्र योऽयं काल इति ख०।

(२) अन्यथानुत्कर्षः स्यादिति ख०।

भावाच्चोत्कर्षो युगादिष्विति तिथयस्तु सर्वथोत्कर्षं प्रतिषेधन्ति, वृषादिराशिगतरविभागे दशहरादितिथिपूर्व्वत्वापदेशात्[१] ।

ऋष्यशृङ्गेण ।

दशहरासु नोत्कर्षः चतुर्ष्वपि युगादिषु ।
उपाकर्म-महापथ्योर्ह्रस्तदृक्क वृषादिनः ॥

इति उत्कर्षनिषेधाच्च । "परः कालः पितृणामिति परशब्दः श्रेष्ठतावचनः न तु पूर्व्वकालगतकार्योत्कर्षप्रतिपादकः । न च श्रा' दशहरास्विति वचनममूलं, वचनात् समस्तशास्त्रवित्परिग्रहान्मूलोपन्यासाच्च । यत्तु शार्ङ्गधर व्याख्यानं नैतदैदिकं वचनं येनाविचारितमुपाददीमहे, तस्मात् सकलजनप्रसिद्धानुगुण्यादनुष्ठानादराच्च सौरमासगतैव युगादिरूपा देया, न चान्द्रमासगता, न हि मिथुनादित्ये शुक्लदशमी दशहरा कुम्भादित्ये चासितपञ्चदशी अमावास्या इति विधानेऽपि सङ्घटते, तस्मात् सौरमासगता युगादिरिति सिद्धान्तः। वयन्तु ब्रूमः यद्यपि वैशाखादिशब्दाश्चान्द्रमासवचना एवेति माधवप्रभृतये निरूपितं, तदापि प्रागुदाहृतयुगोत्कर्षनिषेधकवचनपर्यालोचनप्रसिद्धानुगुण्यानुष्ठानादरार्थं सौरमासगतैव युगादिर्ग्राह्येति ।

इति युगादिनिर्णयः ।

---

(१) दशहरादितिथिपूर्व्वत्वोपदेशादिति ख० ।

पण्डितपरितोषकत्ता दूषणमभिहितमनुपपन्नमेतत्, चान्द्रमास एव मासे वैशाखादिव्यपदेशभागिता तत्र च गौणी शब्दप्रवृत्तिरिति, तावत्पूर्वमेव निराकृतं।

यत्तु पितृकार्यप्रधानत्वाद्युगादीनां पितृकार्येऽपि चान्द्रमासः स्ततस्तद्गतयुगादिग्रहणमिति, तन्न, सौरे चान्द्रे पितृकार्ये विधि-रित्युक्ता प्रोक्तं। न च पितृकार्ये प्राधान्यं युगादिषु देव-पितृकार्य-सम्बन्धित्वात्। तथाचोक्तं। "अनन्तपुण्यफलविषयत्वतस्त्विति। तथा व्यासः। "स्नान-दानादिकं सर्वं युगादावक्षयं भवेत्" इति। न च सितासितपक्षमेव तावच्चान्द्रस्य, सौरेऽपि तत्सम्भवात्।

## अथ नानायुगधर्माः ।

तत्रोपकात्यायनः ।

श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते ।
नानाधर्माः प्रवर्त्तन्ते मानवानां युगे युगे ॥

मनुः ।

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

तपः कृच्छ्रचान्द्रायणादि ज्ञानं ध्यानम् ।

महाभारते ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

तथा ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः ॥

बृहस्पतिः ।

तपोधर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तः तिष्ये दानं दया दमः ॥

तिष्यः कलिः ।

लिङ्गपुराणे ।

ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।

यज्ञं द्वापरे युद्धं दानमेव कलौ युगे ॥

शिवपुराणे ।

ध्यानं परं कृतयुगे त्रेतायां हवनक्रिया ।

अहिंसा द्वापरे चैव(१) कलौ सर्वात्मनः स्मृतः ॥ इति ॥

तथा ।

ध्यानं परं कृतयुगे त्रेतायां लिङ्गपूजनं ।

द्वापरेऽध्ययनं तिष्ये महादेवस्य कीर्त्तनं ॥

तथा ।

ध्यानं परं कृतयुगे त्रेतायां यजनं तथा ।

द्वापरे लिङ्गपूजा च कलौ शङ्करकीर्त्तनं ॥

विष्णुधर्मोत्तरे ।

ध्यानं परं कृतयुगे त्रेतायाञ्च तपः परं ।

द्वापरे च तथा यज्ञः प्रतिष्ठा च कलौ युगे ॥

मनु-बृहस्पती ।

कृते यदब्दाद्धर्मः स्यात् तत्त्रेतायामृतुत्रयात् ।

द्वापरे तु विपक्षेण कलावल्पा च तद्भवेत् ॥

ब्रह्माण्डपुराणे ।

त्रेतायामाब्दिको धर्मो द्वापरे मासिकः स्मृतः ।

यथाशक्ति चरन् प्राज्ञस्तदह्ना प्राप्नुयात्कलौ ॥

विष्णुपुराण-ब्रह्माण्डपुराणयोः ।

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु ।

---

(१) धर्म इति ग० ।

द्वापरे तत्तु मासेन चाहोरात्रेण तत्कलौ ॥

स्कन्दपुराणे ।

ब्रह्मा कृतयुगे देवः त्रेतायां भगवान् रविः ।
द्वापरे भगवान् विष्णुः कलौ देवोमहेश्वरः ॥

वराहपुराणे ।

कृते नारायणः शुद्धः सूक्ष्ममूर्तिरुपास्यते ।
त्रेतायां यज्ञरूपेण पाञ्चरात्रेण द्वापरे ॥

श्रीभागवते ।

कृतं त्रेता द्वापरञ्च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥
कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्ड-कमण्डलून् ॥
मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।
यजन्ते तपसा देवं शमेन च दमेन च ॥
हंसःसुपर्णो वैकुण्ठो धर्मोयोगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥
तं तदा मनुजा देवं सर्वदेवमयं हरिं ।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्य्यते ॥

द्वापरे भगवान् रामः पीतवासा निजायुधैः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥
तं तदा पुरुषं मर्त्या महाराजोपलक्षणं ।
यजन्ति वेद-तन्त्राभ्यां परं जिज्ञासवो नृप ॥
नमस्ते वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥
नारायणाय ऋषये पुरुषाय महात्मने ।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥
इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरं ।
नानातन्त्रविधानेन कलावपि यथा शृणु ॥
कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥
एवं युगानुरूपेण भगवान्युगवर्त्तिभिः ।
मनुजैरिज्यते राजञ्छ्रेयसामीश्वरो हरिः ॥

अपराजितप्रच्छायाम् ।

क्षीमं वाससा हस्तेन दक्षिणेन रविं वहेत् ।
यज्ञं च दयमथो यो वासुदेवं प्रकीर्तयेत् ॥
आदिमूर्त्तिर्दिशेः पूज्यः श्वेतवर्णः कृते युगे ।
संकर्षणो वहत्येवं लाङ्गलं मुषलं तथा ॥
रक्तवर्णः प्रपूज्येत त्रेतायां चयजातिभिः ।
प्रद्युम्नो द्वापरे पूज्यो वैश्यैः शरवशधरः ॥
पीतवर्णं पीतवासाः शिल्पज्ञानप्रदायकः ।

कलौ युगे निरुद्धास्यः पूज्यते शूद्रजातिभिः ॥
कृष्णवर्णो वहत्येव चर्म खड्गं करद्वये ।
घातयन्नखिलं विघ्नं पापञ्च विनाशयेत् ॥

अपराजितपृच्छायाम् ।

ऋग्वेदादिविभेदेन कृतादियुगभेदतः ।
विप्रादिवर्णभेदेन चतुर्वक्त्रश्चतुर्भुजः ॥
ब्रह्मा पितामहश्चैव विरिञ्चिः कमलासनः ।
चतस्र इति संप्रोक्ता मूर्त्तयः परमेष्ठिनः ॥
पुस्तकं चाक्षसूत्रञ्च स्रुवा चैव कमण्डलुः ।
ब्रह्मणश्च भवेन्मूर्त्तिः कृते तु सुखदायिनी ॥
सुवक्त्रश्च सुबाहुश्च कर्णकुण्डलमण्डितः ।
मालायुक्तः सुशोभाढ्यो मांसलाङ्गः सुकेशकः ॥
तप्तकाञ्चनवर्णाभो रत्नहारोज्ज्वलद्युतिः ।
केयूरकटकाभ्याञ्च सर्वाभरणभूषितः ॥
ऋषयश्चाश्रिताः कार्या देवताश्च पार्श्वतः ।
चतुर्वेदसमायुक्तो ब्रह्मा स्यात् सर्वशान्तिदः ॥

दक्षिणाध करक्रमादायुधानि वेदितव्यानि ।

सिद्धार्थपृच्छायाम् ।

पुस्तकाक्ष-स्रुवौ-कुण्डी कृते ब्रह्मा चतुर्मुखः(१) ।

---

(१) पुस्तकाक्षौ स्रुवं कुण्डी कृते ब्रह्मा चतुर्मुख इति ख० । पुस्तकाक्षकुण्डी कृते ब्रह्मा चतुर्नाङ्कचतुर्मुख इति ग० । पाठद्वयमपि न समीचीनं विभाति ।

ब्रह्मनामा च ऋग्वेदप्रधानः पूज्यते द्विजैः ॥
कमलाक्षौ स्रुवश्चैव पुस्तकञ्च पितामहः ।
त्रेतायाञ्च चतुर्व्वेदप्रधानः जनपूजितः ॥

अपराजितपृच्छायाम् ।

कमण्डलुं चाक्षसूत्रं स्रुवञ्च पुस्तकं तथा ।
पितामहो भवेन्मूर्त्तिस्त्रेतायां सुखदायिनी ॥

सिद्धार्थपृच्छायाम् ।

संपूज्यो द्वापरे वैश्यैर्विरिञ्चिः पद्मकाननमध्यत्[1] ।
अक्षसूत्रं पुस्तकञ्च स्रुवं कुण्डञ्च धारयन् ॥
अक्ष-स्रुवौ पुस्तकञ्च कुण्डी च कमलासनः ।
कलापवर्णमुख्योऽसौ सर्ववर्णैः प्रपूज्यते ॥

अपराजितपृच्छायां ।

अक्षसूत्रं करे दक्षे स्रुक् तस्योपरि संस्थिता ।
वामे तु पुस्तकं हस्ते तस्याधश्च कमण्डलुः ।
कमलासनं करे तु स्यात् सर्ववर्णसुखप्रदः ॥

विष्णुधर्मोत्तरे ।

पुष्करन्तु कृते सेव्यं त्रेतायां नैमिषं तथा ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥

पराशरः ।

कृते तु मानवो धर्मः त्रेतायां गौतमस्य च ।
द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः[2] ॥

---

(१) अक्षसूत्रमर्द्दित ख० । (२) पाराशरी स्मृतिरिति ख० ।

कालोत्तरपविचारोद्दिष्टप्रकरणे युगभेदेन पवित्रद्रव्याण्यभिहितानि।

कृते मणिमयं कार्य्यं त्रेतायां हेमसम्भवम्।
पद्मजं द्वापरे सूत्रं कार्पासन्तु कलौ हितम्।
यतिभिर्मासिकं कार्य्यं दामन्त्र वाल्कलं हितम्॥

इति नानायुगधर्म्माः।

---

## अथ युगभेदेन वर्ज्यानि।

तत्र शातातपः।

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।
द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे॥
कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु।
द्वापरे त्वन्नमादाय कलौ पतति कर्म्मणा॥

क्वचित्त्वन्यथा पाठः द्वापरे त्वन्नमुच्यते।

इति युगभेदेन वर्ज्यानि।

---

## अथ कलियुगधर्म्माः।

महाभारते।

यस्तौ नम शिवायेति मन्त्रेणानेन सहरम्।
सतत्काल समभ्यर्च्य सर्वपापैः प्रमुच्यते॥

सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः।
यस्तो नमः शिवायेति मुच्यते स कलौ नरः॥
शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये।
संसारदोषसम्भानमुद्दिष्टो न नरः कलौ॥

तथा।

सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव।
लिङ्गे वा स्थण्डिले वापि कौतुक विधिपूर्वकम्
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते॥

लिङ्गपुराणे।

कलौ रुद्रो महादेव शङ्करो नौललोहित.।
प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः॥
ये तं विप्रास्तु सेवन्ते येन केनापि शङ्करम्।
कलिदोषं विनिर्जित्य प्रयान्ति परमं पदम्॥

व्यास.।

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥

भागवते।

कलौ सभाजयन्त्यार्या गुणज्ञाः सारभागिनः।
यत्र सङ्कीर्त्तनेनैव सर्वस्वार्थोऽभिलभ्यते॥

'सङ्कीर्त्तनेन' हरिसङ्कीर्त्तनेनेत्यर्थ।

न ह्यत. परमो लाभो देहिनां भ्राम्यतामिह।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः॥

अग्निपुराणे ।

नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने ।
युगेऽस्मिन् तामसे घोरे यज्ञ-वेदविवर्ज्जिते ॥
कुर्वीताराधनं राजन् वासुदेवे कलौ युगे ।
यद्भ्यर्च्य हरिं भक्त्या कृते वर्षशतं नृप ।
विधानेन फलं लेभे भवोराधात्कलाविति ॥

तथा ।

कलौ कलिमलध्वंसं सर्व्वपापहरं हरिम् ।
येऽर्च्चयन्ति नरा नित्यन्तेऽपि वन्द्या यथा हरिः ॥
धर्म्मोत्कर्षमतीता[१] तु प्राप्नोति पुरुषः कलौ ।
स्वल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ ।
धन्ये कलौ भवेद्विप्र स्वल्पक्लेशैर्म्महत्फलम् ॥

विष्णुधर्म्मोत्तरे ।

देवतावेश्मपूर्व्वाणि चत्वराणि कलौ युगे ।
कर्त्तव्यानि महीपालैः सर्व्वलोकमभीप्सुभिः ॥

इति कलियुगधर्माः ।

---

(१) अवीतेति पाठोय साधुः ।

## अथ कलियुगवर्ज्यानि।

आदित्यपुराणे।

यस्तु कार्त्तयुगो धर्म्मो न कर्त्तव्यः कलौ युगे।

'कार्त्तः' कृतयुगसम्बन्धी।

तथा नियोगं प्रकृत्योक्तम्।

अयं कार्त्तयुगो धर्म्मो न कर्त्तव्यः कलौ युगे।
दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः॥
गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा।
नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः॥

तथा।

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधन्तथा।
कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुम्॥

स्मृत्यन्तरे।

देवराच्च सुतोत्पत्तिं गोवधञ्च कमण्डलुम्।
मद्यतां पौरुषं मेधं कलौ पञ्च विवर्जयेत्॥

तथा।

यथानियोगं धर्म्माणां नहि ज्ञेया यथोऽपि च।
तथोद्धारविभागोऽपि नैवं सम्प्रति वर्त्तते॥

आदित्यपुराणे।

अपथा भक्तुना स्वप्नाः सामुद्रिकमुपश्रुतिः।
उपयाचितमादेशा सम्भवन्ति कलौ क्वचित्॥

सत्यासत्यावलाभेन कार्यं यत्र न कारयेत् ।
तथा धर्मसमावेशादन्यान्यपि कलौ युगे ॥

स्मर्यन्ते ।

विहितान्यपि कर्माणि धर्मलोपभयाद्बुधैः(१) ।
समयेन निवृत्तानि शास्त्रभावात् कलौ युगे ॥
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि सङ्ग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥
व्रतस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ॥
संसर्गदोषस्तेनाद्य महापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पश्वुपाकरणक्रिया ॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ।

(१) कर्मलोपभयाद्बुधैरिति ख० ।

अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियः ॥
परोद्देशात्मसन्त्याग उच्छिष्टस्यापि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ॥
अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्तानशनेनान्नहरणं हीनकर्मणः ॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्त्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥

आपस्तम्बोऽपि ।

धर्मज्ञसमयः प्रमाणं वेदाश्चेति ।

ननु कलियुगे यद्वर्ज्जनं तदाम्नायाध्ययनार्थं दृष्टार्थं वा । न च तावददृष्टार्थं, अनुष्ठानानुपयोगितया तदर्थावबोधस्य प्रयोजनस्यानुपपत्तेः । नाप्यन्यथा, वैरूप्यापत्तेः । उच्यते । तदाम्नायानुष्ठानेऽपि भेदप्रकृतिज्ञानाद्युपयोगितया दृष्टार्थत्वाददोषः । अन्यथा ब्राह्मणस्य राजसूयादिवाक्याध्ययनमपि न स्यात् । यदा राजसूयादौ या गतिः सैवेहापि । किञ्चैवं वदता कलियुगवर्ज्जनस्यात्यन्तमप्रामाण्यमुच्यते । अध्ययनविधिदृष्टार्थत्वाभावाच्च तावदप्रामाण्यं स्मृत्यन्तरवच्चापि शिष्टैर्वर्णिकदृढपरिग्रहस्याविशेषात् । अध्ययनविधिदृष्टार्थत्वाभावश्चेत्प्रकृते किमायातमिति ।

इति कलियुगवर्ज्यानि ।

---

## अथ मन्वन्तरादयः ।

मत्स्यपुराणात् ।

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य तु ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ।
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ॥
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा[१] ।
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणं ।
सर्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु ॥

अमावास्याव्यतिरेकेण सर्वाः शुक्ला एव । पुराणान्तरे श्रावणामावास्या भाद्रपदकृष्णाष्टमी युगादिरिति प्रतिपादितं । तथाहि ।

आश्विने दशमी शुक्ला श्रावणे कार्त्तिकी तथा ।
मन्वन्तरादयो ह्येता दत्तस्याक्षयकारिकाः ॥

मनुः ।

सहस्रगुणितं दानं भवेद्दत्तं युगादिषु ।
कर्म श्राद्धादिकञ्चैव तथा मन्वन्तरादिषु ॥

इति मन्वन्तरादयः ।

---

(१) सप्तेति क० ।

## अथ कल्पादयः ।

तत्र नागरखण्डे ।

अथ कल्पादयो राजन् कथ्यन्ते तिथयः शुभाः ।
यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत् ॥
चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराभवत् ।
तस्यां शुक्लत्रयोदश्यामुदानः समजायत ॥
कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् ।
अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यवर्त्तत ॥
वैशाखस्य तृतीयायां शुक्लायां नीललोहितः ।
चतुर्दश्यान्तु शुक्लायां प्रवृत्तो गारुडाभिधः ॥
समानस्तु तृतीयायां कृष्णायामुदपद्यत ।
माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् ॥
ज्येष्ठशुक्लतृतीयायां महादेवस्य सम्भवः ।
पौर्णमास्यान्तु तस्यैव कौर्मः प्रवर्त्तते नृप ॥
कृष्णपक्षे तृतीयायामाग्नेयः समगच्छत ।
तस्यां तस्यैव कृष्णायां सोमकल्पः समापतत् ॥
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत ।
तस्यैव कृष्णपञ्चम्यां मानवः प्रत्यपद्यत ॥
षष्ठीं प्रौष्ठपदे शुक्ले प्राप्य प्राणाधिपोऽभवत् ।
सितेतरायां षष्ठ्यान्तु तस्य तत्पुरुषाभिधः(१) ॥
बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य [illegible] ।

---

(१) तत्पुरुषसाह्वय इति ख० ।

कृष्णायामपि वैकुण्ठः प्रविवेश विशाम्पते ॥
कार्त्तिकस्य सिते षष्ठ्यां कल्पः कन्दर्पसञ्ज्ञकः ।
असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य सम्भवः ॥
मार्गे शुक्लनवम्यान्तु कल्पः सद्योऽभ्यपद्यत ।
असितायाञ्च सावित्रीकल्पः प्रारम्भमभ्यगात् ॥
पौषे दशम्यां शुक्लायामीशानः प्रादुरास ह ।
असितायामघोरस्य कल्पस्योपक्रमोऽभवत् ॥
एकादश्यान्तु शुक्लायां माघे व्यासः प्रजज्ञिवान् ।
तस्यामेव तमिस्रायां वाराहः प्राप भूतये ॥
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य तु ।
कृष्णायामपि वैराजो विरराज महामनाः ॥
इति त्रिंशद्दमी कल्पास्तिथयः परमेष्ठिनः ।
आरम्भे तिथयस्त्विष्टाः शुक्लाः पुण्यतमा मताः ।
तासु श्राद्धं कृतं पुण्यमाकल्पस्य विकल्पने ॥

मत्स्यपुराणे ।

ब्रह्मणो यद्दिनादर्वाक् कल्पस्यादिः प्रकीर्त्तिता ।
वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च ॥
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथापरा ।
शुक्लत्रयोदशी माघे कार्त्तिकस्य तु सप्तमी ॥
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम्(१) ।
कल्पानामादयोह्येता दत्तस्याक्षयकारिकाः ॥

(१) सप्त वारा स्मराम्यहमिति ग॰ ।

अत्र 'अमा' अमावास्या, वैशाखे तृतीया, फाल्गुने तृतीया, चैत्रेपञ्चमी, चैत्रामावास्येति तृष्णा । माघचयोदशी, कार्त्तिके सप्तमी, मार्गशीर्षे नवमी चैताः शुक्लाः ।

इति कल्पादयः ।

## अथ व्यतीपातः ।

तत्र याज्ञवल्क्यः ।

शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे दशसाहस्रं व्यतीपाते त्वनन्तकं ॥

वाराहपुराणे ।

दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये ।
शतघ्नं तच्च संक्रान्तौ शतघ्नं विषुवे तथा ॥
युगादौ तच्छतगुणं अयने तच्छताहतं ।
सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे ।
असङ्ख्येयं व्यतीपाते दानं वेदविदो विदुः ॥

'शतघ्नं' शतगुणं, व्यतीपातोऽत्र विष्कुम्भादियोगेषु सप्तदशोयोगः ।

अस्योत्पत्तिमाह गालवः ।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्त्तिः
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः ।
अस्मोद्यतो भुवि पतंश्च निरीक्ष्यमाणः
मद्वात्ययेऽहमिति च व्यतिपातयोगः ॥

अस्य चोत्पत्ति-भ्रमण-पतनसमयेषु पतनानन्तरं च क्रियमाण स्नान-दान-श्राद्धादिकं महाफलं भवति ।

तदाह याज्ञवल्क्यः ।

उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायान्तु ।
अर्बुदगुणितं पतने अप-दानाद्यक्षयं पतिते ॥

नृसिंहपुराणे ।

फलं लक्षगुणमुत्पत्तौ भ्रमणे कोटिरुच्यते ।
पतने दशकोट्यस्तु पतिते दत्तमक्षयं ॥

उत्पत्त्यादिमानञ्च ज्योतिःशास्त्रे ।

विंशति द्विगुतोत्पत्तौ भ्रमणे चैकविंशति ।
पतने दशनाद्यस्तु पतिते षष्टिनाडिकाः ॥

वृद्धमनुना प्रकारान्तरेण व्यतीपातो दर्शितः ।

श्रवणाश्वि-धनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

'नागदैवतं' अश्लेषा । 'मस्तकं' मृगशिरः । मस्तक इति श्रवणादिभिः प्रत्येकं सम्बध्यते । केचित्तु मस्तकं मृगशिर इति व्याचक्षते । 'अमा' अमावास्या, यद्येतेषु नक्षत्रेष्वादित्यवारयुता भवति तदा स एव योगो व्यतीपातसंज्ञो भवति ।

शास्त्रान्तरे ।

पञ्चाननस्थौ गुरु-भूमिपुत्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥
अस्मिन् हि गो-भूमि-हिरण्य-वस्त्र-

दानेन सर्वं प्रविहाय पापम्।
सुरत्वमिन्द्रत्वमनामयत्वम्
मर्त्याधिपत्यं लभते मनुष्य' ॥

'पद्मासनः' सिंहः। 'गुरु-भूमिपुत्रौ' वृहस्पत्यङ्गारकौ। 'पापा-भिधाना' द्वादशी। 'करभं' हस्तनक्षत्रं।

इति व्यतीपातः।

## अथ वैधृति-व्यतीपातौ।

तत्र भृगुः।

क्रान्तिसाम्यसमयः समीरितः
सूर्य्यपर्व्वसदृशो मुनीश्वरैः।
तत्र दान-ह्रुत-जप्य-पूजनम्
कोटिकोटिगुणमाह भार्गवः ॥

अस्यार्थः सूर्य्याचन्द्रमसोः क्रान्तिसाम्ये कुतपकाले द्वयं सम्भवति। व्यतीपातो वैधृतिः वा तत्र महाक्रान्तिसाम्यलक्षणव्यतीपातस्य गण्डो-न्तरार्द्धादारभ्य क्रमात्, सार्द्धेषु सप्तयोगेषु सम्भवोऽस्ति, वैधृतस्य तु शुक्लयोगादारभ्य क्रमात् सार्द्धेषु पञ्चयोगेषु सम्भवः।

अत्र व्यतीपाते श्राद्धं कर्त्तव्यमित्याह पितामहः।

अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु स इति ॥

अत्र प्रायश्चित्तीयत इति वचनं श्राद्धस्यावश्यकर्त्तां गमयति। तत्पर्वकालयष्ठा ■ दशघटिकाभ्यः समारभ्य एकसप्तत्यधिकशत-पर्यन्ता समाप्यते।

तथाच वेदाङ्गे ज्योतिषि ।

गण्डोत्तरार्द्धव्यतिपातसम्भवः
शुक्लादिको वैदिकपक्षको भवेत् ।
श्राद्धेषु पक्षक्षपरेषु चेष्यते
एवं ह्य तत्फलनैकसाधकम् ॥

विष्णुः ।

वैधृते च व्यतीपाते दत्तमक्षयतामियात् ।

भारद्वाजः ।

व्यतीपाते वैधृते च दत्तस्यान्तो न विद्यते ।
व्यतीपाते विशेषेण स हि सूक्ष्मः प्रकीर्त्तितः ॥

सूक्ष्मप्रकारेण प्रसिद्धस्य सप्तविंशतितमो योगो वैधृत इति ।
इति वैधृति-व्यतीपातौ ।

---

## अथ प्रकीर्णपुण्यकालः ।

तत्र विष्णुः ।

अमावास्या-व्यतीपातौ ग्रहणं चन्द्र-सूर्ययोः ।
मन्वादयो युगादिश्च सङ्क्रान्तिर्वैधृतिस्तथा ॥
दिनक्षय दिनच्छिद्रमवमञ्च तथापरम् ।
द्वे ऽयने विषुवद्युग्मं षडशीतिमुखं तथा ॥
धनिष्ठा विष्णुपदञ्च पुत्रजन्मादि चापरम् ।
आदित्यादियहाणाञ्च नक्षत्रे सह सङ्गमः ॥
विज्ञेय पुण्यकालोऽयं ज्योतिर्विद्भिर्विचारिभिः ।

तत्र दानादिकं कुर्यादात्मनः पुण्यवृद्धये ॥

दिनत्रयलक्षणमुक्तं पद्मपुराणे ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनत्रयः ।

वसिष्ठः ।

एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।

तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥

दिनच्छिद्रलक्षणमाह भृगुः ।

तिथ्यर्द्ध-तिथि-योगर्क्षवेदादौ ग्रसिपर्वणः ।

षड्ग्नी दिवसच्छिद्रमनाख्यो प्राह भार्गवः ॥

अस्यार्थः, 'तिथ्यर्द्धं' करणं, करण-तिथि-योग-नक्षत्राणामन्ते आदौ पर्वकाल-सोमग्रहणतुल्ये, स च दिनच्छिद्रसंज्ञ इति ।

कालमानमपि स एवाह ।

वेदादिकालः कथितस्तिथि-करणयोर्घटीद्वयम् ।

भाग-वह्निपलोपेतं तद्वे-तत्त्वपलैर्युतं ॥

पलैः षोड़शभिर्युक्तं नाड़िकाद्वितयं युतौ ।

वेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः ॥

'कृतिः' करणं। 'भागाः' अष्टौ। 'वह्नयः' त्रयः। 'भं' नक्षत्रं। 'तत्त्वानि' पञ्चविंशतिः। 'युतिः' योगः। तेनायमर्थः तिथि-करणयोरायन्ते घटिकाद्वयं अष्टत्रिंशत्पलानि पुण्यकालः। नक्षत्रस्य तु पञ्चविंशतिपलैर्युक्तं घटिकाद्वयं। योगस्यापि षोड़शभिः पलैर्युक्तं घटिकाद्वयमिति ।

अवमलक्षणमुक्तं विष्णुना ।

तिथित्रयं स्पृशत्येको वारः स्यादधमं हि तत् ।
त्रिवारस्पृक्तिथिर्यत्र त्रिदिनस्पृक्तदुच्यते ॥

अत्र दिनक्षयाधमयोरियान् भेदः । यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः। यत्र तिथिद्वयेऽपि वारानुवृत्तिः सोऽधम इति । विषुवादीनि संक्रान्तिनिर्णयेऽपि दर्शितानि ।

पद्मपुराणे ।

मन्दे वार्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
त्रीण्येतानि च ऋक्षाणि स्वयं प्रोक्तानि ब्रह्मणा ॥
अश्वमेधाधिकं पुण्यं स्नानस्य तु भवेन्नृप ।
दानमक्षयतां याति पितॄणां तर्पणं तथा ॥

'त्रीणि ऋक्षाणि' आग्नेय-याम्य-प्राजापत्यानि ।

मात्स्ये ।

यदा मृगशिरे ऋक्षे शशी सूर्यो बृहस्पतिः ।
तिष्ठन्ति सा तिथिः पुण्या अक्षया परिगीयते ॥

ब्रह्मप्रोक्ते ।

एकादश्यथमावास्या पूर्णिमा पुत्रजन्म च ।
वैधृतिश्च व्यतीपातो भद्रा चावमवासरः ॥
युग-मन्वादयस्ते तु विष्णुपर्वसमानकाः ।
क्रान्तिसाम्यं दिनच्छिद्रं यद्दशभगमस्तथा ॥

'भगम' रात्रिनक्षत्रगमनम् ।

देवीपुराणे ।

व्यतीपातो विष्णुदिनं षडशीतिमुखं तथा ।

क्रान्तिसाम्यममावास्या ग्रहणं वैधृतिस्तथा ॥
संक्रान्तिश्च दिनच्छिद्रं तिथिवृद्धिर्दिनक्षयः ।
इत्यादिपुण्यकालस्तु होम-दानादिकर्मणः ॥

स्कन्दपुराणे।

ग्रहणं चन्द्र-सूर्याभ्यां उत्तरायणमुत्तमम्।
विषुवञ्च व्यतीपातः षड़शीतिमुखं तथा ॥
दिनच्छिद्राणि संक्रान्तिर्ज्ञेयं विष्णुपदं पुनः ।
इति कालाः समाख्याताः पुंसां पुण्यविवर्द्धनः ॥
अभिनन्दानानि दत्तानि स्नान-होम-तपांसि च ।
अनन्तफलदानि स्युः स्वर्ग-मोक्षप्रदान्यपि ॥

च्यवनः ।

अमावास्या-संक्रान्ति-व्यतीपात-विषुवायन-षड़शीतिमुख-विषुवादि वैधृतिग्रहणान्तं स एव पुण्यकालः ।

आदित्यपुराणे(१) ।

ग्रहणे षड़शीतौ च चन्द्र-सूर्यग्रहे तथा ।
युगादौ वैधृते चैव दत्तं भवति चाक्षयम् ॥

तथा ।

तिथयश्च प्रवक्ष्यामि(२) यासु दत्तं महाफलम् ।
महोपरागे सक्रान्तौ गमने चैव राशिषु ॥
मिहिरे वै चतुर्दश्यां द्वादश्यां सप्तमीषु च।

(१) आदित्युराण इति क० ।
(२) प्रवक्ष्यन्त इत्ययं पाठः समीचीनो भवितुमर्हति ।

षडशीतिमुखे चैवायने दक्षिणोत्तरे ।
प्रदानि नित्यं भक्तानां विशेषात्तु प्रकीर्तिता ॥
तिथिषु दशगुणं वदन्ति दानम्
शतगुणितं त्वयनावसाने ।
दशगुणितं ग्रहोपरागे
विषुवति चाक्षयं युगान्ते ॥

शातातपः ।

अयनेषु तु यद्दत्तं षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम् ॥

शिवरहस्ये ।

मन्वन्तरादिपुण्या या या च सोपपदा तिथिः ।
अमावास्यासमा ज्ञेया दानाध्ययनकर्मसु ॥

शङ्खः ।

यदा विष्टिर्व्यतीपातो भानुवारेण संयुतः ।
पद्मको नाम तद्योगः अयनाच्च चतुर्गुणम् ॥
यदा षष्ठ्यां व्यतीपातो भानुवारस्तथैव च ।
पद्मको नाम तद्योगो ह्ययनाच्च चतुर्गुणः ॥
विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वपि दुर्लभः ॥

इति प्रकीर्णपुण्यकालः ।

## अथ निमित्तानुरोधेन सदा पुण्यकालः ।

विष्णुधर्मोत्तरे ।

काल. सर्वोऽपि निर्दिष्टः पात्रं सर्वमुदाहृतम् ।
श्रवाप्तस्य प्रदाने तु नात्र कार्य्या विचारणा ।
सदैव दानकालस्तु यदोभयमुपस्थितम् ॥

तथा ।

न कालनियमो दिष्टो दीयमाने प्रतिग्रहे ।
तदैव दानमक्षोकं यदा पात्रधनागमः ॥
न हि कालं प्रतीक्षेत जलन्दातुं तृषान्विते ।
श्रन्नोदकं सदा देयमित्याह भगवान् मनुः ॥

स्कान्दे ।

अर्द्धप्रसूतां गां दद्यात् कालादि न विचारयेत् ।
कालः स एव परमो यदा वै विमुखी तु गौः ॥

व्यास ।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे च गौरेव नरकोद्धारणाय वै ॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गां ।
शक्तोऽन्योऽपि तदा दत्त्वा श्रेयो दद्यात् मृतस्य च ॥

वाराहपुराणे ।

व्यतीपातोऽथ सङ्क्रान्तिस्तथैव ग्रहणं रवेः ।
पुण्यकालास्तथा सर्वे यदा मृत्युरुपस्थितः ।
तदा गो-भू-हिरण्यादि दत्तमक्षयतामियात् ॥

अदृष्टमश्रुतं दानं भुक्ता चैव न दृश्यते ।

इति व्यासस्मृतिवचनविशेषः(१) शाखावच्छेदे विषये प्रवर्त्तते, सूर्योपरागेण तमाङ्गः समयं समं ।

विष्णुधर्मोत्तरे ।

अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः ।

संस्कारेषु च पुत्रस्य तदक्षय्यं प्रकीर्त्तितम् ॥

विष्णुपुराणे ।

यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितं ।

तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितं ॥

इति निमित्तानुरोधेन सदा पुख्यकालः ।

## अथ तिथिविशेषेण वर्ज्यानि ।

अथ चतुर्थीवर्ज्यं ।

तत्र मार्कण्डेयः ।

सिंहादित्ये कृष्णपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।

मिथ्याभिदूषणं कुर्यात् तस्मात्पश्येन्न तं तदा ॥

इति चतुर्थीवर्ज्यं ।

## अथ सप्तमीवर्ज्यानि ।

भविष्यत्पुराणे ।

(१) इति व्यासस्मृतिवचनादिपीव इति ग० ।

सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् ।
न चाप्यामलकैः स्नानं न कुर्यात् कलहं नरः ।
सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनम् ॥

बुधः ।

निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनम् ।
सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनम् ॥

इति सप्तमीवर्ज्यानि ।

---

## अथ पर्वानुष्ठेयम् ।

तत्र मनुः ।

सावित्रान् शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः ।

'सावित्राः' सवितृदेवताकाः ।

अस्मिंश्च होमे गायत्री मन्त्रः, अक्षतश्च द्रव्यं ।

यदाह गृह्यः ।

शान्तिकामस्तु जुहुयाद्गायत्र्या चाक्षतैः शुचिः ।

शान्तिश्च धर्मेणैहिकानिष्टनिवृत्तिः ।

पर्वाणि तु विष्णुपुराणे दर्शितानि ।

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ।
तैलं स्त्री मांससम्भोगो पर्वस्वेतेषु नो भवेत् ॥ इति ।

'नित्यशः' इति वचनात् पर्वस्ववश्यं कर्त्तव्योऽयं होमः, अस्य च सावित्रहोमस्य शान्तिः फलं ।

विष्णुः ।

पर्वसु स्वयं निस्यहोमान् कुर्यादलङ्कृतस्तिष्ठेद्देवमाचारसेवी स्यात् ।

कात्यायनः ।

पौर्णमासीममावास्यां यद्यः स्नापो विधीयते ।

अनाहिताग्नेरप्येव पश्चादग्नेर्विधीयते ॥

'अनाहिताग्नि' स्मार्त्ताग्निमान् ।

आपस्तम्बः ।

दिवादित्यस्य सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्या-
निशाया स्वाधीयस्तोमात्मनोगुप्तिमिच्छेत् । प्रायत्यब्रह्मचर्य्यकालेन
च जायया सहैतां रात्रिं कुर्यात्सन्नतो वसत ।

'स्वाधीयसी' श्रम । 'गुप्ति' रक्षा ।

षट्त्रिंशन्मते कात्यायनस्मृतौ च ।

मासे नभस्यमावास्या दर्भा ग्राह्यो नव स्मृत ।

अयातयामास्ते दर्भा नियोज्यास्तु पुनः पुन इति ॥

तथाच कात्यायनेनामावास्यायां दर्भच्छेदं विधायोक्तम् ।

पितृ-देवप्रधाने च यस्मादक्षयादिति ।

तथा ।

ते द्विजेन नियोक्तव्या दैवे पित्र्ये च कर्मणि । इति ।

तस्मात्पित्रादिकार्य्यार्थं कुशा ग्राह्या एव ।

मरीचिना तु श्रावणामावास्यायां दर्भोपादानमुक्तम् ।

मासे नभस्यमावास्या तस्या दर्भोच्चयो मत ।

अयातयामास्ते दर्भा विनियोज्या पुन पुन ॥

यत्तमावास्यायां कुशच्छेदनिषेधः स तूक्तव्यतिरिक्तविषयः ।

इति पर्वानुष्ठेयम् ।

## अथ पर्ववर्ज्यानि ।

तत्र बौधायनः ।

पर्वसु च नाधीयीत, न मांसमश्नीयात्, न च स्त्रियमुपेयात्,
पर्वसु हि रक्षः-पिशाचव्यभिचारिविचरितमिनीति ।

विष्णुः ।

पर्वसु न तृणमपि छिन्द्यात् ।

पैठीनसिः ।

न पर्वसु तैलं क्षुरं मैथुनं मांसमित्युपेयात् ।

'उपेयात्' उपयुञ्जीत ।

विष्णुपुराणे चतुर्दश्यादिपञ्चपर्वाण्यभिधायोक्तम् ।

तैलस्त्रीमांससम्भोगी यः पर्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ॥

मनुः ।

चतुर्दश्यष्टमी दर्शः पौर्णमास्यर्कसंक्रमः ।
एषु स्त्री-तैल-मांसानि दन्तकाष्ठानि वर्जयेत् ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः ।
तैलं मांसं व्यवायञ्च(१) क्षुरञ्चैव विवर्जयेत् ॥

हारीतः ।

---

(१) 'व्यवाय' स्त्रीसंसर्गमित्यर्थः ।

तैलं मांसं भगं क्षौरं पर्वकालेषु वर्जयेत् ।
एतेष्वलक्ष्मीर्वसति पुण्यकालेषु नित्यशः ॥
षष्ठ्यष्टम्योः तथालक्ष्मीर्नित्यमेव कृतालयाः ।
भगे मांसे क्षुरे तैले नित्यं पर्वसु तिष्ठति ॥

वृद्धशातातपः ।

दन्तकाष्ठममावास्या मैथुनं च चतुर्दशीम् ।
हन्ति सप्तकुलं तस्य तैलग्रहणमष्टमी ॥

यमः ।

श्राद्धन्नं कुलं हन्ति शिरोऽभ्यङ्गश्चतुर्दशी ।
मांसाशने षष्ठदशी कामधर्मं तथाष्टमी ॥

मत्स्यपुराणे ।

छिनत्ति वीरुधो यस्तु वीरुत्स्थे निशाकरे ।
पत्रं वा पातयत्येषां ब्रह्महत्यां स विन्दति ॥

"वीरुत्स्थे वनस्पतिगते ।

पैठीनसिः ।

अमावास्यायां न छिन्द्यात्[१] कुशाश्च समिधस्तथा ।
सर्व्वावशिते सोमे हिंसाया ब्रह्महा भवेत् ॥

क्वचिदमावास्यायां न छिन्द्यादिति पाठः । पित्रादिकार्य्यार्थं कुशा ग्राह्या एवेति पर्व्वानुष्ठेयप्रस्तावे दर्शितम् ।

तथा ।

---

(१) नामावास्यायां हरितानि छिन्द्यादिति ख० ग० चिह्नितपुस्तक पाठः, परन्त्वयं न समीचीनः ।

माष सन्ध्या परान्नञ्च तिलपिष्ट तथैव च।
अमावास्यां न सेवेत रात्रौ मैथुन-भोजने॥

स्मृतिसमुच्चयात्।

माष सन्ध्या परान्नञ्च परभोजन-मैथुने।
तैल माष शिलापिष्टममावास्या विवर्जयेत्॥
सूर्य्यग्रहगते सोमे परान्न यो हि भक्षयेत्।
तस्य मासगत पुण्य यस्यान्न तस्य तद्भवेत्।
अमावास्यासु सर्व्वासु नववस्त्र न धारयेत्॥

इति पर्व्ववर्ज्यानि।

---

## अथ कालविशेषेण नामावर्ज्यानि।

स्कन्दपुराणे।

शिर-कपालमान्त्राणि नख-चर्म-तिलास्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत्॥

'शिर' नारिकेल। 'कपालम्' अलाबु। 'अन्त्र' पटोलीफल। 'नख' निष्पावा। 'चर्म' मसूर्म। 'तिला' वार्त्ताक, इति वृद्धाव्याकुर्व्वते।

चतुर्विंशतिमते तूत्तरार्द्धमेव पठ्यते।
षट्स्वेंद्रूद्धगमनमष्टम्यादिषु वर्जयेत्।

व्यास।

षष्ठ्यष्टमी त्वमावास्या पक्षद्वयचतुर्दशी।
अत्र सन्निहित पाप तैले मांसे भगे क्षुरे॥

अत्र केचिदाहुः। षष्ठ्यादिषु क्रमात्तैलादीनां निषेधः।

षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा।

कामभोगश्चतुर्दश्याममावास्या क्षुरक्रिया॥

इति स्मरणात्। ततश्चान्यत्र तैलादौ दोषाभाव इति। तदयुक्तं। अन्यत्रापि तैलादिनिषेधात्।

तत्र मनुः।

मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्दशी।

अष्टमी ग्राम्यधर्मेषु ब्यलनमपि पातयेत्॥

'ग्राम्यधर्म' मैथुनम्।

क्षुरकर्म चतुर्दश्यां अमावास्यां च मैथुनम्। इति।

षट्त्रिंशन्मते।

सङ्क्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे।

वस्त्रं संपीडयेन्नैव न क्षुरेणापि हिंसते॥

तिलतैलनिषेधश्च तिथ्यन्तरप्रस्तावे दर्शितः।

व्यासोऽपि।

तैलञ्च न स्पृशेद्वाम-षष्ठ्यादीन् छेदयेच्च च।

पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ॥

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा।

वर्ज्यान्येतानि पर्वाणि रविसङ्क्रान्तिरेव च॥

तैल-स्त्री-मांससम्भोगी पर्वस्वेतेषु यो भवेत्।

विण्मूत्रभोजनं नाम प्रयाति नरकं नृप॥

बृहस्पतिः।

अमावास्येन्दुसङ्क्रान्ति-चतुर्दश्यष्टमीषु च ।
नरश्चण्डालयोनौ स्यात्तैल-स्त्री-मांससेवनात् ॥

पुराणात् ।

कुहू-पूर्णेन्दु-सङ्क्रान्ति-चतुर्दश्यष्टमीषु च ।

अत्रोत्तरार्द्धं पूर्ववोक्तस्य तस्मादत्रापि तैलादिनिषेधे सिद्धे तिथि-विशेषसम्बन्धेन तैलादिविशेषनिषेधो दोषविशेषार्थः । अत्र च यावच्चष्ठ्यादितिथिकालं तैलादिनिषेधः, न तु षष्ठ्यादिसम्बन्धादहोरात्रादिकल्पनं प्रमाणाभावात् ।

वामनपुराणे ।

नन्दासु नाभ्यङ्गमुपाचरेत
क्षौरञ्च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित्परिवर्जनीया
भद्राणि सर्वाणि समारभेत ॥
नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरञ्च शुक्रे च कुजे च मांसं ।
बुधेषु योषां न समाचरेत
शेषेषु सर्वाणि सदैव कुर्यात् ॥
चित्रासु हस्ते श्रवणे च तैलम्
क्षौरं विशाखा-प्रतिपत्सु वर्ज्यं ।
मूले मृगे भाद्रपदासु मांसम्
योषिन्मघा-कृत्तिकयोत्तरासु ॥

चतुर्दश्यष्टमी-दर्श-पौर्णमास्यर्कसङ्क्रमाः ।

एषु स्त्री-तैल-मांसानि दन्तकाष्ठं विवर्जयेत् ॥

देवलः ।

पञ्चदश्यां चतुर्द्दश्यां अष्टम्याञ्च विशारद ।
तैलं मांसं व्यवायञ्च क्षुरञ्च परिवर्जयेत् ॥

यमः ।

यथा सिताख्यष्टमीषु भूताहेन्दुक्षये तथा ।
तैलाभ्यङ्गं चौरकर्म स्त्रीसङ्गञ्च विवर्जयेत् ॥

वाराहपुराणे ।

चतुर्द्दश्यां तथाष्टम्यां पञ्चदश्यां च पर्व्वसु ।
तैलाभ्यङ्गन्तथा भोगं योषितश्च विवर्जयेत् ॥
न रक्तं मोदकञ्चापि न निशायां तु गोमयम् ।
गोमूत्रञ्च प्रदोषे च गृह्णीयाद् बुद्धिमान्नरः ॥

निशायामपि मृदुदकाभ्यामिति सम्बध्यते । अयं चाहृतकर्म्मार्थत्वेन निशायां ग्रहणनिषेधः ।

स्कान्दे ।

स्नानञ्चैव महादानं स्नाध्यायं पितृतर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥

माण्डव्यः ।

श्रुतिमेध-जातकाद्यमशन-वाचा-प्रतिमाद्याः ।
रविभवनस्थे कार्य्या जीवे न कार्य्या विवाहस्तु ॥

भविष्यत्पुराणे ।

सुप्ते विष्णौ निवर्त्तन्ते क्रियाः सर्व्वाः शुभादिकाः ।

विवाह-व्रतबन्धादि-चूड़ा-संस्कारदीक्षणम् ॥
यज्ञो गृहप्रवेशश्च प्रतिष्ठा देव-भूभृताम् ।
पुण्यानि यानि कर्माणि न स्युः सुप्ते जगत्पतौ ॥
इति कालविशेषेण नानावर्ज्यानि ।

## अथ क्षौरकर्मनिषिद्धकालः ।

तत्र व्यासः ।
क्षौरे शनैश्चरादित्य-भौमाश्चोररचैव च ।
तथा प्रतिपद् रिक्ता तिथिश्च परिवर्जयेत् ॥
ज्योतिःशास्त्रे ।
नाभ्यक्तभुक्तरणकालनिराशनानाम्
न स्नातसुप्तगमनाद्युपकभूषितानाम् ।
सन्ध्या निशार्क सुत-सौरदिनेश्वराणाम्
क्षौरं हितं भवति चाह्नि न चापि विद्या ॥ इति ॥
मार्कण्डेयः ।
अष्टमी च तथा षष्ठी नवमी च चतुर्दशी ।
क्षुरकर्मणि वर्ज्या च पर्वसन्धिस्तथैव च ॥
इति क्षौरकर्मणि निषिद्धकालः ।

## अथ श्मश्रुकर्मणि निषिद्धकालः ।

मरीचिः ।
निराशनस्य सुप्तस्य तिष्ठतश्च तथैव च ।
स्नाय भुक्तवतश्चैव स्नातस्य क्षपितस्य च ।

यावायुद्धोद्यतस्यापि श्मश्रुकर्माणि वर्जयेत् ॥

इति श्मश्रुकर्मनिषिद्धकालः।

## अथ मांसवर्जनकालः।

वह्निपुराणे ईश्वरवचनं।

यदि नाम चतुर्दश्यां सदा मांसं विवर्जयेत्।
वर्जयेदयने मुख्ये कृतस्वर्गमतिर्नरः ॥
चतुर्थीं चाष्टमीं चैव द्वादशीं च चतुर्दशीं।
तथा पञ्चदशीं चार्थ्याः षड़शीतिमुखानि च ॥
संक्रमं चापि सूर्यस्य विषुवे चापि वार्षिके।
मांसात्तु विरतो मर्त्यो याति स्वर्गं दिनत्रयं ॥
अयवाप्ययुजं मासं वर्ज्जयेच्चामिषभक्षणं।
बहुमाससहस्रं पुण्यं लभेतायपुजाग्नरः ॥
मांसभोजनसन्त्यागात् पुरुषः श्रद्धमानसः।
यो नरः कार्त्तिके मासे मांसन्तु परिवर्ज्जयेत्।
संवत्सरस्य लभते पुण्यं मांसविवर्ज्जनात् ॥

इति मांसविवर्जनकालः।

## अथ शयने विहित-निषिद्धकालः।

तत्र दत्तः।

प्रदोषपश्चिमौ यामौ वेदाभ्यासरतो नयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

शंख-लिखितौ।

त्रयाणां वर्णानां पूर्वरात्रे जागरणम् ।

प्रचेता ।

न सन्ध्यायां न शयने ।

अङ्गिराः ।

नोच्छिष्टो न दिवा सुप्यात् सन्ध्ययोर्न च भस्मनि ।

व्यास ।

न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ।

मनु ।

न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ।

परिश्रान्तः पुनर्न स्वपेदित्यर्थः ।

गौतम ।

अपररात्रमधीत्य पुनर्न संविशेत् ।

हारीत ।

ब्राह्मे मुहूर्त्ते प्रतिबुध्य स्वाध्यायमावर्त्त्य न प्रतिसंविशेदिति ।

आपस्तम्ब ।

मिथुनीभूय न च तया सह सर्वां रात्रिं शयीत ।

इति शयने निषिद्धकाल ।

---

## अथ दन्तधावनकालनिर्णयः ।

तत्र कात्यायन ।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।

परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥

आयुर्बलं यशो वर्चः प्रजाः पशु-वसूनि च ।
ब्रह्म प्रज्ञां च मेधाञ्च त्वन्नो धेहि वनस्पते ॥

इति मन्त्रः ।

व्यासः ।

श्राद्धार्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ।
श्राद्धे यज्ञे च नियमाच्चाद्यात् प्रोषितभर्तृका ॥

व्यासः ।

श्राद्धे जन्मदिने चैव विवाहे सुखदूषिते ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ॥

गर्गः ।

आद्यतिथौ नवम्याञ्च षष्ठ्यां चन्द्रमसस्तथा ।
आदित्यवार-श्राद्धेषु वर्जयेद्दन्तधावनम् ॥

कात्यायनः ।

प्रतिपद्दर्श षष्ठीषु नवम्याञ्च विशेषतः ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

व्यासः ।

प्रतिपद्दर्श-षष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैः पञ्चकाष्ठैश्च जिह्वोल्लेखः सदैव तु ॥

व्यतीपात सङ्क्रान्ति-मन्दा-पर्वसु दन्तकाष्ठनिषेधः कालविशेषश्च नानावचनप्रमाणे दर्शितः ।

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

क्वचित्तूत्तरार्द्धमेव पठन्ति।

अथवा द्वादशगण्डूषैः पत्रैर्वा शोधयेन्मुखम्।

तथा।

योमोहात् स्नानवेलाया भक्षयेद्दन्तधावनम्।
निराशास्तस्य गच्छन्ति देवताः पितरस्तथा॥
पालाशमासनं चाथ दन्तकाष्ठञ्च पादुके।
वर्जयेत्तु प्रयत्नेन सर्वमाश्वत्थमेव च॥

मध्याह्नस्नानविषयमेतत् प्रातःस्नाने विधानात्।

यदाह पराशरः।

दन्तान् पूर्वमधो पश्चात् प्रातः सिञ्चेत् लोचनम्।
तोयपूर्णमुखो शीघ्रे शीते च शरदि स्मृतः।
भक्ष्यञ्च भक्षयेत् पूर्वं मध्याह्ने तु तत्त्यजेत्।

इति दन्तधावनकालनिर्णयः।

---

## अथ सन्ध्याकालनिर्णयः।

तत्र गौतमः।

तिष्ठेत्पूर्वमासीतोत्तरां सज्योतिषि दर्शनाद्यागत।

सज्योतिषि काले प्रारभ्य ज्योतिरन्तरदर्शनान्निष्ठन्निरित्यर्थः।

स्मृतेः।

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि।

अथ ब्राह्मणपरत्व कर्माभिधायोक्तः।

शातातपः।

अनर्चां तु यः पूर्वां सादित्यां चैव पश्चिमां ।
नोपासीत द्विजः सन्ध्यां स भ्रष्टो ब्राह्मणः स्मृत ॥

योगियाज्ञवल्क्यः ।

सायं सन्ध्यामुपासीत नास्तगे चोद्गते रवौ ।

व्यासः ।

सूर्य्ये तमसि संप्राप्ते पादशौचक्रियान्वितः ।
बहिः सन्ध्यामुपासीत कुशपाणिः समाहितः ॥

क्वचित्तु सूर्य्येऽस्ताचलसंप्राप्ते इति पाठः ।

मनुः ।

पूर्वां सन्ध्यां जपन् तिष्ठेत्सावित्रीमार्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥

याज्ञवल्क्यः ।

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात् ॥
अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः ।
सा तु सन्ध्या समाख्याता ऋषिभिस्तत्त्वदर्शिभिः ॥

इति उक्त्वा "तत्र सन्ध्यामुपासीतेत्युक्तं, तत्पूर्वदर्शितवचननिचय-पर्यालोचनयैवं व्याख्येयं, पूर्वसन्ध्योपास्तिः सूर्य्यदर्शनावधिका पश्चिमसन्ध्योपास्तिर्नक्षत्रदर्शनावधिकेति ।

श्रुतिः ।

एवं विद्वान् सायं प्रातश्च सन्ध्यामुपास्त इति ।

अत्र सायंशब्देन पूर्वोक्त एव सन्ध्याकालो लक्ष्यते ।

यदा तु ।

नक्षत्रदर्शनात् सन्ध्या सायं तत्परतः स्थिता ।
तत्परा रजनी ज्ञेया तत्र धर्मान्विवर्जयेत् ॥

इति वचनात् नक्षत्रदर्शनोर्द्ध्वकालस्य सायंशब्देनोपादानं तदा पूर्ववचनपर्य्यालोचनया कश्चित्सूर्य्यकालातिक्रम एव वेदितव्यः ।

योगियाज्ञवल्क्यः ।

ह्रासवृद्धी तु सततं दिवसानां यथाक्रमं ।
सन्ध्या मुहूर्त्तमात्रन्तु ह्रासे वृद्धौ समा स्मृता ॥

विष्णुपुराणात् ।

सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

पुलस्त्यः ।

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन् गच्छेदधोगतिं ॥

एवंविधे एति व्यवस्थामाह ।

सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥

एवञ्च यानि सूतकादौ सन्ध्यानिषेधपराणि वचनानि तानि समन्त्रप्रयोगनिवृत्तिपराणीति मन्तव्यं, अञ्जलिप्रक्षेपश्च उच्चार्यमाणैव सावित्र्या कार्यः ।

तथाच पैठीनसिः ।

सूतके तु सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्वीत ।

इति सन्ध्याकालनिर्णयः ।

## अथ सन्ध्याकालवर्ज्यानि ।

तत्राह मनुः ।

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहाराज्जायते व्याधिः गर्भो रौद्रश्च मैथुनात् ।
निद्रातो जायतेऽलक्ष्मीः स्वाध्यायादायुषः क्षयः ॥

वृद्धमनुः ।

आहारं मैथुनं निद्रां सन्ध्याकाले विवर्जयेत् ।
कर्म चाध्ययनं वापि तथा दान-प्रतिग्रहौ ॥
आहाराज्जायते व्याधिः गर्भो रौद्रश्च मैथुनात् ।
स्वपनात्तस्मादलक्ष्मीकः कर्म चैवाच निष्फलम् ॥
अध्येता नरकं याति दाता नाप्नोति तत्फलं ।
प्रतिग्राही भवेत्पापी तस्मात् सन्ध्यां विवर्जयेत् ।
दाता वै नरकं याति ग्रहीताधो निमज्जति ॥

इति सन्ध्याकालवर्ज्यानि ।

---

## अथ रात्रिकरणीयवर्ज्यानि ।

रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम् ॥
विशेषतो निशीथे तु न शुभ कर्म शर्मदे ।
अतोऽपि वर्जयेत्प्राज्ञो दानादिषु महानिशाम् ॥

देवलः ।

राहुदर्शन-संक्रान्ति-विवाहात्यय वृद्धिषु ।



अन्नदानादिकं कुर्य्याच्चिन्नि काम्यव्रतेषु च ॥

वशिष्ठः ।

ग्रहणोद्वाह-संक्रान्ति-यात्रार्त्ति-प्रसवेषु च ।

दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

यात्रादाविति पाठः ।

यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने ।

दानान्येतानि शस्तानि रात्रौ देवालये तथा ॥

महाभारते ।

रात्रौ दानं न शंसन्ति विना त्वभयदक्षिणां ।

विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥

विष्णुधर्म्मोत्तरे ।

पूजनस्यानियोगाच्च यात्रायामपि पूजनं ।

तच रात्रौ तथा ज्ञेयं गवाद्युत्सवे पूजनं ॥

मार्कण्डेयपुराणे ।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयं ।

स्नानं तत्र न कुर्वीत काम्य-नैमित्तिकादृते ॥

विश्वामित्रः ।

महानिशाले विज्ञेयं रात्रौ मध्यमयामयोः ।

नैमित्तिकं तदा कुर्य्यान्नियन्तु न मनागपि ॥

क्वचित् 'न तु काम्यं मनागपीति पाठः ।

भविष्यत्पुराणे ।

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।

नैमित्तिकं तु कुर्वीत स्नानं दानञ्च रात्रिषु ॥
ग्रहणोद्वाह-सङ्क्रान्ति यात्रार्त्ति प्रसवेषु च ।
श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥ इति ।
विवाह व्रत सङ्क्रान्ति प्रतिष्ठा-ऋतु जन्मसु ।
तथोपराग पातादौ स्नाने दाने निशा शुभा ॥
'ऋतु' गर्भाधानम्, 'पात' व्यतीपातः ।
पुत्रजन्मनि यज्ञे च तथा सङ्क्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥
तथा ।
पुत्रजन्मनि यात्रायां शर्व्वर्य्यां दत्तमक्षयम् ।
इति रात्रिकरणीयवर्ज्यानि ।

---

## अथ चतुष्पथासेवनकालः ।

तत्र व्यासः ।
मध्यन्दिने उष:काले अर्द्धरात्रे च सर्व्वदा ।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥
मनुः ।
मध्यन्दिनेऽर्द्धरात्रे [illegible] श्राद्धं भुक्त्वा तु सामिषं ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथं ॥
अथ कालविशेषावलोकनीयानवलोकनीयानि ।
कात्यायनः ।
श्रोत्रियं सुभगं गाञ्च अग्निमग्निचितं तथा ।

प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥

वैयाघ्रपादः ।

श्रोत्रियं सुभगं गाञ्च अग्निमग्निचितं तथा ।
यः पश्येदायतप्राण आपद्भ्यः स प्रमुच्यते ॥

कात्यायनः ।

रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिं ।
गुरुमग्निं तथा सूर्यं प्रातः पश्येत्समाहितः ॥
लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशन ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ।
एतानि सततं पश्येन्नमस्येच समाहितः ॥
यस्त्वनिष्टानिदं सर्वं प्रातर्धार्मिकान् शुचिः ।
ज्ञानविद्वांस्तथ विद्वान् दृष्ट्वा पापात् प्रमुच्यते ॥
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येव तस्मात् पश्येत नित्यशः ॥
पापिष्ठं दुर्भगं मत्तं नग्नमुत्कृत्तनासिकं ।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणं ॥
इति कालविशेषेणावलोकनीयानवलोकनीयानि ।

---

## अथ नदीनां रजःकालनिर्णयः ।

तत्र मार्कण्डेयः ।

दिमासं सरितः सर्वा भवन्ति हि रजस्वलाः ।
अप्रशस्त तत स्नान वर्षादौ नववारिणा ॥

कात्यायन ।

मासद्वयं श्रावणादौ सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

तथा ।

नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षि पितृतर्पणं ॥
धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ते परिकीर्त्तिताः ॥
सिंह-कर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
न स्नानादीनि कर्माणि तासु कुर्वीत मानवः ॥

योगियाज्ञवल्क्यः ।

अप्रशस्तास्तथा ज्ञायो नद्यः प्रथमवेगिकाः ।
मनोभिलाष केनापि यत्र तीर्थादिषि स्मृताः ॥

क्वचिन्नियमा इति पाठः । 'तीर्थ,' जलावतारणमार्गः ।

तथाच स्मृत्यन्तरे ।

अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः ।
दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदकम् ॥

याज्ञवल्क्यः ।

यावन्नोदेति भगवान् दक्षिणाशाविभूषणः ।
तावद्रजोवहा नद्यो वर्जयित्वा तु जाह्नवीम् ॥
प्रथमे कर्कटे देवि त्र्यहं गङ्गा रजस्वला ।
सर्वा रक्तवहा नद्य: करतोया प्रकीर्त्तिता (१) ॥

---

(१) करतोयाम्बुवाहिनीति क० ।

कात्यायन ।

प्रावृट्काले महानद्यः सन्ति नित्यं रजस्वलाः ।
चतुर्दशदिने सम्प्राप्ते शुद्धा भवति जाह्नवी ॥
आदित्यदुहिता गङ्गा प्लक्षजा च सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसञ्ज्ञकाः ॥
आदित्यदुहिता गङ्गा प्लक्षजा च सरस्वती ।
अपर्युषितपापास्ते नदीमित्य पिबन्ति ये ॥
गङ्गा च यमुना चैव प्लक्षजा च सरस्वती ।
रजसा नाभिभूयन्ते ग्रीष्मस्यापि महानद ॥
कालिन्दी गोमती गङ्गा पविचा देवनिर्मिता ।
सामान्याद्गुणयोगाच्च रजो नाभिभवत्यत ॥
गङ्गा धर्मद्रवी पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोयोगाः सर्वाखपि चामलाः ॥

निगम ।

प्रतिस्रोतोरजोयोगो रथ्याजलनिवेशनं ।
गङ्गाया नैव दुष्यन्ति नहि धर्मद्रवं स्वयं ॥
या ग्रीष्ममुपगच्छन्ति यौषे सुचरितो भुवि ।
तासु स्नानं न कुर्वीत प्राहृषेण्यासुदर्शनात् ॥

कात्यायन ।

या ग्रीष्ममुपगच्छन्ति यौषे सुमरितो भुवि ।
तासु प्राहृषि न स्नायादपूर्णे दशवासरे ॥
कर्कटादौ रजोदुष्टा गौतमी वासरत्रय ।

चन्द्रभागा सती सिन्धुः सरयूर्नर्मदा तथा ॥
उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः ।
पिपासवस्तु गच्छन्ति संहृष्टाश्च शरीरिणः ॥
विच्छन्दांसि च सर्वाणि ब्रह्माद्याश्च दिवौकसः ।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः ॥
समागमस्तु यत्रैषां तत्रासौ हृदयोऽमलः ।
नूनं सर्वं क्षयं याति किमुतैकं नदीरजः ॥
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥
स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

¹स्वर्धुनी गङ्गा ।

नवाम्बु शुचि भूमिष्ठं अहादूर्ध्वमिति स्थितम् ।
प्रवाहवेगेन सत्तं पुराणं सततं भुवि ॥

इति नदीनां रजःकालनिर्णयः ।

---

## अथाश्वत्थसागरस्पर्शास्पर्शकालः¹ ।

अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
कालवारे स्पृशेत् पूर्वं उत्तरं पर्वणि स्पृशेत् ॥

क्वचित्तु मन्दवारे इति पाठः ।

इत्यश्वत्थसागरस्पर्शास्पर्शकालः ।

---

## अथ स्नानकालनिर्णयः ।

तच कात्यायनः ।

यथाऽहनि तथा प्रातर्नित्यं स्नायादतन्द्रितः ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥
स्रवत्येव दिवारात्रौ प्रातः स्नानं विशोधनम् ।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ॥

वैयाघ्रपादः ।

प्रातः सङ्क्षेपतः स्नानं शौचार्थन्तु तदिष्यते ।
मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम् ॥
प्रातःस्नायी भवेन्नित्यं मध्यस्नायी भवेत्सदा ।
सप्तजन्मकृतं पापं त्रिवर्षेण व्यपोहति ॥
उषस्युषसि यत्स्नानं चन्द्र-सूर्यग्रहे तथा ।
प्राजापत्येन तत्तुल्यं नृणामनुदिते रवौ ॥

चतुर्विंशतिमते ।

उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥
प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥

योगियाज्ञवल्क्यः ।

उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः ।
तिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विना ॥

व्यास. ।

द्वादश्यां अपरपक्षे तु न स्नायात् कथञ्चन ।
शुभमम्लानमिच्छद्भिर्धनधान्यपरैरपि ॥
दशमी पुत्रनाशाय स्त्रीनाशाय त्रयोदशी ।
द्वितीयाभयनाशाय स्नाने चैतानि वर्जयेत् ॥

कश्चित्तृतीयपादोऽन्यथा पठते 'तृतीया भर्तृनाशायेति ।

वसिष्ठ ।

प्रतिपद्धनपत्ये स्यात्तृतीयायां अपत्यक ।
दशम्यामधम(१) स्नाने सर्वं हन्ति त्रयोदशी ॥

स एव ।

दशमी नवमी चैव तृतीया च त्रयोदशी ।
प्रतिपच्च विशेषेण स्नाने तास्तु विवर्जयेत् ॥

षट्त्रिंशन्मते ।

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतो ।
नवम्याञ्च न चैतच्च(२) निमित्तात्परवर्जनं ॥

यम ।

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतो ।
पुत्र कुर्वन्निराचष्टे मातापित्रोस्तु जीवितं ।
कुर्यादन्यतमेऽतीते राहुग्रस्ते दिवाकरे ॥

गर्ग-जाबाली ।

त्रयोदश्यां तृतीयायां दशम्यां चैव सर्वश ।

(१) दशम्यामधम इति ख० ।
(२) न वा तच्चेति ग० ।

शूद्र-विट्क्षत्रिया स्नानं नाचरेयुः कदाचन ॥

स्मृत्यन्तरात् ।

भोगार्थं क्रियते यत्तु स्नानं यादृच्छिकं नरैः ।

तन्निषिद्धं दशम्यादौ नित्ये नैमित्तिके न [illegible] ॥

गर्ग-जाबाली ।

क्रियते वा न वा यच्च शास्त्रचन्नणया विना ।

मलव्यपोहनफलं स्नानं यादृच्छिकन्तु यत् ॥

तत् न कुर्यात् तृतीयायां चतुर्दश्यां तथा तिथौ ।

सप्तम्यां भूतिमन्विच्छन् दशम्यामपि पण्डितः ॥

तथा ।

नित्यं न हापयेत्स्नानं काम्यं नैमित्तिकञ्च यत् ।

दशम्यामपि कर्त्तव्यं न तु यादृच्छिकं क्वचित् ॥

बौधायनः ।

विना तु प्रातस्नानं न स्नायाद्दशमीषु च ।

वशिष्ठ-पैठीनसी ।

पुत्रजन्मनि सङ्क्रान्त्यां श्राद्धे जन्मदिने तथा ।

नित्य स्नानञ्च कर्त्तव्यं तिथिदोषो न विद्यते ॥

वर्जयेदित्यनुवृत्तावापस्तम्बः ।

अस्तमिते च स्नानं ।

पराशरः ।

दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते ।

अप्रशस्तं निशि स्नानं राहोरन्यत्र सूतकात् ॥

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा।
सोमस्यापि तथा रात्रौ स्नानं पुत्र विधीयते॥
अग्रस्तं निशि स्नानं राहोरन्यत्र दर्शनात्।
पराक्षपि तथैवान्यैर्नाशिरस्कं कथञ्चन॥

वसिष्ठः।

पुत्रजन्मनि यज्ञे च तथा सङ्क्रमणे रवेः।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि॥

व्यासः।

स्नानं दानं जपः श्राद्धं अनन्तं राहुदर्शने।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्॥

तथा।

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु॥

पराशरः।

उपरागे परं स्नानं स्मृते दिन उदाहृतम्।
महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम्॥
प्रदोष-पश्चिमौ यामौ दिनवत् कर्म चाचरेत्।
दिवा यदाहृतं तोयं हता सर्वंपुतन्तु तत्॥
रात्रिस्नाने तु सम्प्राप्ते स्नायाद्वाऽनलसन्निधौ।
उच्छिष्टाद्युपघातादौ स्नानं नैमित्तिकं स्मृतम्।
चन्द्र-सूर्योपरागे च तथैव प्रसूतके॥

मनुः।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

'भुक्त्वे'ति न नित्यस्नानस्य निषेधः तस्य भोजनानन्तरमाप्रसादात्। नापि चाण्डालस्पर्शनिमित्तस्य "नाशुचिः क्षणमपि तिष्ठेदिति वचनविरोधप्रसङ्गात् विधिप्राप्तनिषेधासम्भवस्य तैलाभ्यङ्गकालनिर्णये दर्शितत्वाच्च। तस्मादयं यादृच्छिकस्नाननिषेधोऽयं, आतुरस्य तु सर्वदा वारुणस्नाननिषेधः। 'अजस्र' अनवरतं।

न स्नायादुत्सवेऽतीते माङ्गल्यानि निवर्त्य च।
अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवताम् ॥

मार्कण्डेयः ।

महानिशान्तु विज्ञेया रात्रौ मध्यमयामयोः ।
नैमित्तिकं तदा कुर्यात् काम्यं न च मनागपि ॥

क्वचित्तु नित्यन्तु न मनागपीति पाठः।

अस्माच्च वचनान्नित्य स्नानं कथञ्चिदतिक्रान्तस्नानकालं महानिशायामपि रात्रावपि कर्त्तव्य, न तु कर्मणो लोप इति गम्यते ।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वय ।
स्नानं तत्र न कुर्वीत काम्यं नैमित्तिकादृते ॥

अत्र काम्यशब्देन फलार्थं स्नानमुच्यते, पूर्ववाक्ये तु यादृच्छिकमित्यविरोधः ।

विश्वामित्रः ।

महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः ।
तस्यां स्नानं न कुर्वीत काम्यमाघमलक्रियाम् ॥

पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥
पित्रा पितामहैः सार्द्धं वृद्धमातामहैस्तथा ।
एकविंशकुलैः सार्द्धं भोगान् भुक्त्वा यथेप्सितान् ।
माघमासाम्भसि स्नात्वा विष्णुलोकं स गच्छति ॥

नारदीयपुराणम् ।

सम्प्राप्ते माघमासे तु तपस्विजनवल्लभे ।
कोऽभ्यस्ति सर्ववारीषि समुद्गतदिवाकरे ॥
पुनीमः सर्वपापानि त्रिविधानि न संशयः ।
महाघ्नेऽपि हि यानि स्युस्तीव्रकर्मकृतानि च ॥
दुर्लभो माघमासस्तु मन्दपुण्यैः प्रकीर्त्तितः ।
देवैस्तेजः परिक्षिप्तं माघमासे जलेषु वै ॥
अतः पवित्रं हि जलं अशेषाघौघनाशनम् ।
नद्यलेषु तु न स्नायात् कौपेऽभोगस्थिते तथा ।
न सुखाल्लभ्यते पुण्यं पुण्यं कष्टेन लभ्यते ॥

तथाच कात्यायनः ।

यत्र स्नानाच्छ्रमस्तत्र श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कष्टाच्छ्रेयो ह्यवाप्यते ॥

तस्मात् ।

स्नातो वह्निं न सेवेत अस्नातो वा कथञ्चन ।
सेवेनापि हि होमार्थं न शीतार्थं कथञ्चन ॥
सरित्तोयं महावेगं नवकुम्भस्थितं तथा ।
वायुना ताडितं रात्रौ गङ्गास्नानफलं स्मृतम् ॥

अत्रैव नरः स्नात्वा मुच्यते सर्व्वकिल्विषैः ॥

पुलस्त्यः ।

ज्येष्ठमासे तु सम्प्राप्ते दशम्यां हस्तसंयुते ।

दशजन्माघहा गङ्गा तेन पापहरा स्मृता ।

आषाढ्यां सरयूयोगे श्रावण्यां सततं तथा ॥

अत्र काम्यं यादृच्छिकमभिमतं ।

आचमनस्यापि न नैमित्तिकस्य प्रतिषेधः ।

तत्र चाह ।

मूत्रोच्चारे महारात्रौ कुर्य्याच्चाचमनं बुधः ।
प्रायश्चित्तीयते विप्रः प्रायश्चित्तार्द्धमर्हति ॥

पुलस्त्यः ।

रथ्याङ्गारप्रमेवरि स्नानं कुर्वन्ति ये नराः ।
व्याधिभिस्ते न पीड्यन्ते मृगैः केसरिणो यथा ॥

अपरञ्च श्रूयते ।

समुद्रमवगाहयेत नान्यथावगाहयते ।

पुलस्त्यः ।

पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां नदीस्नानं पुनात्यासप्तमं कुलम् ॥
अष्टमी रेवतीयोगे तथा चैरावतेऽप्यपि ।
श्रावणं समनुप्राप्य यत्र क्वचन मज्जते ॥
सप्तमी चतुर्दशी पुण्या देविकायामथान्यपि ।
चैत्रशुक्लत्रयोदश्यां यः स्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति मघायान्तु विशेषतः ॥

यमः ।

प्रासपाके यथा चैत्री मद्दरे च चतुर्दशी ।
शुक्लद्वादश्यां स्नानन्तु पुण्डरीके तथैव च ॥
अश्विन्याममावास्यां प्रभासे च तथा पुनः ।

माघमासे वरारोहे ग्रस्तं वै निम्नगाजलम्।
माघस्नायी नरोयः स्याद्दुर्गतिर्नेह पश्यति॥
नचास्ति मानुषे लोके किल्बिषं नैव शोधयेत्।
अग्निप्रवेशादधिकं माघस्नानं वरानने॥

विष्णुः।

दर्शं वै पूर्णमासं वा प्रारभ्य स्नानमाचरेत्।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे॥

इति स्नानकालनिर्णयः।

---

## अथ उष्णोदकस्नानकालनिर्णयः।

तत्र शङ्खः।

स्नानस्य वह्नितप्तेन तथैव परवारिणा।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्॥

योगियाज्ञवल्क्यः।

स्वभावदूषिताद्भिश्च उद्धृताभिश्च मानवः।
उष्णाभिराचरन् स्नानं न विशुद्ध्यति मानवः।
वृथा ह्युष्णोदकस्नानं वृथा जाप्यमवैदिकम्॥

षट्त्रिंशन्मतात्।

आपः स्वभावतो मेध्या विशेषादग्नितापिताः।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा॥

यम।

आप एव सदा पूज्यास्तासां वह्निर्विशोधकः।

तस्मात् सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् ॥

अत्रोष्णोदकनिषेधः काम्य-नित्य-नैमित्तिकविषयः, विधिस्तु तद्व्यतिरिक्तविषयः ।

तथाच गार्ग्यः ।

कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं याहच्छिकञ्चैव यथारुचि समाचरेत् ॥

क्रियास्नानमप्युष्णोदकेन न कार्य्यम् ।

तथाच व्यासः ।

क्रियास्नानं विना कुर्य्यादुष्णोदकं परोदके ।
तथा स्नातस्य नास्तीह फलं किञ्चिद्विजन्मनः ॥

अत्र विशेषमाह यमः ।

नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥

आतुरस्य तु सर्व्वदोष्णोदकस्नानमेव ।

तदाह स एव ।

आदित्यकिरणैः पूतं पुनः पूतञ्च वह्निना ।
आम्नानमातुरस्नाने प्रशस्तन्तु शृतोदकम् ॥
शीताद्भियाभिषिक्तोऽपि मन्त्रमन्त्रकारयोगतः ।
स्पृष्टेऽपि प्रस्रुते स्नानं सदिमा न फलं लभेत् ॥
मृते जन्मनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

रुद्रमनु ।

गौतमः ।

नित्यमेके नगरे ।

प्रचेताः ।

चतुष्पथ-महापथेषु राजोद्यानेषु न देवसमीपेऽधीयीत ।

गौतमः ।

श्मशान-ग्राम-महापथाशौचेष्विति ।

श्मशाने तु विशेषमाहापस्तम्बः ।

श्मशाने सर्वतः शम्याप्रासाद्ग्रामेणाध्यवसिते क्षेत्रेण वा नानाध्यायोऽज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत । श्मशानवत् शूद्रपतितौ समानागार इत्येके । शूद्रायान्तु प्रेक्षण-प्रतिप्रेक्षणयोरेवानध्यायः । तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने मिथुन-समन्तनिलये ।

न वृक्षाग्रे न तीर्थस्थो नाप्सु नौषु सभासु च ।
पङ्कसंकीर्णमध्ये च नाधीयीत कदाचन ॥

शङ्खः ।

नाधीयीताभियुक्तोऽपि यानगो न च नौगतः ।
देवायतन-वल्मीक-श्मशान-शवसन्निधौ ॥

मनुः ।

नाधीयीताश्वमारूढो न वृक्षं न च हस्तिनं ।
न नावं [illegible] खरं नोष्ट्रं नेरिणस्थो न यानगः ॥
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकां ।
नाधीयीतामिषं जग्ध्वा सूतकाद्यन्नमेव च ॥

न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

'ईरिण' ऊषर। 'प्रौढपाद' वस्त्रनिवद्धा-जान्वोर्मध्यस्य च वस्त्रादिना वेष्टन। 'भुक्तमात्रे' यावदार्द्रपाणिरित्यर्थः।

उदके तु न धर्मार्थं अपनिषेध किं तर्हि अपूर्वग्रहणार्थं, एते नादराणां, नान्येषनध्यायेषु मानसाध्यनुज्ञेति कश्चित्। अपरे तु मानसमनिच्छन्ति।

तथाच बौधायन।

अन्येषु चाप्नुतोष्यातोऽनध्यायोऽन्यत्र मानसात्।

'मानस' विजन-मरणयोरनध्याय।

मनु।

उदके मध्यरात्रौ च विण्मूत्रे परिवर्जयेत्।
उच्छिष्ट श्राद्धभुक्तौ च मनसापि न चिन्तयेत्॥

गौतम।

ऊर्द्धं भोजनादुत्सवे प्राधीतस्य च उत्सवे उपनयनादूर्द्ध्वं भोजनादहोरात्रमनध्याय।

'प्राधीतस्य' अध्ययने प्रथम प्रवृत्तस्य, भोजनादूर्द्धमनुत्सवेऽपि पूर्ववदनध्याय।

स्मृत्यन्तरे।

शोभनदृष्टे शोभनदिवसे नानध्याय विवाह-मौञ्जीबन्धन-प्रतिष्ठोद्यापनादिषु मार्जनमार्ष्टि सपिण्ड सगोत्राणामनध्याय। यद्वे चातुरन्यात् ऋत्विजामाचार्याणाञ्च।

मनुः ।

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा ।
श्व-खरोष्ट्रे च रुवति पङ्क्तौ च न पठेद् द्विजः ॥

यमः ।

शिवारुतं तथा श्रुत्वा सन्ध्ययोर्न द्विजोत्तम ।
नापराह्णे न मध्याह्ने नार्द्धरात्रे कदाचन ॥

शिष्टे च गृहमागते तदनुज्ञावधिरनध्यायः ।

तथाच यमः ।

आगतञ्चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् ।
अभ्यनुज्ञापिते तस्मिन्नध्येयं तु प्रयत्नतः ॥

मनुः ।

अतिथिञ्चाननुज्ञाप्य मारुते वाति वायति ।
रुधिरे च स्रुते गात्रात् शस्त्रेण च परिक्षते ॥

ब्राह्मणागमनेऽर्थादीनि दृष्ट्वाऽनुज्ञाप्याधीयीरन् ।

आपस्तम्बः ।

ब्रह्म घोषमाणो मलवद्वाससमीक्षन् सम्भाषितुं यततोऽध्येतुमभि-
प्राणान् सम्भाष्यतया सम्भाषेत सम्भाषिता ब्राह्मणेन नैव सम्भा-
षाधीयीत, तथा श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानोऽनु-
ज्ञाप्याधीयीताध्यापयेद्वा गुरुसन्निधौ चाधीहि भो इत्युक्तोऽधीयी-
ताध्यापयेद्वोभयत. उपसङ्ग्रहणमधिजिगांसमानस्याधीत्य चाधीया-
नेषु वा यथान्येषामादेशमेव शब्दमुत्सृज्याधीयीत ।

तथानृतावभ्राद्धेऽप्यनध्यायमाह ।

गौतमः।

अभ्रदर्शने चापर्त्ताविति।

'अभ्रं' जलधरोमेघः।

यमः।

श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः॥

यत्तु मनुनोक्तं।

द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।
स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः॥ इति।

तद्ब्रह्मयज्ञाध्ययनविषयं।

तथाच ब्रह्मयज्ञं प्रकृत्य तैत्तिरीयकाः समामनन्ति।

तस्य वा एतस्य ब्रह्मयज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश-इति।

अतएव मनुरपि।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि॥

'वेदोपकरणानि' अङ्गानि, 'नित्यस्वाध्याय' ब्रह्मयज्ञमन्त्रौ, होममन्त्रग्रहणं बलियज्ञादिमन्त्राणामप्युपलक्षणं।

नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रन्तु तत् स्मृत।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृत।
अपूर्वग्रहणार्थं वानध्यायो न तु कर्मणि॥

प्रयोगशौनकोऽपि।

नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोभवेद्वेदे ग्रहणे चाह यो स्मृत.[१] ॥ इति ।

पुराणात् ।

शिष्योऽध्ययनञ्च कुर्वन्ननध्यायान् विवर्जयेत् ।
अध्यापनञ्चापि कुर्वन् अनध्यायान् विवर्जयेत् ॥

मनुः ।

इमान्नित्यमनध्यायानधीयानो विवर्जयेत् ।
अध्यापनञ्च कुर्वाणः शिष्याणां विधिपूर्वकं ॥

तथा ।

प्रणवव्याहृतीनाञ्च सावित्र्याः शिरस सदा ।
नित्ये नैमित्तिके काम्ये व्रते यज्ञे क्रतौ तथा ॥
मङ्गले कामकार्ये च नानध्यायाः स्मृतास्तथा ।
दैवतार्चनमन्त्राणां नानध्याय स्मृतस्तथा ॥

तथा ।

चतुर्दश्यष्टमी-पर्व-प्रतिपत्स्वेव सर्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरा गमनेषु च ।
न च विस्मृतिशीलानां बहुवेदप्रपाठिनां ॥
चतुर्दश्यष्टमी-पर्व-प्रतिपद्वर्जितेषु च ।
वेदाङ्ग-न्याय-मीमांसा-धर्मशास्त्राणि चाभ्यसेत् ॥

गौतमः ।

प्रतिविद्यं यावत्समामनन्ति तथा चतुष्पथे भोजनोत्तरकाल

(१) "ग्रहणे चाह यो स्मृतः" इत्ययं पाठः न समीचीनो विभाति ।

छन्दोगानामनध्यायः, तथाच आम्भोजनीयात् प्रादादधीयारण्यगेयानि ।

आपन्नम ।

यथोक्तमन्यद्रत्नपरिचत्स्वपि ।

इति श्रीमहाराजाधिराज श्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये अनध्यायकालनिर्णयः ।

---

## अथ केशान्तकर्मकालः ।

तत्र याज्ञवल्क्यः ।

केशान्तः षोड़शे ।

'केशान्त' गोदानाख्यं कर्म, एतच्च ब्राह्मणविषयं ।

यदाह मनुः ।

केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते ।

राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥

ज्योतिःशास्त्रे ।

यान्युक्तानि क्षौरेषु भानि तान्येव चूड़ाकरणे ।

उपनयने गोदाने केशान्ते च शस्तानि ॥

इति केशान्तकर्मकालः ।

---

## अथ ब्रह्मचर्य्यकालविधिः ।

तत्रापस्तम्बः ।

उपेतस्याचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि पादो-नमर्द्धेन त्रिभिर्वा द्वादशावरार्द्धं न ब्रह्मचारिणोवरोपवासोऽस्ति ।

त्रिभिः पादैरून द्वादशवर्षाणीत्यर्थः, एतच्चाशक्तविषयं ।

यदाह देवलः ।

अत परमष्टाचत्वारिंशद्वार्षिकी वेदव्रतचर्य्यामातिष्ठेत् अशक्तश्चेत् षट्त्रिंशद्वार्षिकी चतुर्विंशतिवार्षिकी चेति ।

एतच्चातिवेदविषयं ।

यदाह यमः ।

चरेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा ।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत् ॥

बौधायनोऽपि ।

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यमाचरेत्, चतुर्विंशति द्वादश वा प्रतिवेदं संवत्सरार्द्धं वा प्रतिग्रहणाद्वा जीवितस्यास्थिरत्वात् कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ।

पैठीनसिः ।

द्वादशवर्षाण्येकवेदे ब्रह्मचर्य्यञ्चरेत् प्रतिद्वादशं वा सर्वेषु ग्रहणान्तं वा ।

शङ्ख-लिखितौ ।

द्वादश द्वादशवर्षाणि वा प्रतिवेदं यावद्ग्रहणं वा वेदस्य तावत् ब्रह्मचर्य्यमाचरेत् ।

मनुः ।

षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैविद्यकं व्रत ।
तदर्द्धं पादिकं वापि ग्रहणान्तिकमेव वा ॥

अस्यार्थः ।

त्रैविद्यं ऋग्यजुःसामाख्यवेदत्रयविषयं, तत् षट्त्रिंशदाब्दिकं कार्य्यमेव प्रतिवेदं द्वादशवर्षाणि ब्रह्मचर्य्यमित्युक्तं भवति, अर्द्धिकपक्षे प्रतिवेदं षड्वर्षाणि, पादिकपक्षे तु त्र्यब्दमेव ।

याज्ञवल्क्यः ।

प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके ।

इति ब्रह्मचर्य्यकालनिर्णयः ।

## अथ समावर्त्तनकालः ।

तत्र दक्षः ।

स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावत्ततः पश्चाद्गृही भवेत् ॥

वेदस्वीकरणं वेदार्थविचारस्याप्युपलक्षणं ।

तथाच स्मृत्यन्तरे ।

वेदमधीत्य छन्दोविषयानर्थान् बुद्ध्वा स्नायात् ।

तथाच व्यासः ।

न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
यथा पशुर्भारवाही न तस्य लभते फलं ।
द्विजस्तद्वदर्थानभिज्ञो न वेदफलमश्नुते ॥
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥
योऽधीत्य वेदविद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः पशुसमः[१] पात्रतां न प्रपद्यते ॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स ब्रह्मलोकमाप्नोति ब्रह्मानुष्ठानसिद्धितः ।
श्रुतहीनधर्मः सोऽपि यथेहामुत्र सद्गयेत् ॥

तथा ।

स्नानं कार्यं च संयुक्तं श्रद्धया कल्पितं यथा ।

(१) शूद्रसमः इति ख० ।

अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलं ॥
पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
चतुष्पादमप्यधीत्याम्नायार्थतस्तु तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

एतत्समर्थंविषयं एकैकसमाप्तावपि स्नानविधानात् ।

तत्र हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्या-व्रतस्नातकश्चेति ।

यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः, यस्तु समाप्य व्रतानि असमाप्य वेदं स व्रतस्नातकः, यः पुनरुभयं समाप्य [illegible] विद्या-व्रतस्नातकः ।

याज्ञवल्क्यः ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

आपस्तम्बेयथाम्नायोत्थेके(१) तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्याव्रतेन चेत्येके, आधानाद्युपरिज्ञानाच्च विश्वक्षुदकमुपस्पृश्य मग्निपक्वदहिरसायोगस्थानापत्तिकः संवत्सरमेतद्व्रतञ्चरेत् एतदष्टचत्वारिंशत्सम्मितमित्याचक्षते ।

व्यासः ।

गुरुशुश्रूषया विद्यां समाप्य विधिवत् द्विजः ।

(१) पाठोऽयं न समीचीनो विभाति ।

स्नायीत तदनुज्ञातो दत्त्वास्मै दक्षिणां द्विजः ॥

गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृत्वानुज्ञातस्य स्नानमिति ।

विद्यान्ते गुरुरर्थेन वेतनेन 'निमन्त्र्यः' प्रष्टव्यः, कोऽर्थस्तुभ्यं दातव्यः इति पृष्टः स खलु यं ब्रूयात्तमर्थमाचार्याय दत्त्वा स्नायाद्गुरोस्तदनुज्ञया चेत्यर्थः ।

बुधोऽपि ।

गुरुणानुज्ञातः स्नायादिति ।

इति समावर्त्तनकालः ।

---

## अथाश्रमकालनिर्णयः ।

तत्र ।

चतुर्णामाश्रमाणां समुच्चयो विकल्पश्च तत्र समुच्चयं प्रकृत्य मनुराह ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रनिषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिं ॥

'गृहस्थप्रभवाः' तदुपजीविनः । 'क्रमशः' इति प्रातिलोम्यं निषिद्धं ।

तथाच दक्षः ।

त्रयाणामानुलोम्यन्तु प्रातिलोम्यन्न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः ॥
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।

न यतिर्न वनस्थश्च सर्वाश्रमविवर्जितः ॥

तेन मृतभार्य्यस्य पुनर्विवाहासामर्थ्येऽपि न ब्रह्मचारिणा भाव्यं, तथ च ब्रह्मचारि-गृहाश्रमयन्द्राश्रुत्तरोत्तराश्रमिणः पूर्वपूर्वाश्रमाप्रत्याश्रयणप्रतिपादनपरौ, अन्यथा "प्रातिलोम्यं न विद्यते" इति ग्रहणमविवर्चितं स्यात् ।

कूर्म्मपुराणे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
क्रमेणैवाश्रमा प्रोक्ताः कारणादन्यथा भवेत् ॥
वानप्रस्थाश्रमङ्गत्वा न गृहं प्रविशेत्पुनः ।
न सन्यासी वने वाथ ब्रह्मचर्य्यञ्च साधकः ॥

पुराणान्तरे ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
आश्रमाश्चो द्विजातीनां मार्गाः पुन्न कुवर्त्तनाः ॥

आपस्तम्बः ।

चत्वार आश्रमा गार्हस्थ्यमाचार्य्यकुलवासः सन्यासो वानप्रस्थमिति । तेषु सर्वेषु यथोपदेशमव्यग्रोवर्त्तमान आश्रमं गच्छति. तेषु सर्वेषु वर्त्तमान इति समुच्चयोदर्शितः ।

जावालश्रुतिश्च चतुर्णां चयाणां द्वयोर्वा समुच्चय इत्याह ।

ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति ।

समुच्चये कालविशेषाकाङ्क्षायामाह मनुः ।

चतुर्थमायुषोभागमुषित्वा सगुरोर्द्विजः ।

द्वितीयमायुषोभागं कृतदारोवसेद्गृहे ॥
वनेषु च विहृत्यैव तृतीयं भागमायुषः ।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत् ॥

"शतायुर्वै पुरुष इति श्रुत्याभिहितमायुषश्चतुर्थोभागः पञ्चविंशतिवर्षाणि ।

गौतमस्तु विकल्पमाह ।

तस्याश्रमविकल्पमेके ब्रुवते ।

अयन्तु विकल्पोऽमतपर्यायमध्यतिरिक्तविषयः ।

वसिष्ठः ।

चत्वार आश्रमा ब्रह्मचारी गृहस्थोवानप्रस्थः परिव्राजकस्तेषां वेदमधीत्य वेदौ वेदान् वा विशीर्णब्रह्मचर्योयमिच्छेत्तमाविशेत् ।

वेदान् वेदौ वेति पचौ फलभूयस्त्वमभिप्रेत्य, वेदमधीत्याविप्लुतब्रह्मचर्यस्तेषामाश्रमाणां मध्ये यमिच्छेत्तं 'आविशेत्' आश्रयेत्तत्रैव निष्ठां यायादित्यर्थः ।

वामनपुराणे ।

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ॥
वैखानसोवापि भवेत्परिव्राडथ वेच्छया ।
गुरवे तु वरं दत्त्वा यायाद्गुर्वनुमोदितः ।
गृह वन वोपवसेद्व्रजेदापि द्विजोत्तमः ॥

जाबाला ।

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।

आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥

अयञ्च विकल्पः सम्यगनुष्ठानरहितानां वेदितव्यः ।

इत्याश्रमकालनिर्णयः ।

---

## अथोद्वाहविकल्पः ।

तत्र बृहस्पतिः ।

वेदानधीत्य विधिना समावृत्तोऽनुमततः ।
समानामुद्वहेत्पत्नीं यशः-शील-वयो-गुणैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाविशेत् ॥
गुरुं वा समनुज्ञाप्य प्रदाय गुरुदक्षिणां ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥
वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्य्यो दारान् कुर्वीत धर्मतः ॥

अथ नैष्ठिकानन्तरं शङ्ख-लिखितौ ।

अथानुज्ञातो गुरुणाद्युपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादिनोद्वाहेन ।

दक्षः ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्धं स्नातो गृही भवेत् ॥
अनधीत्य द्विजो वेदान् स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण प्राज्ञ वेदं गुरोर्गृहे ॥

युग्मेऽब्दे सम्पदा विद्या-धर्म-कामायुषां सदा ।
भर्त्तुरिष्टाभवत्योजे वर्षे कन्या स्वसंशयम् ॥
माघमासे भवेदूढा कन्या सौभाग्यसंयुता ।
फाल्गुनोढा भवेत्साध्वी वैशाखे सुखिनी भवेत् ॥
धर्मयुक्ता भवेज्ज्यैष्ठे धनिनी कार्त्तिके भवेत् ।
देवपूजारता नित्यं मासे स्यात् सोमदैवते ॥
उक्तवर्ज्जितेष्वन्येषु मासेषु प्राप्नुयाद्यदि ।
विवाह कन्यका सा स्यात् सुत-सौभाग्यवर्जिता ॥
सितपक्षे तु यस्यां सा प्रकाशयति सा कुलम् ।
कन्योढा त्वसिताद्ये च मध्ये चेचिद्भंशा[1] ॥

तथा ।

शुक्लपक्षं प्रशंसन्ति विशेषेणोत्तरायणं ।

वशिष्ठः ।

आपूर्य्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु ।
इतरेषां तु वर्णानां कृष्णपक्षे विधीयते ॥

व्यासः ।

उग्रासूग्रोपरिक्तासु तिथिषु स्यादमर्द्दिता ।
दुर्भगा चेति शेषासु सुत-सौभाग्यसंयुता ॥

तथा ।

कल्याणभाविता प्रीतिः सौभाग्यं धनसञ्चयः ।

---

(१) पाठोऽयमादर्शसम्मतोऽमुद्रित परन्तय न समीचीन ।

सुखार्थी बहुविघ्नानि शौक्ल-सौख्यप्रकीर्त्तनः ॥
शोकामयौ सुदः सौख्यं भाग्यसेवात्मजादयः ।
उपद्रवाः पूर्णफलं शुक्ले प्रतिपदादयः ॥

तथा ।

गुरु-शुक्रेन्दुसुतानां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तृचित्तानुचारिणी ॥
अर्क-तत्पुत्र-भौमानां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
अष्टवर्गगतोऽनिष्टस्थानमासाद्यभग्रहः ।
यदा तदा तद्दिवसे विवाहो न प्रशस्यते ॥
यद्यस्य दिवसे प्रोक्तं ग्रहस्य सदसत्फलं ।
तदशेष तदीयायां होरायामपि निर्द्दिशेत् ॥
प्रशस्तं जन्मताराश्च केचिदाऊत्तथापरे ।
दितार जन्मनक्षे त्यक्ता देयां[1] फलप्रदं ॥
अर्कादीनां दिने युक्तं यत्फलं तद्दिवाग्रमे ।
तदंशेऽपि भवेत्काले होरायान्तु विशेषतः ॥
आदित्याद्यन्यशरेण षतोरकांयतस्य च ।
यावदोऽधिपतिस्तस्य वदन्तीति महर्षयः ॥
दिवसे फलमेतेषां ग्रहाणां यदिहोदितं ।
तस्मात्सर्वयनाद्येषु सदैवाविकलं भवेत् ॥

(१) त्यक्ता देयां इत्यत्र पाठो न समीचीन ।

तिर्यक्पञ्चोर्ध्वगाः पञ्च रेखे द्वे द्वे च कोणगे।
शङ्कुरेखादिभिर्न्यस्य भानि तत्र प्रदक्षिणं॥
कृत्तिकादीनि यत्तस्मिन्नेकरेखास्थितं ग्रहं।
नक्षत्रमनुना विद्धं विवाहे स्यादशोभनं॥

तथा।

मैत्रं पित्र्यं तथा वैश्वं ब्राह्म-नैर्ऋतदैवतं।
अहिर्बुध्न्यार्यमा वापि पौष्ण-धात्र-निशाकराः॥

तथा।

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च।
षड्भागशेषेष्वन्येषु नक्षत्रेषु न गण्यते।
रेवत्यर्धचतुर्भागे विवाहः प्राणनाशनः।
स्थानत्रयेषु त्रिषु सदा पाणिग्रहणमिष्यते॥

तथा।

हस्तोत्तराणि वायव्यं मैत्रमूले च रेवती।
रोहिणी सौम्य-मैत्रञ्च शुभं पाणिग्रहे सदा॥
व्यर्केदिवसं यत्राद्युतीपातायनं तथा।
उत्पातदूषितर्क्षं च वैधृतिञ्च विशेषतः॥

वात्स्य।

सावित्र्यान्तिकमयुक्तान् मुहूर्त्तानपि निर्दिशेत्।
समानदैवतैस्तुल्यं नक्षत्रैः फलमादिशेत्॥
मुहूर्त्तेष्वभिजिदङ्गे शङ्कुराहे कालचिन्तकः।
अष्टमो दिवसस्यैव सोऽभिजित्सञ्ज्ञितः क्षणः॥

स ब्रह्मणा वरो नित्यं सर्वकालः शुभप्रदः ।
उपपदोद्याद्यैश्च पापैस्तैर्न हि बध्यते ॥

तथा ।

वैशाखिकश्चैद्यायमुक्तस्त्वपि जायते ।
पाणिप्रदः कुमारीणामभीष्टार्थफलप्रदः ॥

वैधव्यन्दिनबान्धवस्य जगतीसूनोर्धनव्ययः
सौम्यस्यार्थपरिच्युतिः सुरगुरोर्दास्य तथा दुःखिता
प्राभव्यं भृगुनन्दिनः स्थितिरपि त्यागश्च सौरेः पुन-
र्नारीणां गणिकात्वमेव तमसः केतोश्च वैधादयः ॥

सारावल्यां ।

सर्वेऽप्यस्तगताः शशि-सूर्यौ नैव गोचरविरुद्धौ ।
अप्यूढा प्रकर्ष्यमस्य धनदस्य वा कुलटा ॥

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।
वर्जयेत्सर्वकर्माणि व्रत-स्वस्त्ययनानि च ॥

गुरौ ■ जन्माष्टमगे विवाह.
शनैश्चरे जन्मगते तथैव ।
न चाष्टमे शीतकरे च कुर्याद्-
रवौ वराद्वैधनगे प्रयत्नात् ॥

गुरुदयमवस्य गुरुणादौ अस्तराजमपि हृप ।
यात्रा-विवाहसमय मनसापि न चिन्तयेत् प्राज्ञ ॥

मतचन्न द्विजातीनां उद्वाहं सुन्दरीषु च ।
गुरावस्तमिते नित्यं न कुर्यात्कार्त्रि तथा ॥

विवाहमपि नेच्छन्ति मुनयः काश्यपादयः ।
यथा पौषे तथा चैत्रे केचिदिच्छन्ति सूरयः ।
तथा सिंहगते जीवे विवाहे बादरायणः ॥

वसिष्ठः ।

विवाहे व्रतबन्धे च यात्रायां व्रतकर्मणि ।
गुरावस्तमिते शुक्रे नाशस्य परिणीयते ॥
गुरुर्नष्टः पतिं हन्याच्छुक्रो नष्टस्तु कन्यकाम् ।
चन्द्रे नष्टे उभौ हन्ति विवाहे तौ विवर्जयेत् ॥
पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।
पञ्च सप्तस्तु पूर्वेण पश्चाच्च पश्चिमे सितः ॥
विचित्तमुपयाति माघमास-प्रतापौ दक्षिणे लयने ।

वराहः ।

देशाचारस्तावदादौ विचिन्त्यो-
देशे देशे या स्थितिः सैव कार्या ।
लोके दुष्टं पण्डिता वर्जयन्ति
दैवज्ञोऽतो लोकमार्गेण यायात् ॥
एकस्तौ शोभनगोचरस्थे
विवाहमिच्छन्ति हि दाक्षिणात्याः ।
रवौ शुभस्थे च वदन्ति गौडाः
न गोचरो मालवके प्रमाणम् ॥

गौडाः शुद्धेन्दुं प्राहुर्दाक्षिणात्या गुरोर्बलम् ।
मालवा लग्नमिच्छन्ति लाटाश्च स्थानसम्भवम् ॥

तारावलं मागधीयाः श्रयन्ति
कुर्वन्ति तारेन्दुबलेन माद्राः ।
तथोत्तरामौकुलपश्चिमस्थाः
माण्डव्य-त्रिगर्त्त-तुषारकेषु ॥
षडर्व-योगास्तिथि-वार-योगाः
शुभाशुभा ये कथिताः प्रभूताः ।
वङ्गेषु तल्लोकफला भवन्ति
नान्येषु देशेषु विचिन्तनीयाः ॥

सारावल्यां ।

षष्ठोऽविलग्नाद्भविरष्टमो वा
भागो मुहूर्त्ता यदि युज्यते च ।
सूर्येन्दु-ताराबलसम्प्रयुक्ता
गोधूलिका सर्वफलप्रदायी ॥

लग्नशुद्धिर्यदा न स्याज्जीवमन्तु प्रशस्यते ।
तदा तु सर्ववर्णानां कालोगोधूलिकः स्मृतः ॥
राशिर्न ज्ञायते यस्य नापि लग्नस्य निश्चयः ।
लग्ने सूर्यबलो यस्मिन् तत्र सर्वं प्रशस्यते ॥
चौरस्त्वेकबलोज्ञेयो माण्डव्योद्विबलः स्मृतः ।
त्रिबलस्तु बुधोज्ञेयश्चतुर्गुणबलोगुरुः ॥
शुक्रः पञ्चबलोज्ञेयश्चन्द्रः षड्बल उच्यते ।
सर्वग्रहबलैर्नित्यं तुल्य एवं दिवाकरः ॥
यात्रा विवाहकालेषु कार्येषु विविधेषु च ।

यत्र सूर्यबलं नास्ति नास्ति सर्वं ततोबलं ॥
पुंसामर्कः स्मृतो योनिर्योषितामम्हतद्युतिः ।
अतोनृ-योषितोराप्तं बलं चन्द्र-प्रभाद्भवं ॥
यत्र चन्द्रश्च तारा च द्वावेतौ बलवत्तरौ ।
दोषास्तत्र प्रलीयन्ते यदि स्युः सर्वतोऽपगाः ॥
नष्टे शुक्रे तथा चन्द्रे गुरावस्तमुपागते ।
न विवाहो न यात्रा वै नैव दानं समाचरेत् ॥
द्वादश-दशम-चतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
मासा पाणिग्रहणं जीवे वैधव्यमाप्नोति ॥
मित्रे च भगदैवत्ये गुरौ पुत्रवती भवेत् ।
अत्यन्तसुभगा साध्वी धन-धान्य-पतिप्रिया ॥

कात्यायनः ।

पञ्च तिथि-क्षण-करणं लग्नेन्द्वर्कं लग्न-ताराश्च ।
पाणिग्रहणे योज्यास्तत्त्वविदेकादशपदार्थाः ॥
विवाहकर्म नेच्छन्ति मनुप्रे शार्ङ्गधन्वनि ।
कृतावथ गतानान्तु माण्डव्याद्या महर्षयः ॥
सिंहस्थिते सुरगुरावधिमासके च
क्षीणे तथाथतनुगस्य तथा सुताख्या ।
कुर्वीत नार्क-गुरुनीचगयोर्विलग्न-
जन्मर्क्षयोश्च निखिलान्यपि मङ्गलानि ॥
रविणा चन्द्रयुक्तेन नारी वैधव्यमाप्नुयात् ।
भौमेन म्रियते घोरे शुक्रे पापं समाचरेत् ॥

रहस्यनिपुणा सौम्ये त्वभावज्ञा रतिप्रिया ।
पतिमन्यं मनोवृत्तिर्न केतुसन्दर्शनाश्रिते ॥
गुरुयन्द्रश्च आर्मिचे तिष्ठेयदि बलान्वित ।
धन-सौभाग्य-पुत्रांश्च लभते नात्र संशयः ॥
मणि-मुक्ता-प्रवालैश्च सुवर्णाभरणैः शुभैः ।
शोभतेऽनुपमा प्रिया गुरुणा यदि वीक्ष्यते ॥
सा तु भर्त्तुः प्रिया नित्यं युधे चन्द्रेण वासते ।
आदित्येन तु वैधव्यं महादारिद्र्यमेव च ॥
क्रूरे चन्द्रे च भौमे च न कुर्याद् धानिमाक्रम[1] ।
वन्ध्या वा मृतवत्सा वा शनैश्चरनिरीक्षिते ॥

वसिष्ठः ।

मरणं चापयन्तीत्वं दास्य दौःशीलमेव च ।
चन्द्रयोगे ग्रहाः कुर्य्यूरवि-रक्षार्कि-भार्गवाः ॥
नैपुण्य कुलमुख्यत्व पौरुष्य व्याधितैव च ।
बुध जीवसुताः कुर्युः कर्त्तुरेव यथाक्रमात् ॥
द्वाभ्यां त्रिभिश्चतुर्भिर्वा द्वादशे सहितः पुनः ।
दारिद्र्यं मरणं वापि कन्यायाः कुरुते ध्रुवं ॥
प्रजात्यन्यजन्मे नारी गैरिकाम्बरभूषिता ।
विदेशे वा मनोदास भौम्येनैव युतः शशी ॥
ग्रहाणां निपुणः श्रेष्ठस्तत. कन्या ततस्तथा ।
तथा मेषविलग्नात्तु विवाहे सफला स्मृताः ॥

---

(१) न कुर्य्यादाभिषाद्धनमिति क० ।

अन्ये द्विचतुराद्यंशानामत्रा ग्राह्या मनीषिभिः ।
युग्म-कन्या-तुलायान्तु न स्वांशो न परांशकः ॥
सुहृदः सौम्यषड्वर्गाः सप्तसौम्यनिरीक्षितः ।
यो वा विवाहकालेषु प्रवेशे शुभकर्मणि ॥
ब्राह्मण कुरुते जारं शुक्र-सौम्यसमागमे ।
जीव-भास्करयोः स्थाने मनस्थं कुरुते पतिं ॥
दिवेश-सौम्ययोर्योगे त्यक्त्वा बन्धून् पतिं तथा ।
करोति तस्करं जारं कन्या नैवात्र संशयः ॥
विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽन्यांशे यथैवं योषितस्ततः ॥
दशम-तृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रञ्च ।
पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥

व्यासः ।

मेषाद्या ये मया पूर्वमुक्ता द्वादश राशयः ।
तेषां कन्या तुला चैव मिथुनञ्च प्रशस्यते ॥
कन्या-तुलासु तेष्वेषु सर्वेष्वन्यांशके न तु ।
अतोऽशके फलं सम्यक् वदतो मे निशामय ॥
तेषां कर्कटकन्यान्त्यकुमारगतमागता ।
युता वृषभगे चाद्य युग्मांशे सौम्ययुता ॥
वेश्या कुलीरभागे स्यात् सौम्यांशा तथैव च ।
बहुप्रसक्ता सिंहांशे पितृवेश्मरता तथा ॥
रूप-शील-गुणोपेता कन्यांशे स्यात् कुमारिका ।

क्षयान्विता तुलस्थांशे दुःशीला मददूषिता ॥
वेश्या कुम्भस्थितेऽप्यन्ते वृश्चिकांशेऽतिकोपना ।
चतुर्थवर्गे कुलटा मृग-कुम्भ-चर्यांशके ।
सुदृढा ह्यन्यथा स्यात् कन्या नात्रैव संशयः ॥

गर्गः ।

अधिमासहतान्दोषानृतुपर्वायनोद्भवान् ।
मुहूर्त्त-करणोपेतांस्तिथ्युत्पातभवांश्च यान् ॥
सप्तदृष्टिं दुराधर्षा द्रेष्काणांशकराशिजान् ।
गुरु-शुक्रबुधा घ्नन्ति लग्ने सम्यग्व्यवस्थिताः ॥

भावार्थः ।

मदराशियुक्तो जामित्रमतश्च वर्जितो राज्ञः ।
लग्नस्थे वैधव्यं जामित्रगते च कन्यकामरणम् ॥
राशियुते मनव्यासा न चितये सदा वर्ज्ये ।
मातृलग्ने मृत्युः स्याद्धनहानिर्द्वितीयगे ॥
दुश्चिक्येऽर्थविवृद्धिः स्याद्बन्धुनाशश्चतुर्थगे ।
सुतनाशः सुतस्थे स्याद्वैरवृद्धिश्चारिगे ॥
जामित्रस्थे च वैधव्यं चायुर्वृद्धिस्तथाष्टमे ।
धर्मगे धनहानिः स्यात् कर्मगेऽर्के विशीलता ॥
लाभः स्यादायगे भानौ व्ययो द्वादशगे भवेत् ।
चन्द्रे धनप्रिया लग्ने द्वितीये धनिनी भवेत् ॥
तृतीये सुभगा साध्वी तुर्ये बन्धुप्रिया भवेत् ।
सुतस्थे कन्यका माता षष्ठस्थे मृत्युमाप्नुयात् ॥

जायास्ये समपत्नी स्यान्मृत्योर्मृत्युमवाप्नुयात् ।
कन्या प्रजावती धर्मे विकारस्त्वारकर्मणि ॥
भर्तृप्रियोपयुक्ता च प्राप्तिव्येकादशस्थिते ।
धर्माणी द्वादशे च स्यात् कन्यका प्रीतदा प्रभौ ॥
अनिष्टचरणा याती मध्यमफलद ग्रहौ ।
सौम्याष्टकस्थो मैत्रेण दृश्यते चेद्बलीयसा ॥
वैधव्यं लग्नगे भौमे कन्यका मृत्युमाप्नुयात् ।
अपि चौरभयार्त्ता स्यात् द्वितीयस्थे धरासुते ॥
तृतीयस्थेऽर्थसम्पन्ना बन्धुदुष्टा चतुर्थगे ।
पुत्रहीना सुतस्थे स्याद्रिपौ सुतभागिनी ॥
सप्तमस्थे महीसुते पुत्रिणी स्वल्पयुतः ।
अष्टकस्थाव धरासूनौ पुत्रस्थे कन्यकाप्नुयात् ॥
नवमे भर्तृविद्विष्टा दशमे कुलकप्रिया ।
धनान्विता तथायस्थे नष्टार्था व्ययगे भवेत् ॥
लग्नस्थे चन्द्रपुत्रे स्याद्गुर्मेधाः सुभगा स्थिरा(१) ।
स्वकुटुम्बरता नित्यं धनस्थे सोमनन्दने ॥
श्वश्रू-श्वशुरयोः पूजा तृतीयस्थे शशाङ्कजे ।
चतुर्थे बन्धुपूजा स्यात्सुभगा धनसंयुता ॥
बहुपुत्रा सुतस्थे स्याद्धतशत्रुस्तथाङ्गिरे ।
कष्टामापद्माप्नोति पुत्रहानिं तथैव च ॥
सप्तमस्थेऽष्टमस्थे च रोगार्त्ता दुःखभागिनी ।

(१) स्थिरेति ख० ।

तपोरता धर्मगे स्वाम्नायाशीला च कर्मगा ॥
सुत-सत्त्व-धनोपेता भौमे द्वादशगे भवेत् ।
कन्या षड्भयसंयुक्ता शशाङ्कतनये घटा ॥
गुरौ लग्नगते कन्या धर्मशीला बहुप्रजा ।
सुदीर्घमायुराप्नोति निधन निधने भवेत् ॥
अतिप्रमुदिता जीवे सुखिकस्थे भवेत्सदा ।
बन्धुवृद्धिं जानीयात् सर्वकामगुणान्विताम् ॥
सुशीलाख्या चतुर्थस्थे पञ्चमस्थे बहुप्रजा ।
सपत्नीयुक्ता षष्ठस्थे बहुभूषा स्ववेश्मनि ॥
विरूपा दुर्भगा भार्या भवति विमला यत्र ।
व्रतकर्मसु चसिद्धिं प्राप्नोति दशमे गुरौ ॥
विविधमाल्याभरणा पुत्रयुक्ता च कन्यका ।
सुवर्ण-मणि-वस्त्राढ्या भवत्येकादशे गुरौ ॥
व्ययस्थे सततोदारा ददात्यर्थमतन्द्रिता ।
आयुर्धर्मादिभिर्युक्ता लग्नस्थे भृगुनन्दने ॥
सद्भूतगुणयुक्ता ख्यातरूपा च धनान्विते ।
सुभगी देवररता कन्या शुक्रे तृतीयगे ॥
यत्र सा भूषिता कन्या सुरूपा धनसंयुता ।
नित्यं चतुर्थगे शुक्रे पञ्चमस्थे बहुप्रजा ॥
पत्युश्च बन्धुवर्गस्याविराद्धा षष्ठगे भृगौ ।
बन्धकी सप्तमस्थे स्याद्भार्गवे लोकगर्हिता ॥
स्वाध्यर्दिता भवेच्छुक्रे मृत्युस्थे यमसाधनम् ।

भार्गवे नवमस्थे स्याद्धर्मयुक्ता प्रियंवदा ॥
सत्कर्मयुक्ता दशमे शुक्रे धर्मपरायणा ।
*विधवार्थान्विता ख्याता भवत्येकादशे भृगौ ॥*
व्ययस्थे भार्गवे कन्या व्ययशीला प्रजायते ।
सौरे लग्नगते कन्या पुत्रघ्नी दुर्भगा तथा ॥
निर्धना कृपणा दीना धर्मस्थानगते भवेत् ।
पुत्रहीनार्त्तिदुःखार्त्ता चक्षुरोगेण च पीडिता ॥
पञ्चमस्थे सपुत्रा स्यात् षष्ठस्थे रत्नभागिनी ।
गर्भस्रावार्द्दिता नित्यं सप्तमस्थेऽर्कनन्दने ॥
अष्टमस्थेऽर्कपुत्रे स्यान्नित्यमामयवर्जिता ।
नष्टधर्मरता कन्या धर्मस्थेऽर्कात्मजे भवेत् ॥
चतुर्थ-सप्तमस्थश्च मृत्यु-वैधव्यकृद्भवेत् ।
शङ्कमेऽन्यस्थानेषु निष्फलः स्याद्रविस्थितः ॥
पञ्च पाणिग्रहे दोषान् वर्जयेदेव चिन्तकः ।
दारिद्र्यं मृत्यु-वैधव्यं पौरुष्यमनपत्यताम् ॥
अष्टमाश्चार्द्धमासाश्च तीर्थे वार्थे शुभाशुभाः ।
लग्नस्य पञ्चमस्थानाच्छुभस्थानस्थितान् ग्रहान् ।
कार्य्योविवाहो निर्दोषः कालो यस्मात्सुदुर्लभः ॥
मूर्त्तिकर्मात्मजसुखत्रित्रिकोणगते गुरौ ।
भार्गवे च विनश्यन्ति सर्वे दोषा विवाहगे ॥
त्यक्त्वा च व्यय-नैधनानि न सदा सौम्यग्रहा' सत्शुभं
चोत्कृष्टासुरपूजित ग्रहधरोदुयिक्यनाभार्थम ।

पापस्य ×××× चन्द्रभवन प्राप्ता चितेर्नन्दन
मुक्ता नैव भवेत् स वर्त्तिगमयी पाणिग्रहेऽभिष्टदा(१) ॥
यो जन्मनि जन्मस्थादष्टमराशिस्थितो भवेत् खचरः ।
स विवाहलग्नवर्त्ती शुभोऽप्यशुभं ददाति फलम् ॥

शौनकः ।

पञ्चभिरिष्टं रिष्टञ्च पुष्टमनिष्टमादेश्यं ।
स्थानादिबलसमेतैश्चतुर्भिरपि खचरैः ॥

अर्केऽनुकूले सुरपूजिते च
इष्टे प्रपन्ने क्ष्मानन्दने च ।
भवन्ति नार्य्यः सुत-सौख्य-सम्पत्-
सौभाग्यभाजः सततप्रसन्नाः ॥
षडष्टके सूर्य्यविधूममर्हे
षड्राटके धूमशिखे द्रुमे च ।
उपप्लवप्राधिपि चक्रमन्ने
प्राप्ते च पापान्तरगे च चन्द्रे ॥
अस्तङ्गतयोर्वा परिवेषिणोर्वा
पाणिग्रहः खण्डितविम्बयोर्वा ।
शीतोष्णभासोर्विपरीतखेट-
कवक्षकालान्तिकयोर्निरस्तः ॥

पराशरः ।

दशपञ्चाङ्गुलकपाले समघनहस्ते षडङ्गुलोत्सेधे ।

(१) श्लोकोऽयं आदर्शपुस्तक एव मुद्रित परन्त्वय न समीचीनो भाति ।

द्वादशमुखपरिणाहे जलपलषष्टिपूर्णौ घटिका ॥

वात्स्यः ।

ताम्रपात्रं चिवस्तिकं षडङ्गुलसमायुतं ।

इत्युद्वाहकालः ।

---

## अथ वैवाहिककर्मकालः ।

वात्स्यः ।

कण्डनदलनयवाङ्कुरमण्डपमृद्वेदिवर्णकादिविधिं ।
तत्सन्निधिगतागतपक्षे वैवाहिके कुर्य्यात् ॥
वैवाहिके तु दिवसे शुभे वाथ तिथौ शुभे ।
जामित्रराशौ कन्याया वर्षे शुभसमन्विते ।
चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा ॥

इति वैवाहिककर्मकालः ।

---

## अथ परिणयनकालनिर्णयः ।

तत्र बृहस्पतिः ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीषड्वीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥

आपस्तम्बः ।

प्राप्ते च द्वादशे वर्षे रजस्त्रीणां प्रवर्त्तते ।
यस्तां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
त्रिंशद्वर्षाद्यथाब्दान्तु भार्य्यां विन्दति नग्निका ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

मनुः ।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयं ॥
इति परिणयनकालनिर्णयः ।

---

## अथ देयकन्याकालनिर्णयः ।

तत्र याज्ञवल्क्यः ।

अष्टवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥

संवर्त्तः ।

अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

अथ 'वृषली' रजस्वला ।

तथाच देवलः ।

वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

बृहस्पतिरपि ।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।

भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

विष्णुः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।

सा भवेत् वृषली ज्ञेया हरंस्तान्न दुष्यति ॥

एतच्च प्रायिकं, कस्याश्चिदर्वागेव रजोदर्शनात् ।

अतएव यमः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

पराशरयम-पराशरापस्तम्बैरुक्तं ।

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।

मासि मासि रजस्तस्याः पिता पिबति शोणितं ॥

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।

प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्त्तते ॥

एतदपि प्रायिकं, कस्याश्चित्तदापि रजोदर्शनासम्भवात् ।

अतएवाह मनुः ।

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।

त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

एवञ्च रजोदर्शनात्पूर्वं विवाह उचितं भवति ।

तथाच गौतमः ।

प्रदानात्प्रागृतोरप्रयच्छन्दोषी प्राग्वाससः प्रतिपत्तेरित्येके ।

यमः ।

तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।

वसिष्ठः ।

प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

संग्रहे ।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः ।
यावद्दोषं न जानाति तावद्भवति नग्निका ॥

अमरसिंहः ।

नग्निकानागतार्तवेति ।

अङ्गिराः ।

अप्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना तु सा सोमा कुचहीना तु नग्निका ॥
व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते तु कन्यकां ।
पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलां ॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

बृहस्पतिः ।

व्यञ्जने तु कुलं हन्यात्पितृन् हन्यात् पयोधरे ।
हन्यादिष्टञ्च पूर्तञ्च प्राप्ते रजसि कन्यका ॥

पराशरः ।

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।

त्रयोऽपि[१] नरकं यान्ति दृष्ट्वा कन्यां रजस्वलां ॥

पैठीनसिः ।

यावन्नोद्भिद्येते स्तनौ तावद्देया । अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति पितामहः प्रपितामहश्चेति विष्ठायां जायते तस्मान्नग्निका देया ।

याज्ञवल्क्यः ।

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।

नारदः ।

यावन्तश्चर्त्तवस्तस्याः समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति तां ॥

यत्तु मनुनोक्तं ।

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

तद्गुणवति असम्भवति गुणहीनाय न दद्यादित्येवंपरं, न पुनर्गुणहीननिषेधार्थं ।

अत आह यमः ।

दद्याद्गुणवते कन्यां नग्निकामेव शंसितः ।
न त्वेव गुणहीनाय नोपरुन्ध्याद्रजस्वलां ॥

इति देयकन्याकालनिर्णयः ।

---

(१) त्रयस्ते इति ग० ।

## अथ स्वयम्वरकालनिर्णयः ।

यम ।

> कन्या द्वादशमे वर्षे यदाऽदत्ता गृहे वसेत् ।
> भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

मनुरपि ।

> त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
> ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
> अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
> नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥

सोऽपि न पापमाप्नोतीत्यर्थः ।

बौधायन ।

> अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

'सदृशे' गुणवति ।

वसिष्ठ ।

कुमारी ऋतुमती त्रीणि त्रीणि वर्षाण्युपासीत, ऊर्ध्वं त्रिवर्षेभ्यः पतिं विन्देत तुल्यं ।

यत्पुनर्गौतमेनोक्तं ।

त्रीनृतूनतीत्य स्वयं युज्यते ।

यच्च विष्णुनोक्तं ।

> ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयम्वरं ।
> ऋतुत्रये व्यतीते [illegible] प्रभवत्यात्मनस्तथा ॥

तदृतुत्रयादर्वाक्निषेधपरं, यदा तु न वर्षत्रयमवस्थातुमलं तदा ऋतुत्रयादूर्ध्वमपि वरयेत् ।

कात्यायनः ।

वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा ।
ऋत्वागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिम् ॥

'ऋत्वागमान्' ऋतून् ।

नारदः ।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥

'प्रतिगृह्य' वरयित्वा ।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयम्वरविधायकं पूर्वोदाहृतविष्णु-गौतम नारद-कात्यायनवचनसमानार्थत्वेन व्याचक्षते, तदयुक्तं । तथा हि पितुरदाने प्राप्ते न तु वरयितुर्देशान्तरगमने मरणे वा तथात् क्रमानुरोधात्पूर्ववैव व्याख्या श्रेयसी । यदा तु नैव कश्चित्पात्रं कन्या राजानमाश्रयेत्, अनुज्ञया तस्य वरं प्रतीक्ष्य वरयेत् स्वयं, कश्चि-द्दाता पक्षेषु मध्ये ।

याज्ञवल्क्यः ।

गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयम्वरं ।

'गम्यं' गमनार्हं ।

इति स्वयम्वरकालनिर्णयः ।

---

## अथ चतुर्थाश्रमस्वीकारकालनिर्णयः ।

उषित्वैव ततः सम्यक् तृतीयं ह्याश्रमं प्रति ।
चतुर्थमाश्रमं गच्छेत् कृतहोमो जितेन्द्रियः ॥

मत्स्यपुराणे ।

चतुर्थं त्वायुषः शेषं प्रमयित्वा व्रजं व्रजेत् ।
क्षेम-सोम-मखाभ्याम वानप्रस्थोऽनुनिस्तमः ॥
आश्रमादाश्रमं सद्य पूतो भवति कर्मभिः ।
सोऽपि तस्य पिता तादृक् क्रमेण समाहितः ॥
वानप्रस्थ समास्थाय चतुर्थाश्रममथमात् ।
वने चरन्निह्यैव(१) तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा परिव्रजेत् ॥

तृतीयं भागमिति यावता कालेन तपःसिद्धिः विषयाभिलाषश्च निवर्त्तते तावदित्यर्थः, न हि मुख्यस्तृतीय कालो न यावति च वयसि मदावेशः तदा तदा भवेदिति तदा परिव्रजेदित्यर्थः ।

आश्रमादाश्रमं गत्वा कृतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजेत्स्य वर्द्धते ॥

समुच्चयपक्षाश्रयमेतत्, यदा ब्रह्मचर्याश्रमं वानप्रस्थाश्रमौ कृत्वो-भयथावश्यकालुष्ठानेन जितेन्द्रियः तदा प्रव्रजन्वर्द्धते इति पूर्वाश्रम-धर्मानुवाद ।

मार्कण्डेयपुराणे ।

ऋतुत्याच सुतान्देवानसमर्थं पितृस्तथा ।

(१) वनेष्वनुविहृत्यैवेति ख० ।

भूतादींश्च कथं मौढ्यात् स्वर्गतिं गन्तुमिच्छसि ॥

कालिकापुराणे ।

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः ।
ऋणानि त्रीण्यपाकृत्य दत्त्वा यज्ञैश्च संन्यसेत् ॥
गुरुणानुमतः स्नात्वा सदारो वै द्विजोत्तमः ।
अनुत्पाद्य सुतं नैव ब्राह्मणः प्रव्रजेद्गृहात् ॥

ब्रह्मवैवर्त्ते ।

ऋणत्रयापाकरणमविधायाजितेन्द्रियः ।
राग-द्वेषावनिर्जित्य मोक्षमिच्छन् पतत्यधः ॥

मनुः ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥

मोक्षैकफलत्वात् ज्ञानमेव चात्र मोक्षशब्देनोच्यते, अतएव मोक्षं सेवमान इत्युक्तिः ।

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
दत्त्वा तु शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य द्विजो वेदं अनुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥

समुच्चयपक्षमाश्रित्येतरपक्षनिन्दावचनं न पुनः प्रतिषेधः उदितानुदितहोमवत्, अन्यथा "यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेदिति प्रत्यक्षश्रावालश्रुतिविरोधः स्यात् । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः

एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीति एतत्तैत्तिरीय-श्रुतिवचनमपि समुच्चयपक्षाश्रयमेव।

मनु-लिखितौ ।

वनवासादूर्ध्वं शान्तस्य परिणतवयसः कामतः परिव्रजनमेवाभि-मातमग्न्यारोप्य व्यपगतभय-लोभ-मोह-क्रोध-शोक-द्रोह-मद-मत्सर-कलहश्लोचितवेदनावधिगतमनसः अङ्गाद्यनियमं भवति तस्मात्तद्-हरेवोपासीत यदहरेव संन्यसेत् सर्वारम्भपरिग्रहानुत्सृज्य ।

विष्णुपुराणात् ।

सुत-द्रव्य-कलत्रेषु त्यक्तस्नेहो नराधिपः ।
चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥
दिवा द्विष्ये च भोगे तु विषये चञ्चलात्मने ।
दृष्टानुश्राविके चैव विरक्तः संन्यसेदनात् ॥

कूर्मपुराणे ।

किञ्चिच्छ्रेयस्करतमं लोकेऽस्मिन् ब्रह्मसत्तमाः ।
यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥
आराध्य तपसा देवं योगिनं परमेश्वरम् ।
प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥
वनवासात्परिश्रान्तः प्रव्रजेद्विधिपूर्वकम् ।
श्राद्धदिष्टो विरक्तो वा नातुरो वाथ दुःखितः ॥
आतुराणां विशेषोऽस्ति न विधिर्न च सत्क्रिया ।
प्रैषमात्रं तु संन्यास आतुराणां विधीयते ॥
उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिगोचरे ।

भयभीतस्य सन्न्यास अङ्गिरा मुनिरब्रवीत् ॥
विरक्तः सन्न्यसेद्विद्वानिच्छापि द्विजोत्तम ।
अथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥
तपस्तप्त्वा तपोयोगाद्विरक्तः सन्न्यसेत्तथा ।
प्रक्षुण्णसमर्थोऽपि जुहोति यजतिक्रिया ॥
अन्धः पङ्गुर्दरिद्रो वा विरक्तः सन्न्यसेत् द्विज ।
सर्वेषामेव वैराग्यं जायते सर्ववस्तुषु ।
तदैव सन्न्यसेद्विद्वानन्यथा पतितो भवेत् ॥

यम ।

चीर्णवेदव्रतो विद्वान् ब्राह्मणो मोक्षमाश्रयेत् ।
यत्र सर्वेषु भावेषु आसाद्य परिव्रजेत् ॥
पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनाद्वा धूतपापो वा परं मध्यानमाश्रयेत् ॥

कूर्मपुराणे ।

उत्पन्नज्ञानविज्ञानो वैराग्यं परमं गतः ।
यत् भवेत् ब्रह्मचर्यादीन् यदीच्छेत्परमाङ्गतिं ॥
दारानाहृत्य विधिवदन्यथा विविधैर्मखैः ।
यजेदुत्पादयेत्पुत्रान् विरक्तो यदि सन्न्यसेत् ॥
अनिष्ट्वा विधिवद् यज्ञैरनुत्पाद्य तथात्मजम् ।
[illegible] गार्हस्थ्यं गृहीत्वा तु सन्न्यसेत् बुद्धिमान् द्विजः ॥
अथ वैराग्यवेगेन स्यात् नोत्सहते गृहे ।
तदैव सन्न्यसेद्विद्वाननिर्वेद्य विचारयेत् ॥

प्रथमादाश्रमाद्वापि विरक्तो भवसागरात्।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥
अथ तृतीयं सम्प्राप्य गृहस्थाश्रममुत्तमं।
चतुर्थमायुषोभागं सङ्गो वापि परिव्रजेत्॥

इति चतुर्थाश्रमकालनिर्णयः।

---

## अथाग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

तत्र मनु-शातातपौ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

स च सोदरो भ्राता नान्यो नान्यमातृजः। एतदग्रे च स्फुटीभविष्यति, तथा पतितोन्मत्त-नपुंसकान्ध-बधिर-मूक-जड़-कुब्ज-कुष्ठि-श्वित्रि-राजयक्ष्मोदराद्यसाध्यमहारोगाभिभूत-नास्तिक-शास्त्रयोगिप्रव्रजितचिरकालप्रोषितेषु एतेष्वदोष इत्यवगन्तव्यं। एतेषां परिणयादावधिकारस्याविद्यमानत्वात्।

अत एव छन्दोगपरिशिष्टे कात्यायनः।

देशान्तरस्थ-क्लीबैकवृषणांश्च सहोदरान्।
वेश्यातिसक्त-पतित-शूद्रतुल्यातिरोगिणः॥
जड़-मूकान्ध-बधिर कुब्ज-वामन-कुण्ठकान्।
अतिवृद्धानदारांश्च कृषिसक्तान् नृपस्य च॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुलटोन्मत्त-चौरांश्च परिविन्दन्न दुष्यति॥

शातातपः ।

क्लीबे देशान्तरस्थे वा पतिते प्रव्रजिते तथा(१) ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

सुमन्तुः ।

व्यसनासक्तचित्तो वा नास्तिको वाथ वाग्रजः ।
कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥
पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

यत्र पाठकौ ।

दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ।

इति पाठः । 'परनारीसुतान्' इत्यत्र कौलकादिशब्दम् ।

वसिष्ठः ।

अष्टौ दश-द्वादशवर्षाणि भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति,

अनिविष्टं भ्रातरमावोढारे, भवन्ति चात्र श्लोकाः ।

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यं प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥
उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा ।
राजयक्ष्मादियुतश्च न न्याय्यः स्यात् प्रतीक्षितुम् ॥
षण्ड-वामन-कुब्जान्ध-पतितोन्मत्त-कुण्डकान् ।

(१) पतिते प्रव्रजिते तथेति पाठे गाथाधिक्यदोषो भवितुमर्हतीति विभावनीयम् ।

रोगि-बधिर-मूकेषु न दोषः परिवेदने ॥

सुमन्तुः ।

ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।

अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

तथा वृद्धवसिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथं ।

अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

एतच्चाधिकारिणि भ्रातरि अकुर्वति वेदितव्यं। अनधिकारिणि अतिक्रमाभावात् तदनुज्ञापनञ्च युज्यते ।

अतएव हारीतः ।

सोदर्याणान्तु सर्वेषां परिवेत्ता कथं भवेत् ।

दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

अस्यार्थः। सोदरेऽप्यधिकारिणि अकृतविवाहे विवाहमनीहमाने अग्निहितेऽवतिष्ठति तदनुज्ञां विनाग्निहोत्राधानविवाहौ न कदाचनापि कर्त्तव्यः।

यदाहोशनाः ।

पिता पितामहो यस्य अग्रजो वाथ कस्यचित् ।

तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

सुमन्तुः ।

पितुर्यस्य [illegible] नाधीतं कथं पुत्रस्तु कारयेत् ।

अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

अत्राप्यनुज्ञाते स्थिते वा शातातपः ।

अग्नयः परिविन्दन्ति कनिष्ठस्य या च कन्या विरूपिका।

एतच्चाधिकाररहिते भ्रातरीति पूर्ववचनादतिकुरूपा ज्येष्ठापि सती न कनिष्ठाया विवाहविघ्नहेतुर्भवितु मर्हतीति।

इत्यग्निहोत्राधान-दारस्वीकारकालनिर्णयः।

---

## अथावसथ्याधानकालनिर्णयः।

तत्र याज्ञवल्क्यः।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते।
योऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते॥

अत्र केचिदाहुः।

दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते।

इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति अग्न्युत्पत्तेरन्यनिष्पत्तिफलत्वादिति तदयुक्तं अन्यनिष्पत्तेर-भावत्वात्।

अतएवाह गार्ग्यः।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहं।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत्॥

ब्रह्मगर्भोऽपि।

याजनाध्यापनैश्चैव अग्निहोत्रोपधमेन च।
उपासनं समादध्यात् स्वकाले परिवेदयन्॥

'स्वकाले' यथाविहितकाले।

तथाच स्मृतिः ।

आधानं विधिवद्वेश्यकुलभयाद्दापि वा ।
महानसाद्वाग्नीनां दार-दायाद्यकालयोः ॥

पारस्करः ।

आवसथ्याधानं दारकाले दायाद्यकाले एकेषां ।

गौतमः ।

पुत्रमुत्पाद्यावसथ्याधानं कृत्वातिथीन् संपूजयेत् ।

व्यासः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥
यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

वेदस्याधिकारित्व एतद्द्रष्टव्यं अनधीयानं कृताग्निपरिग्रहेऽपि ज्येष्ठे भ्रातरि वेदाध्ययनादायको नैवाग्निपरिग्रहमकुर्वन्नपि प्रत्यवायेन सह संवध्यते ।

अथ गर्गः ।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥

अनधीतवेदस्यापि समावर्त्तनविवाहः मत्यमतेन दर्शित ।

अनधीत्य द्विजो वेदं स्नात्वोदाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥

इत्यावसथ्याधानकालनिर्णयः ।

## अथाग्निहोत्रकालः।

तत्र कात्यायनः।

उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥
रात्रेस्तु षोड़शे भागे ग्रह-नक्षत्रभूषिते।
कालं त्वनुदितं ज्ञात्वा होमं कुर्यादिचक्षणः॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥
रेखामात्रं तु दृश्येत रश्मिभिश्च समन्वितः।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत्॥

मनुः।

सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।

बौधायनः।

आसायं कर्मणः प्रातरप्रातः सायकर्मणः।
आहुतिर्नातिपद्येत पर्वेव पार्वणान्तरात्॥

बौधायनीयपरिशिष्टे।

अथयोर्व स प्राजापतः आर्वते अग्निहोत्रिणां यथानो यमन्त-कौमानयास्य तथा विराचीय-पक्षावयो दिमासार्द्धमासायामिहोत्र-मजुहवुत्तस्याधायावेद आमयायात्रौतार्धमासायाग्निहोत्रं जुहुयात् उपवेश्येऽहनि प्रातःप्राय चतुर्दश चतुर्गृहीतानि प्रातश्चतुर्दश[१]।

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्तय न समीचीन प्रति-भाति।

चतुर्दशपक्षग्रहणमुपलक्षणार्थं, कदाचित् पञ्चदशापि भवन्ति कदाचित्तुर्दशैतानि कदाचित् षोडशानि ।

मरीचिः ।

पक्षहोमानथोत्सृज्य गत्वा कस्माच्चिन्निवर्त्तते ।
होमं पुनः प्रकुर्वीत भवेच्च न स दोषभाक् ॥

इत्यग्निहोत्रकालनिर्णयः ।

---

## अथ प्रासादाद्यारम्भकालः ।

यथाकालं शुभं ज्ञात्वा सदा भवनमारभेत् ।
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ॥
वैशाखे धन-रत्नानि ज्यैष्ठे मृत्युस्तथैव च ।
आषाढे भृत्य-रत्नानि पशुवर्गमवाप्नुयात् ॥
श्रावणे भृत्यलाभञ्च हानिर्भाद्रपदे भवेत् ।
पत्नीनाशः आश्विने स्यात् कार्त्तिके धन-धान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतोभयम् ॥

'भक्तं' भक्ष्यमात्रोपलक्षणम् ।

लाभञ्च बहुशो विद्यादग्निं माघे विनिर्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालबलं स्मृतम् ॥

विश्वकर्ममते ।

चैत्रे शोकाकुलोभर्त्ता वैशाखे च धनान्वितः ।
ज्यैष्ठे गृही विपद्येत नश्यन्ति पशवः शुचौ ॥
श्रावणे धनवृद्धिः भाद्रमध्ये न वसेद्गृही ।

कलहश्चाश्विने मासि भृत्या नश्यन्ति कार्त्तिके ॥
मार्गशीर्षे धनप्राप्तिः सहस्ये कामसम्पदः ।

'सहस्यः' पौषः ।

माघे भवेदग्निभयं फाल्गुने श्रीरनुत्तमा ॥

तथा सङ्ग्रहे ।

व्याधिः शोको भवेच्चैत्रे वैशाखे धनरत्नयुक् ।
गो-महिष्यादिभिर्युक्तो गृहमेधी सदैव हि ॥
ज्यैष्ठे मृत्युमवाप्नोति आषाढे पशुनाशनम् ।
भृत्यलाभः सुरत्नानि लाभोऽर्थस्य तथैव च ॥
श्रावणे भृत्यलाभश्च धनवृद्धिरनाकुला ।
मासि भाद्रपदे गेहं दुःखदं जायते ध्रुवम् ॥
तत्र सर्वस्वहानिस्तु भवेत्तद्गृहमेधिनः ।
आश्विने तु भवेन्नित्यं पत्नीनाशस्तथा कलिः ॥
कार्त्तिके स्याद्बहु धान्यं भृत्यनाशोऽप्यहर्निशम् ।
अत एव प्रशस्यन्ते माघादारम्भणे स्मृताः ॥
मार्गशीर्षे गृहारम्भो धनलाभसुखप्रदः ।
भक्ष्यं वै विविधं तत्र वस्त्रयादिसुरत्नकम् ॥
धान्यलाभः सुभद्रश्च पशुलाभो महानपि ।
मित्राणां चैव पुत्राणां स्त्रीणां लाभः परो भवेत् ॥
पौषे भीतिः परिज्ञेया तस्कराणां सदा तथा ।
धन-धान्यादिलाभः स्यात् पुत्र-मित्रादिसम्पदः ॥
माघे वह्निभयं ज्ञेयं सर्वसन्तापकृत्सदा ।

फाल्गुने चैव विज्ञेयो लाभः काञ्चनजः शुभः ॥
पुत्रलाभो महानच सुखं सौहृदसंयुतः ।
इति मासफलं प्रोक्तं त्रैविध्यमधुना ब्रुवे ।
उत्तमं मध्यमञ्चैव कनिष्ठञ्चेति तत् त्रिधा ॥
वैशाखे श्रावणे चैव मार्गशीर्षे च फाल्गुने ।
उत्तमास्ते समाख्याताः कथ्यन्ते मध्यमास्तथा ।
आषाढे कार्त्तिके पुष्ये मध्यमाश्चेति कीर्त्तिताः ॥
कनिष्ठास्तान् समाख्यास्ये निबोधत समासतः ।
चैत्रो ज्यैष्ठो नभस्य इषश्चैवोर्जोमासाः कनिष्ठकाः ॥
'इष' आश्विनः ।

फलमेषां समासेन कथितं तत्परिस्फुटम् ।
अपराजितपृच्छायाम् ।

रवौ कन्या-तुलालिस्थे वास्तो पूर्वे शिरः स्थितम् ।
'अलि' वृश्चिकः ।

चापे च मकरे कुम्भे दक्षिणेन व्यवस्थितम् ।
आदित्यवारयोगेन च वास्तु शरति क्रमात् ॥
यत्र भानुः शिरस्तत्र लक्षितव्यं रविक्रमात् ।
देवागारं गृहञ्चैव न कुर्याच्छीर्षसम्मुखम् ॥
मृत्युरोगभयानि स्युः प्रशस्तं कुक्षिसम्मुखम् ।
तुला वृश्चिक कन्यासु भास्करो यदि संस्थितः ।
॥ तदा प्राङ्मुखं कुर्यात् गृहं भवति निष्फलम् ॥
धनुर्मकर कुम्भेषु यदा तिष्ठति भास्करः ।

तदा याम्यमुखं वेश्म राज-चोराग्निभीतिदम् ॥
मीने मेषे वृषे प्रत्यङ्मुखं स्त्रीकलहावहम् ।
मिथुने कर्कटे सिंहे न कुर्यात्सोत्तराननम् ।
तथा कृतं भवेद्वेश्म दोष-शोक-भयावहम् ॥

विश्वकर्मा ।

रवौ कन्या-तुलालिस्थे गृहं वारुणदिङ्मुखम् ।
न कुर्यात्तर्हि शून्यं स्यात्स च दृष्टो भवेत् प्रभो ॥
दक्षिणाभिमुखं कुम्भ-मृगचापस्थिते रवौ ।
कुर्वीत निष्फलं तस्मात् नृपदण्ड-वधादिकृत् ॥
न मीन-वृष-मेषस्थे कुर्वीत प्राङ्मुखं रवौ ।
तद्गृहस्य भविच्छुद्रराजचोरादिकाघतः ॥
रवौ मिथुन-सिंहस्थे न कर्कस्थेऽप्युदङ्मुखम् ।
कुर्यात्तद्वै दरिद्रत्वं दद्यात्स पण्डदोषताम् ॥

विश्वकर्मप्रोक्ते ।

अधुना कुण्डशोधकं रविचक्रायुधं ध्रुवम् ।
रेखाद्वयं प्रकर्तव्यं तत्र वै पूर्वपश्चिमम् ॥
दक्षिणोत्तरमन्यद्द्वे रेखे वह्नि-वायुगा ।
ईश-नैऋतगा चैका तत्र राशींस्तु विन्यसेत् ॥
क्रमादीशानरेखाया रेखाद्वादशकं भवेत् ।
तत्र कन्यादिसिंहान्ता राशयो द्वादश क्रमात् ॥
यत्र यत्र भवेद्भानुस्तत्र वास्तुशिरः स्थितम् ।
खननात् सप्तमे राशौ वास्तोर्दृष्टिः पतेत् क्रमात् ॥

यद्रेखायां भवेत्सूर्यो वास्तुमस्तकसंयुतः ।
तद्रेखार्पितं राशिं संमुखश्चैव दूषयेत् ॥
रविदृष्टिगतं राशिं जानीयात्तभिधामितम् ।
रविभुक्तस्तु यो राशिः स च दग्धः प्रकीर्त्तितः ॥
शिरःस्थिते न कर्त्तव्यं रवौ द्वारं कथञ्चन ।
पञ्चत्वानात्मने तस्मिन् भयं स्याद्गृहमेधिनः ॥
वास्तुदृष्टिस्थिते राशौ यदेद्द्वारन्तु वेश्मनः ।
धननाशो भवेत्तत्र पुत्र-मित्र-पशुक्षयः ॥
रविरेखापृष्ठे राशौ कृते रोगभयं महत् ।
रोग-चोरादिभिश्चैव वह्नि-राजकुलादिभिः ॥
रविदृष्टिगते राशौ गृहद्वारन्तु यत्र हि ।
तत्र संवसतो नित्यं रोग-दुःखं सुदारुणम् ॥
दग्धे द्वारे कृते स्थानात्तत्रस्तु स्याद्धनक्षयः ।
मकरस्थे कुम्भगे भानौ सिंहगे कर्कटे तथा ।
पूर्वास्यं पश्चिमास्यञ्च तदा गेहं प्रकारयेत् ॥
फलमेतत् समुद्दिष्टं वर्णानां भवनाश्रयम् ।
कन्यादौ नारभेद्वेश्म मङ्गलार्थी कदाचन ॥

कुण्डलीचक्रस्य फलितार्थमाह ।

फलोद्देशं प्रवक्ष्यामि प्रत्येकेन परिस्फुटम् ।
सुखवृद्धिस्तथा शान्तिः सर्वपापोपमर्दनम् ॥
वन्धुनाशस्तथा तस्य नक्षत्रे फलमीदृशम् ।
भूरिलक्ष्मीप्रदश्चैव पाशुभिश्च यतो दृढी ॥

एवमादि फलं ज्ञेयं कुम्भे वै सर्वमासि च ।
पुत्राः पौत्राः प्रवर्द्धन्ते लक्ष्मीरविचला भवेत् ॥
शूरश्च कृत्तिमान्भर्त्ता सुख-सौभाग्यसंयुतः ।
सिंहे त्वविकलं सर्वमेवमादि फलं भवेत् ॥
हृष्टः पुष्टः सुभगवो बहुगावः श्रियान्वितः ।
भर्त्ता वै लभते सौख्यं कर्के च फलमीदृशम् ॥
मेषे वृषे तुलायाञ्च वृश्चिके च यदा रविः ।
उद्गार्थं यत्नश्चैव मेतदार्थं प्रकारयेत् ॥
एतेषान्तु क्रमेणैव फलमत्र वदाम्यहम् ।
शुभलक्ष्मीफलं सौख्यं पुत्र-पौत्रसमृद्धये ॥
महाभागी भवेन्नून सर्वसौभाग्यसंयुतः ।
एवमादि फलं मेषे भर्त्ता वै लभते चिरम् ॥
वृषे सौख्यं चिरा लक्ष्मीः धनवृद्धिरनाकुला ।
पुत्राश्च बहवस्तस्य जायन्ते शोभनास्त्रियः ॥
एवमादि फलं भर्त्तुस्तत्र प्रोक्तं मनीषिभिः ।
तुलायां प्रोच्यते सम्यक् फलमिष्टतमं नृणाम् ॥
धनं धान्यं सुखं भोगो सौख्य-पुत्रसमृद्धयः ।
सन्मित्रास्तथा भृत्याः पशवः शोभना गृहे ॥
पुष्कराशिस्तथा भर्त्तुस्तुलायामीदृशं फलम् ।
द्विषतां सङ्क्षयः सम्यक् स्वकुले वृद्धिरेव च ॥
धनवान् भोगसम्पन्नो भर्त्ता स्याद्गुणान्वितः ।
एवमादि फलं तत्र वृश्चिके जायते ध्रुवम् ॥

नक्र-कुम्भौ प्रतिज्ञेयौ प्रकाश्ये मन्दिरे स्थितौ ।
हरि-कर्कटकौ ज्ञेयौ प्रतीचीमुखवेश्मन ॥

'हरि' सिंह ।

मेषोवृषस्तथा चैतौ सौम्यागारकाले स्थितौ ।
तुला च वृश्चिकश्चैव दक्षिणस्यासुभौ स्थितौ ॥
कोणस्थानामथोवच्मे कन्यादीनां फलं यथा ।
यत कन्यास्थितोऽर्काङ्गो धनुर्धुमसमाश्रयात् ॥
शुभि मीन-खरे चैव मिथुन सर्वदा स्थितम् ।
कन्यां प्राप्ते रवौ सम्यक् नारभेत गृह सुधी ॥
■ वृद्धिश्च जायेत पुत्र-पौत्रपशुक्षय ।
सर्वदार्त्तियुतोभर्त्ता वसेद्य न सशय ॥
धनुस्थिते रवौ कार्यं नैव गेह कदाचन ।
पशुभिर्घात्यते तत्र जायन्ते हि न सम्पद् ॥
अथवा राजदण्डेन पीड्यतेऽसौ वसन् गृही ।
यदा भानुस्तु मीनस्थस्तदा गेह न कारयेत् ॥
हतवैद्याधिशोकाय भयाय विपुलाय च ।
अधीरस्य तदा तस्य ग्लानि स्यान्मौनत फलम् ॥
मिथुनस्थो यदा भानुस्तदा वेश्म न कारयेत् ।
अग्निना दह्यते मन्दे वेश्म दुःखप्रद सदा ॥
मीनस्थे वह्निदिग्भागे गृहारम्भोऽग्निजीविनाम् ।
मिथुने लाभयारम्भ ईशे सद्याभिना स्थित ॥
धायव्ये कन्यका ज्ञेयाः गृहारम्भ सुखप्रद' ।

स्वरोपजीविनां चैव वेश्यादीनां सदैव हि ॥
नैर्ऋत्यां कार्मुके च खादारम्भः श्वपचां गृहे ।
इदानीं कथये तेऽत्र राशि-माससमागमम् ॥
चैत्रे मेषो भवेद्यत्र तत्र गेहं न कारयेत् ।
हन्ते व्याधिर्भयञ्चैव जायते गृहमेधिनाम् ।
ज्यैष्ठे तु मिथुनं यत्र तत्र दैधं भवेत् सदा ॥

'दैध' इत्युद्धुमिति यावत् ।

आषाढे कर्कटो दुष्टो नभस्ये कन्यका तथा ।
आश्विने तु तुला दुष्टा वृश्चिकः कार्त्तिके तथा ॥
चापं मार्गे भवेद्दुष्टं तेन मार्गो न शोभनः ।
माघे कुम्भस्तु वै दुष्टस्तथारम्भो न शोभनः ॥
मासि मासाष्टकश्चेति दूषितं वै परस्परम् ।
तेन तेषु न कर्त्तव्यं मन्दिरं शुभमिच्छता ॥

तथा ।

सिंहगं मेषगं चैव गुरुं यत्नेन वर्जयेत् ।
अस्तङ्गते गुरौ शुक्रे गृहारम्भो न शस्यते ।
नातिवीर्ये निशानाथे गृहारम्भो भवेदिह ॥

विष्णुधर्मोत्तरे ।

शरत्काले न कर्त्तव्यं वास्तुकर्म विजानता ।

तथा ।

कृष्णपक्षान्ते त्रिभागे कृष्णैकादशीमारभ्य दिनपञ्चके शुक्लपक्षान्ते त्रिभागे शुक्लप्रतिपदमारभ्य दिनपञ्चके, एवं कृष्णैकादशीमारभ्य दिनदशक त्रिविध भवति ।

तथा ।

चतुर्थीं नवमीञ्चैव वर्जयेच्च चतुर्दशीम् ।

विश्वकर्ममते ।

तिथयो यत्र शस्यन्ते याः शुभा वास्तुकर्मणि ।
शुक्ले मासि सिते पक्षे प्रतिपच्च द्वितीयका ॥
तृतीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।
एकादशी-त्रयोदश्यौ पूर्णमासी प्रकीर्त्तिता ॥
एताः पूर्णेति विख्याता नामतस्तिथयस्त्विमाः ।
चतुर्थ्यां नाथ षष्ठ्या वा दग्धिकाश्च विवर्जयेत् ॥
तथ नवमतो पञ्चाम्बराव्याधिभय भवेत् ।
तथा वाराः प्रशस्यन्ते रवि मङ्गलवर्जिताः ॥
छिद्राण्येव क्षितिजेत्पापैर्ग्रहपीडितम् ।
ग्रहोपसृष्टं सन्ध्याख्य व्यतीपातहतञ्च यत् ॥

'ग्रहोपसृष्टं पापग्रहदूषितम् ।

चन्द्र-तारानुकूले भे कर्त्तुं कार्यं विजानता ।
ध्रुवाणि तानि शस्तानि प्राकारवेश्मेन तथा ॥

'ध्रुवाणि रोहिण्युत्तरात्रय चेति ।

वायव्यं वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।

मत्स्यपुराणे ।

वज्र व्याघात शूलेषु व्यतीपातातिगण्डयोः ।
विष्कुम्भ गण्ड परिघान् वज्रयोगेषु कारयेत् ॥

विश्वकर्ममते ।

अथ योगान् प्रवक्ष्यामि वर्जिता ये मनीषिभिः ।
अतिगण्डो व्यतीपातः परिघो वज्र एव च ॥
गण्डं शूलञ्च विष्कुम्भो व्याघातश्च सुदुःखदः ।
एतान् योगान् समालक्ष्य प्रभावे तेषु चैव हि ॥
विष्कुम्भे घटिकास्तिस्रः पञ्च वा वर्जयेत्सुधीः ।
वज्रे तु घटिकास्तिस्रो नव वा परिवर्जयेत् ॥
अतिगण्डेषु वै षट्‌ नव वा दोषदायकाः ।
गण्डे तु घटिकाः षड्वा व्याघाते नव षट् च वा ॥
शूले तु घटिकाः पञ्च सप्त वा दोषदा मताः ।
वैधृतौ च व्यतीपाते घटिकाषष्टिरेव च ॥
परिघे घटिकास्त्रिंशत् षट्त्रिंशदथवा शुभाः ।
एतेषां घटिकाः शेषाः सर्वाद्यान्याः शुभावहाः ॥
योगाः शुभावहाः कार्य्या वास्तुस्थापनकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥

तथा ।

करणान्यथ वक्ष्यामि वास्त्वारम्भे शुभाय वै ।
तैतिलं वणिजं नागं बालवं करणोत्तमम् ।
धन-धान्यकराणि स्युः श्रेयसे च सुखाय च ॥

विष्णुधर्मोत्तरे ।

अङ्गारकादिनं नाम करणं विष्टिसंज्ञकम् ।

वर्जयेदित्यनुषङ्गः ।

मत्स्यपुराणे ।

श्वेते मैत्रेऽथ माहेन्द्रे गन्धे वाभि विरोहणे ।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्
स्तम्भोच्छ्रयादि कर्त्तव्यमन्यत्र परिवर्ज्जयेत् ।
प्रासादेऽप्येवमेव स्यात् कूप वापीषु चैव हि ॥

विश्वकर्म्ममते ।

मुहूर्त्तान् कथयिष्यामि ये शस्ताः सर्वसम्पदः ।
माहेन्द्रे रौहिणे चैव सावित्रे मित्रके तथा ॥
गन्धर्वेऽभिजिति श्वेते मुहूर्त्ते कारयेत् गृहान् ।
अथ साधारणान् ब्रूमो मुहूर्त्तान् सप्त चैव हि ॥
विराजोविजय श्वेत सावित्रो मैत्रिकोऽभिजित् ।
गन्धर्वेति समाख्याता सर्वे सर्वार्थसिद्धिदा ॥
अथ वारविशेषेण वर्ज्जनीयान् ब्रवीमि ते ।
अर्य्यम्णोऽर्के तु वैराज्यचन्द्रे ये ब्रह्मराक्षसौ ॥
पित्र्या क्षेमी कुजे मष्टी बुधे चैवाभिजित्तथा ।
पित्र्याह्नौ तथा शुक्रे राक्षसाप्यौ बृहस्पतौ ।
भौजङ्गेशौ मुहूर्त्तौ तौ वर्ज्जनीयौ शनैश्चरे ॥

विष्णुधर्म्मोत्तरे ।

स्थिरलग्ने स्थिरांशे च कर्त्तुरुपचयान्विते ।

'स्थिरलग्नानि' वृष सिंह वृश्चिक-कुम्भाः । 'कर्त्तुः' कर्त्तृराशेः, 'उपचयान्विते' त्रिषडेकादशस्थानस्थिते ।

तथाच जातके ।

त्रिषडेकादशदशमान्युपचयभवनान्यतोऽन्यथान्यानि ।

यस्य सौम्या ग्रहाः केन्द्रे त्रिकोणे चापि भार्गवः ।
पापाश्चोपचयस्थाने तस्मिन् कार्य्यं निवेशनम् ॥

वृहस्पति-शुक्र-बुध-चन्द्राः 'सौम्याः'। क्षीणेन्दु-रवि-मङ्गल-शनैश्चराः 'पापाः', संयुक्तो बुधश्च ।

तथाच लघुजातके ।

क्षीणेन्द्वर्क-यमाराः पापास्तैः संयुतः सौम्यः ।

'यमः' शनैश्चरः, 'आरः' मङ्गलः, 'सौम्यः' बुधः इति । 'केन्द्राणि' लग्नानि प्रथम-चतुर्थ-सप्तम-दशमस्थानानि ।'त्रिकोणं' नवपञ्चमस्थानं ।

तथाच जातके ।

केन्द्रचतुष्टयं कण्टकञ्च स्यात् लग्नदशचतुर्थानां संज्ञाः इति,
नवपञ्चमं त्रिकोणं नवर्क्षत्रिकोणं चेति ।
केन्द्रस्थं कर्म्मयोगाख्यं सर्व्वपक्षेण कर्म्मसु ।
केन्द्रसौम्ययुतं देयं न तु शून्यं कदाचन ॥

विश्वकर्म्ममते ।

अथ लग्नं प्रवक्ष्यामि गृहारम्भे शुभावहं ।
वृषो धनुस्तुला-कन्या मिथुनं कलसस्तथा ॥
लग्नान्येतानि शस्तानि गृह-प्रासादकर्म्मणि ।
ह्यतमेतेषु लग्नेषु सर्व्वसिद्धी भवेदिह ॥
एकादशे तृतीये च षष्ठे पापग्रहाः शुभाः ।
पापग्रहेऽष्टमे चैव मरणं प्राप्यते ध्रुवं ॥
चन्द्रार्कादिग्रहाः सर्व्वे स्वक्षेत्रे शुभदा स्मृते ।

नीचगा न च नीचस्था न च तीक्ष्णांशदूषिता ॥

सूर्यादिग्रहाणां स्वक्षेत्राणि, सूर्यस्य सिंह एव, सोमस्य कर्क, भौमस्य मेष-वृश्चिकौ, बुधस्य मिथुन कन्ये, गुरोर्धनुर्मीनौ, शुक्रस्य वृष तुले शनैश्चरस्य मकर-कुम्भाविति।

तदुक्तं लघुजातके ।

कुज-शुक्र-बुधेन्द्वर्क ज्ञ शुक्र जीव कुज सौरि शनि गुरव भेशा इति।

एते क्रमेण मेषादीनां द्वादशानां राशीनां ईश्वरा इत्यर्थः ।

'कुज' मङ्गल, 'ज्ञ' बुध, 'जीव' गुरु, 'सौरि' शनैश्चर, 'भानि' राशय, इति ।

तयोश्च नीचञ्च परिभाषितं जातके ।

अज-वृष-मृगाङ्गना-कर्क-मीन-वणिज्यांशा कथिता अर्कादुच्चा दश त्र्यष्टाविंशति तिथीन्द्रियसप्तविंशतिर्विंशतिस्तथा नीचं सप्तममिति।

अस्यार्थः मेषस्याद्या दशभिरंशा रवेरुच्चं। वृषस्याद्यास्त्रयस्त्रिंशांशा सोमस्योच्च। मकराद्या अष्टाविंशतिस्त्रिंशांशा मङ्गलस्योच्च। एवं कन्याया पञ्चदशत्रिंशांशा बुधस्योच्च। कर्कटस्य पञ्च गुरोरुच्च। मीनस्य सप्तविंशति शुक्रस्योच्च। तुलाया विंशति शनेरुच्च।

एतत्सर्वं समालोच्य विबुध्य निपुणं सुधीः ।
आरभेत प्रयत्नेन वास्तुकर्म सुसिद्धिदं ॥

इति वास्तुप्रकरणं ।

---

## अथ प्रतिष्ठाकालनिर्णयः ।

[illegible] अस्मान्मत प्रतिष्ठाकालनिर्णय ।

विष्णुधर्मोत्तरे ।

वज्र उवाच ।

कस्मिन् काले तु कर्त्तव्या प्रतिष्ठा भृगुनन्दन ।

मार्कण्डेय उवाच ।

शृणु काल प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् काले कृता या स्यात् फलसिद्धिप्रदायिनी ॥
धन धान्यवती स्फीता वरदा च तदा भवेत् ।
दृढा भवति विख्याता चिदिवेग्रे गुरौ युते ॥
ऐन्द्रे तेजस्विनी स्फीता भक्तविग्रहकारिणी ।
तथाविधा तु सा स्फीता यदि दाहमवाप्नुयात् ॥
नित्याश्चर्ययुता माघे गन्धलोके तथैव च ।
अहिर्बुध्न्ये तथा नित्या लोकानुग्रहकारिणी ॥
पित्र्ये विनाशमाप्नोति कर्त्तुश्च मरणावहा ।
सौम्ये सौम्या तथा कर्त्तुर्वरदा च तथा भवेत् ।
ऐन्द्राग्ने नाशमाप्नोति कर्त्तुं कृत्वा विनाशन ॥
आश्विने श्रीमती भूत्वा तथा पुत्रमवाप्नुयात् ।
लोकाभिगम्या भाग्ये स्यात् कर्त्तुर्भाग्यवती भवेत् ॥
अशुभेऽपि यदा कार्या प्रतिष्ठा मनुजोत्तम ।
यस्मिन् युगे तु यो नाथो यो यो देव प्रकीर्त्तित ।
धन धान्यवती स्फीता कर्त्तुः श्रेयोजयावहा ॥

प्रभवादिभि पञ्चभि सवत्सरैर्विष्ण्वादीनि युगानि द्वादश तत्रे-वाभिहितानि ।

संवत्सराख्यवर्षेषु नित्यमाज्ञायुता भवेत् ।
परिपूर्वे तु भूतघ्नी लोकख्याता तथैव च ॥
इदापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धन-धान्यवती भवेत् ॥
इत्पूर्वे नाममाप्नोति कर्तुर्भाग्यवशा भवेत् ।
तथापि प्रभोर्नृत्यस्य समये रोहिता भवेत् ॥

प्रभवाद्यः पञ्च क्रमेण संवत्सर-परिवत्सरेदावत्सरानुवत्सरेद्वत्सर-संज्ञकाः एवमङ्गिरादिपञ्चकस्य क्रमेण संज्ञापञ्चकमेवमुत्तरत्रापीति तत्रैवाभिहितं ।

मत्स्यपुराणे ।

माघ शुक्ले शुभं पञ्चमीने प्रोक्षारायणे ।

विष्णुधर्मोत्तरे ।

उत्तरे लयने सौम्या धनवृद्धिकारी भवेत् ।
तथापि शुभे देवेशे सर्वार्थविवर्द्धनी ॥
शिशिरे लोककान्ता सा वृद्धा च वसुधाधिप ।
स्फीता वसन्ते सौम्या च वरदा च तथा भवेत् ॥
ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्राहृट्काले तथा नाश कार्या सह समाप्नुयात् ॥

प्राहृट्कालनिषेधश्च शिवप्रतिष्ठाव्यतिरिक्तविषय, शिवप्रतिष्ठायां तद्विधेः शिवप्रतिष्ठाकालनिर्णये दर्शितत्वात् ।

शरत्काले कृता नाश ग्रीष्ममेव प्रपद्यते ।
हेमन्ते च सदा सौम्या धर्मवृद्धिकरी भवेत् ॥

माघे कर्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
शोकानन्दकरी चैत्रे वैशाखे वरसंयुता ॥
आग्नायुता सदा ज्येष्ठे आषाढ़े धर्मवृद्धिदा ।
श्रावणे धनहीना स्यात् प्रौष्ठपादे विनश्यति ॥
आश्विने नाममाप्नोति वल्लिना कार्त्तिके तथा ।
सौम्ये सौभाग्यमतुल पौषे युद्धिरनुत्तमा ॥
दीपावहा तु माघे स्यात् कर्तुर्नाशन एव च ।
चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा ।
माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥

अत्र माघमासनिषेधो विष्णुप्रतिष्ठाविषय, विधिस्तु तद्व्यतिरिक्तदेवतामतिष्ठाविषय, मार्गशीर्षमासविधिस्तु विष्णुप्रतिष्ठाव्यतिरिक्तविषय. मार्गशीर्षमासनिषेधस्तु विष्णुप्रतिष्ठाकालनिर्णये दर्शितत्वात् । श्रावणाश्विनमासनिषेधस्तु विष्णुप्रतिष्ठाव्यतिरिक्तविषयः विष्णुप्रतिष्ठायामेतद्द्वयविधेस्तत्रैव दर्शितत्वात् ।

अपरे त्वाहुः "माघमासे सर्वदेवानामितिवचनात् विष्णुप्रतिष्ठापि तत्र कार्य्या माघमासादिनिषेधस्तु तत्तदन्यविषयतत्तत्प्रतिष्ठाविषयविशेषे ।

द्वितीये भयफलदा तृतीये च शुभप्रदा ।
धन-धान्यवती स्फीता वरदा च तथा भवेत् ।
यस्य यच्च दृष्टि स्यात् तस्मिन् शुभफलप्रदा[१] ॥
द्वितीयायां धर्मोपेता तृतीयायां धरप्रदा ।

(१) शुभफला सर्वदेति ख० ।

चतुर्थ्यां नागमाशेति यमस्य स्यात्सुखावहा ॥
विनायकस्य देवस्य तथा तत्र शिवप्रदा ।
पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत् ॥
षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी ।
अष्टम्यां धान्यवृद्धिः स्यान्नवम्यां तु विनश्यति ॥
भद्रकाख्याः शुभा तत्र कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा शुभा ॥
एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥
कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥
वृषरूपा च विज्ञेया तथा दोषवती नृप ।
दिग्दाहे चैव भूमौ च उत्पातेन तु या युता ॥
कर्तुर्व्याधिप्रदा तत्र प्रतिष्ठा तु क्रिया भवेत् ।
तिथिहानौ चयोश्चैवो वृद्धौ वृद्धिः प्रकीर्तिता ॥

मत्स्यपुराणे ।

पञ्चमी च द्वितीया च तृतीया चाष्टमी तथा ।
दशमी पौर्णमासी च शुभा तु फलदा भवेत् ॥

लावण्यसमुच्चये ।

तासु पक्षे सिते कार्या द्वितीया वै निमिस्थय ।
द्वितीयायुर्मतिं दद्यात्तृतीया पुत्रसम्पदम् ॥
पञ्चमी च श्रियं नित्यं सप्तमी रोगनाशनम् ।

दशमी भूमिवृद्धिश्च सौभाग्यञ्च त्रयोदशी ॥
नानाविधं धनं नूनं पौर्णमासी तिथिः सदा ।
एकविंशकरैर्नन्दा भद्रा पञ्चर्षिभानुभिः ॥
जया हि रामाद्विकामै रिक्ता वेद-षडेन्द्रियैः ।
बाण-दिक्‌तिथिभिः पूर्णा हीनमुख्या सिता क्रमात् ॥
एते शुक्लेऽनुलोमाः स्युः कृष्णे च विलोमतः ।
बृहस्पतिरिदं चायुर्बुधोजय-धनानि च ॥
सर्वं चार्कः शुभः शुक्रश्चन्द्रः शान्तिप्ररोहणे ।
कर्कौ सुयत्नाचाध्यंश्रीविषयामयुग्मके ॥
मन्ये घटालिमेषस्था निर्दिष्टानां प्रधानता ।
षडष्टचतुरायामाचक्रराशिक्रमेण तु ॥

विष्णुधर्मोत्तरे ।

तेजस्विनी सूर्यदिने चन्द्रे क्षेमावहा भवेत् ।
भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ॥
गुरुणि स्थाप्यते नित्यं लोकानन्दकरी सिते ।
चापश्चार्किक्षिता सौरे प्रतिमा समुदाहृता ॥

मत्स्यपुराणे ।

बुधोबृहस्पतिः शुक्रस्त्रयोवाराः शुभावहाः ।
एभिर्निरीक्षितं लग्नं नक्षत्रञ्च प्रशस्यते ॥

समुच्चयलक्षणे ।

प्रीतिः सौभाग्यमायुष्मान्सुकर्मा शोभनो धृतिः ।
वृद्धिः सिद्धिः शुभः साध्योवरीयाञ्छिव-शुक्लकौ ।

ब्रह्मेन्द्री च शिवं चेति योगाः तत्संज्ञकाः शुभाः ॥
ववश्च बालवश्चैव कौलव तैतिलं तथा ।
गरश्च वणिजश्चैव शकुनिश्च चतुष्पद ।
नागं किन्तुघ्नमप्याहु विष्टिहीनस्तु पञ्चयो. ॥

विष्णुधर्मोत्तरे ।

शकुनौ दोषशमनी चतुष्पदे भयावहा ।
नागे भवति घोरा च किंस्तुघ्ने च शुभप्रदा ॥
कौलवे वरदा ज्ञेया तैतिले रोगनाशिनी ।
गराख्ये रोगशमनी तथा वणिजि पुष्टिदा ।
विष्टौ मरणदा कर्तुस्तत्कर्त्तृदोषवती तथा ॥

मात्स्ये ।

आषाढे द्वे तथा मूलमुत्तराद्वयमेव च ।
ज्येष्ठा श्रवण-रोहिण्य पूर्वाभाद्रपदा तथा ॥
हस्तोऽश्विनी रेवती च पुष्ये मृगशिरस्तथा ।
अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥

लक्षणसमुच्चये ।

पुष्यशुक्रौ रोहिणीकामभद्रा मृगाद्योत्तरा दिवे ।
पुनर्वस्वनुराधास्तु चित्रा ज्येष्ठा मघौषुणि ॥
धनिष्ठा श्रवणौ वैश्ये युगे भाद्रपदे तथा ।
अश्विनी रेवती भद्रे स्वाति-फाल्गुनिकाद्वयम् ॥
चतुर्वर्गमघा ज्येष्ठा मूलार्द्रा भरणी तथा ।
एतानि प्रतिमोमानां चगार्थेशायतो तथा ॥

जय-रोगकराश्लेषा रोहिणी भयवृद्धिदा।
हस्तः सिद्धिप्रदोऽश्विन्य आयुर्दा पादयुग्मके ॥
पुनर्वसु सुखं दद्यादनुराधा तु सम्पदः।
चित्रा सर्वसुखं नित्यं ज्येष्ठा रोगविनाशनम् ॥
धनिष्ठारिजयं दद्यात् ज्ञानदः श्रवणः सदा।
पूर्वभाद्रपदा वृद्धिं शतभिषापि चाश्विनी ॥
रेवती पुष्टिदा नित्यं स्वाती कुर्याद्धनं बहु।
फाल्गुनीद्वितय वृद्धिर्भरणी रिपुभेदनम् ॥
आर्द्रा सौभाग्यसम्पत्तिर्मूलेऽथ नृपसत्क्रिया।
मृग शान्तिप्रदो नित्यं धन्या शतभिष स्मृतम्।
मघेषा कृत्तिका चैव विशाखा च शुभप्रदा ॥

विष्णुधर्मोत्तरे।

तेजस्विनी कृत्तिका च भूतनिग्रहकारिणी।
किञ्चिद्रूक्षा ततः काले न तदग्नितवह्निका ॥
यज्ञे सूर्यस्य सोमस्य कुमारस्य च या स्मृता।
गङ्गायाश्च कृतास्तेन न दहन्ति च वह्निना ॥
प्राजापत्ये ग्रहो नित्यं लोकानुग्रहकारिणी।
सौम्ये तु वरदा प्रोक्ता नृपकेन्द्र विनश्यति ॥
आर्द्रायां कर्दमस्य क्षिप्रमेव प्रयच्छति।
पुनर्वसौ विनाशस्य संस्कारश्चाशुयात्पुनः ॥
पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा।
अपि कर्कविनाशाय नागानां नागकृद्भवेत् ॥

चित्रोर्मरणदा कर्तुस्तथा नाशञ्च गच्छति ।
लोकगम्या भवेद्धाम्ये कर्तुर्नाशवहा तथा ॥
तथापि कामदेवस्य कर्तुः सौख्यवहा तथा ।
अर्यम्णे सुदृशा स्फीता लोकानुग्रहकारिणी ॥
आपूर्णा च कृता हस्ते चित्रायां नाशमाप्नुयात् ।
नित्यैश्वर्ययुता लोके चित्रायाञ्च हितप्रदा ॥
स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ।
ऐन्द्राग्ने कर्तृनाशाय मैत्रे मित्रविवृद्धये ॥
ज्येष्ठायां तेजसा युक्ता धन-धान्यवती भवेत् ।
तथाविधा तथा मूले किन्तु भूतसमाश्रया ॥
आप्ये छेदमवाप्नोति वैश्वदेवे सुखप्रदा ।
श्रवणे धन-धान्याढ्या वासवे वसुसंयुता ॥
वारुणे शीघ्रनाशाय तथाप्ये मनुजोत्तम ।
अहिर्बुध्ने कृता स्फीता कर्तुः सौख्यप्रदायिनी ॥
धन-धान्ययुता पौष्णे आश्विने योगगामिनी ।
याम्ये मरणदा कर्तुरात्मनाशकरी तथा ॥
आर्के आक्रोशजननी सचौरे ह्यायुदायिनी ।
अभौमे वह्निभयदा शतमखे स्थिरा न तु ॥
केतुना धूमिते चैव वह्निदाहमवाप्नुयात् ।
केतूदये भवेद्येन तेन दुर्भिक्षमाप्नुयात् ॥
भौमोदये भवेद्येन तेन दह्येत वह्निना ।
सौरोदये भवेद्येन तेन कर्त्ता विनश्यति ॥

नचत्रे सप्तरीवेधे परचक्रभयं भवेत् ।
उल्काहते विनाशाय सभूकम्पभयप्रदा ॥
उल्कापातो भवेद्यत्र तत्र व्याधिकरी भवेत् ।
त्रिविधोत्पातयुक्ते भे न शुभा परिकीर्त्तिता ॥
दिव्यकीर्त्तिविनाशाय भौमे चात्मविनाशिनी ।
अन्तरीचे च विज्ञेया लोकनाशकरी तथा ॥
सर्वेष्वत्र व्यतीपातमृक्षमेकं विवर्जयेत् ।
त्रिभेदैर्दोषैस्तथायुक्ता यावद्दागमनाद्ध्रुवे ॥
जन्मनचत्रविहिता कर्त्तुः श्रेयस्करी भवेत् ।
सम्पत्करी द्वितीये स्यात्तृतीयेऽरिभयप्रदा ॥
चेम्या चतुर्थे भवति पञ्चमे व्याधिवर्द्धिनी ।
कार्य्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा ॥
अष्टमे वरदा सौम्या नवमे श्रीविवर्द्धिनी ।
कर्म्मणा साधिका प्रोक्ता जन्माद्दशमे शुभा ॥
एकादशे शुभकरी द्वादशेऽरिभयप्रदा ।
ज्ञेया त्रयोदशे चेम्या रोगदा च चतुर्दशे ॥
वृद्धिदा पञ्चदशके षोडशे निधनप्रदा ।
सप्तदशे भूतिकरी नन्दा[1] चाष्टादशे भवेत् ॥
एकोनविंशतितमे कर्त्तुर्मरणदायिनी ।
तथा द्वितीये धनदा तृतीयेऽरिभयप्रदा ॥
चतुर्थे चेमजननी पञ्चमे रोगवर्द्धिनी ।

(१) नन्दयतीति नन्दा सुखदेति यावत् ।

षष्ठे लक्ष्मीकरी ज्ञेया धनधान्यविवर्द्धिनी ॥
द्वितीये च चतुर्थे च पञ्चमे च तथाष्टमे ।
द्वादशे नवमे चन्द्रे कर्तुर्दोषवती भवेत् ॥
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ।
दशमः सप्तमश्चैव यदा विद्धो भवेद्ग्रहैः ॥
पञ्चमैर्नवमैश्चैव द्वादशैर्वा तथाष्टमे ।
चतुर्थे वा तृतीये वा क्रमात्पापात्फलं लभेत् ॥
विपर्य्ययेण वेधश्चेत्पापोऽपि शुभकृत्स्मृतः ।
चन्द्राद्द्वादशके सूर्य्ये द्वितीये वा भयप्रदा ॥
द्वादशे वा द्वितीये वा भौमे दाहमवाप्नुयात् ।
द्वादशे वा द्वितीये वा सौरे मरणदा भवेत् ॥
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ।
एकस्मिन्नु यदा केन्द्रे चन्द्रमाश्च व्यवस्थितः ॥
केन्द्रत्रयमथान्यस्मिन्युक्तः सूर्य्यारसूर्य्यजैः ।
तदा कर्तुर्विनाशाय प्रतिष्ठा खगराधिप ॥
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ।
सशौरे मृत्युदा ज्ञेया शरादौ निधनप्रदा ॥
नवमे सोपरागे [redacted] कर्तुर्मरणदायिनी ।
परित्यक्ते(१) तथा चन्द्रे तथा ज्येष्ठान्त्यपादगे ।
पौष्णाश्व्यपादगे चैव कर्तुर्निधनकारिणी ॥

---

(१) पाठोऽयं आदर्शानुरूप एव सन्निवेशितः परन्त्वयं न समीचीनो विभाति, परिपुष्टे इत्ययं पाठो भवितुमर्हति ।

लल्लसमुच्चये ।

शशीजीवौ नव-द्वीषु-सप्तस्थानेषु सर्वदा ।
बुधः षडष्ट-तुर्येषु दिक्सप्त-नवराशितः ॥
सप्त-त्रि षष्ठ दशमः शनी शुभफलप्रदः ।
रविर्दश-त्रिषट्स्थस्थो राहुस्त्रि दशषड्गतः ॥
त्रि-षट्स्थानगताः शस्ता मन्दाङ्गारक-केतवः ।
शुभाः क्रूराः यथापाद्य सर्वे एकादशास्तथा ॥
एषा दृष्टिर्मुनी पूर्णा बार्हिकी सप्त-भूमयोः ।
पादिकी रामदिक्स्थाने चत्वष्टोः पादवर्जिता ॥
द्वितीया आपदाख्या तु चतुर्थी क्षेमसंज्ञका ।
षष्ठी च साधिका तारा अष्टमी शत्रुनाशिका ।
नवमी चातिमित्रा स्यादिताः पञ्च फलप्रदाः ॥

विष्णुधर्मोत्तरे ।

जन्मराश्युदयेकर्तुं क्षिप्रं नाशकरी भवेत् ।
द्वितीये धननाशाय तृतीये कर्त्तृवृद्धिदा ॥
चतुर्थे स्वजनाशाय पञ्चमे व्याधिदा भवेत् ।
षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी ॥
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी ।
दशमे कर्मणा वृद्धौ लाभे लाभकरी भवेत् ॥
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा तु तथा कृता ।
जन्मलग्नोदये श्रेष्ठा धन-धान्यवती भवेत् ॥
जन्मराशिफलं शेष सर्वस्थानेषु निर्दिशेत् ।

मेषोदये कृता चिप्रं नाशमाप्नोति पार्थिव ॥
वृषोदये स्थिरा प्रोक्ता धन-धान्यवती भवेत् ।
लोककान्ता च मिथुने बहुकल्याणकारिणी ॥
कुलीरे चिप्रं नाशः स्यात् सिंहे च सुदृढा भवेत् ।
कन्यायां लोककान्ता स्यात्तुलायां भवति स्थिरा ॥
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ।
मकरे चिप्रं नाशः स्यात् कुम्भे लग्ने दृढा भवेत् ॥
मीने गुणवृद्धा कर्त्तुः कन्ये(१) शून्या तथा भवेत् ।
यथा स्यात् सूर्यदाभार्या(२) सौम्या सौम्यस्य कीर्त्तिता ॥
पापग्रहस्य केन्द्रेण कर्त्तुर्नाशाय कीर्त्तिता ।
सौम्या पटस्य सुशुभं कर्त्तुर्भवति ऋद्धिदा ॥
फलं यदेव लग्नेषु नवांशेषु तदेव तु ।
द्वादशांशेषु विज्ञेयं तदेव मनुजोत्तम ॥
कर्त्तुर्नाशाय विज्ञेया त्रिंशांशे सोम-सूर्ययोः ।
शतं जीवेत् प्रपीनायां(३) कर्त्तुः कल्याणदा भवेत् ॥
शुभमंशे महाराज लग्नं पापफले शुभं ।
लग्ने शुभतरे प्राप्ते पापमंशमशोभनं ॥
लग्नस्थे शोकदा कर्त्तुः कृता भवति भास्करे ।

---

(१) जन्मविशेषे इत्यर्थः ।
(२) सूर्यदाभार्यामित्ययं पाठ आदर्शपुस्तकेष्वेकरूप एव वर्त्तते पर-न्त्वयं न समीचीनो विभाति ।
(३) प्रपीनाया शतं जीवेदित्यन्वयः ।

द्वितीयेऽर्थस्य हानिः स्यात् तृतीये धनसंयुता ॥
आयुःक्षयश्चतुर्थे स्यात् पञ्चमे सुतनाशनं ।
षष्ठे शत्रुविघातस्तु दारिद्र्यं सप्तमे भवेत् ॥
मरणं चाष्टमे मासौ नवमे धर्मपीडनं ।
दशमे सुतवृद्धिश्च लाभे लाभयुता भवेत् ॥
द्वादशे व्ययसंयुक्ता निर्धना तु तथा भवेत् ।
चन्द्रे लग्नगते ज्ञेया सुवृत्ता मनुजोत्तम ॥
धनान्विता द्वितीये तु तृतीये लाभसंयुता ।
चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ॥
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ।
अष्टमे मरणायोक्ता नवमे धर्मपीडनं ॥
दशमे धर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ।
व्यये व्ययवती राजंस्तथा धनविवर्जिता ॥
सम्पूर्णबिम्बाधिके चन्द्रे शुभपक्षफलं भवेत् ।
सम्पूर्णबिम्बाधिके क्षीणे क्रमादृक्ष निबोध मे ॥
चन्द्रे लग्नगते ज्ञेया क्षिप्रं नाशो महीभुजां ।
द्वितीये च दरिद्रा स्यात् तृतीये धनसंयुता ॥
बन्धुनाशश्चतुर्थे स्यात् सुतनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥
अष्टमे मरणायोक्ता नवमे धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥
व्यये व्ययवती नित्यं दरिद्रा च तथा भवेत् ।

लग्ने मृत्युकरा भौमे तथा दारिद्र्यदा धने ॥
कीर्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥
अरिनाशस्तथा षष्ठे सप्तमेऽसौ विनश्यति ।
अष्टमे कष्टमरणं नवमे दमनच्युतिः ॥
दशमे कर्मसिद्धिः स्यात् लाभे लाभवती भवेत् ।
आयात्मजमसुतयो व्यये बुधांपदाः सदा ॥
बुधलग्ने धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥
कीर्तिश्च पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया सर्वदा च तथाष्टमे ॥
सौख्यदा नवमे राजन् दशमे कार्यवृद्धिदा ।
स्थिरलाभगते ज्ञेया व्ययमे धनसंयुता ॥
जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
सुखास्पदा तृतीये स्यात् चतुर्थे धनसंयुता ॥
पञ्चमे सुतदा प्रोक्ता षष्ठे शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्तुरष्टमे च यशोवृद्धिदा ॥
कीर्तिदा नवमे ज्ञेया दशमेऽन्नधनवृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥
लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात् तृतीये भ्रातृवर्द्धिनी ॥
चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।

षष्ठे पूज्या तथा शुक्रे सप्तमे धनवृद्धिदा ।
अष्टमे सुखदा प्रोक्ता नवमे च सुखार्थदा[१] ॥
दशमे लोककान्ता स्यादरिनाशकरायगे ।
तथा व्ययस्थे विज्ञेया षड्ये सधना तथा ॥
मृत्युदा लग्नगे सौरे दरिद्रा स्याद्द्वितीयगे ।
तृतीये धनलाभाय चतुर्थे बन्धुमृत्युदा ॥
सुतगे सुतनाशः स्यादरिनाशश्चारिगे ।
जायानाशस्तु जायास्थे मृत्युर्मृत्युपदोपगे ॥
धर्मगे धर्महानिः स्यात् कर्महानिस्तु कर्मगे ।
महालाभस्तु लाभस्थे व्ययगे च व्ययो भवेत् ॥
शून्यं विवर्जयेत् केन्द्रे तत्तथैव नियोजयेत् ।
एवं ज्ञात्वा शुभं कालं प्रयत्नेन सदैववित् ।
कुर्यात् प्रतिष्ठां यत्नेन स्वकीयाद्बधानतः ॥
शुभेऽह्नि पूर्वं यच्चास्ते तत्कालप्रतिमास्तु या ।
समात्तपीठिकां गर्त्ते स्थापितां विनिवेशयेत् ।
तत्कालमेव कुर्वीत नामावाह्य समाहितः ॥

लक्षणसमुच्चये ।

पादादूनचतुर्नाडीभागः स्यान्मीन-मेषयोः ।
वृष-कुम्भौ च युग्मान्तौ चतस्रः पादवर्जिताः ॥
मकरे मिथुने चैव चापालि-हरि-कर्कटाः ।

---

(१) सुखप्रदेति ख० ।

पादोनाः षट्तुलाः कन्ये घटिकाः सार्द्धपञ्च ॥

केसरी च वृषः कुम्भः स्थिराः स्युः सिद्धिदायकाः ।
चरं धनुस्तुला मेषाद्वीयुग्मं मीन-कन्यके ।
कर्कटे कर्कटालिश्च प्रवर्त्याः कार्यनामकाः ॥
स्थिरः शुभग्रहैर्दृष्टः शस्तोलग्नः शुभान्वितः ।
गुरु-शुक्र बुधैर्युक्तो लग्ने दद्याद्गुणायुषी ॥
राज्यं सौख्यं बलं पुंसां देशधर्मादिकं बहु ।
प्रथम सप्तमस्तुर्य्यो दशमः केन्द्र उच्यते ।
गुरु-शुक्र-बुधास्तत्र सर्वसिद्धिप्रदायकाः ॥
त्र्येकादश-चतुर्थस्था लग्नात् पापाः शुभप्रदाः ।
अतोऽन्येऽनिष्टकर्मार्थे योज्यास्तिथ्यादयो बुधैः ॥
सुयोगे शाश्वता धर्माः स्थिराणां पुष्टि-जीवितं ।
सुलग्ने च महाभागो विषुवे चेप्सितं फल ॥
सत्प्रीतिसुखे पुण्ये अयने च महातिथौ ।
ऋद्धिरारोग्यमैश्वर्य्यं देवस्थापनतो भवेत् ॥
सन्ध्यागते तु लग्ने च प्रत्यस्तमितदुर्ग्रहे ।
दुष्टग्रहे दुष्टलग्ने ग्रहेऽशुभयुते ॥
दुर्निमित्ते तथोत्पाते चन्द्र-सूर्योपमर्दने ।
एतेषु स्थापिता देवाः क्षय-दुर्भिक्ष-रोगदाः ।
तस्माद्दिन निरीक्ष्यादौ सर्वोपस्करमाचरेत् ॥

मत्स्यपुराणे ।

ब्रह्म-नारायणं पूज्या ग्रहपूजां विधाय च ।

निमित्तं शकुनं लब्ध्वा वर्जयित्वा ग्रहादिकं ॥
शुभकाले शुभस्थाने क्रूरग्रहविवर्जिते ।
स्थिरे चरे च कुर्वीत प्रतिष्ठादिकमुत्तमं ॥
अयने विषुवे तद्वत् षडशीतिमुखे तथा ।
एतेषु स्थापनं कुर्याद्विधिदृष्टेन कर्मणा ॥

विष्णुधर्मोत्तरे ।

यस्मिन् ऋक्षे यद्देवोक्तं फलं भूपतिसत्तम ।
तद्देवेषु फलं प्रोक्तं तन्मुहूर्त्तेऽपि यादव ॥
रौद्रः सार्पस्तथा मैत्रः पैत्रोवासव एव च ।
आप्यो वैश्वस्तथा ब्राह्म्यः कौवेरः शक्रदैवतः ॥
ऐन्द्राग्नेयोनैरृतश्च वारुणश्च महीपते ।
अर्यमश्च तथाभाग्यो मुहूर्त्तास्तु दिवाकरः ॥
रौद्रोऽजपादहिर्बुध्नः पौष्ण आश्विन एव च ।
याम्योऽग्निदैवतश्चैव ब्राह्मः सौम्यस्तथैव च ॥
आदित्यो जीवदैवत्यो वैष्णवः सूर्यदैवतः ।
त्वाष्ट्रश्चाथ वायव्यश्च मुहूर्त्ता रात्रिचारिणः ॥

तथा ।

दिनमध्यगते सूर्ये मुहूर्त्तेऽभिजिदाह्वये ।
सर्वकामसमृद्धः स्यात् सर्वोपद्रववर्जितः ॥

मत्स्यपुराणे ।

प्राजापत्ये तु शयनं ब्राह्मे चोत्थापनं भवेत् ।
मुहूर्त्ते स्थापनं कुर्यात् तेन ब्राह्मे विचक्षणः ॥

विष्णुधर्मोत्तरे ।

गुरावस्तमये प्राप्ते नीचस्थे कर्त्तृघातिनी ।
तथाहलस्थे जीवे तु धन धान्यकरी भवेत् ॥
ब्राह्मे रौद्रे कृता ज्ञेया प्राजापत्ये सुखावहा ।
स्वर्गलोकप्रदा स्वर्गे चक्रे चक्रप्रवर्त्तिनी ॥
वामसत्ये तु वरदा धान्ये धान्यविवर्द्धिनी ।
वाये भवति वस्त्राढ्या काले मृत्युप्रदायिनी ॥
आग्नेये दाहमाप्नोति क्षौचमर्द्दैवते तथा ।
शैवे भवति सुस्थौता चान्द्रे च वरदा तथा ॥
नश्यते साम्यदैवत्ये गोदेवे वृद्धिमाप्नुयात् ।
दैवे च पुष्टिदा प्रोक्ता तथा भवति पूजिता ॥
कौमारे वृद्धिमाप्नोति पित्र्ये नाग तथैव च ।
वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ॥
चपला यमदैवत्ये याम्ये मृत्युप्रदा भवेत् ।
कार्म्यदैवत्ये सदा वाग्मी श्रीमे च श्रीयुतो भवेत् ॥
धनने धनसंयुक्ता सुहृद मैत्रदैवते ॥
पृथ्वीदेवे दृढा सौम्या शुभा चादितिदैवते ।
पौरुषे च तथा रौपे बहुधर्मविवर्द्धिनी ।
कर्त्तुः सुखावहा चैव तथा लाभयुता भवेत् ॥

इति सामान्यप्रतिष्ठा ।

---

## अथ शिवप्रतिष्ठा।

अथ लक्षणसमुच्चये।

उत्तरायणगते भानौ लिङ्गस्थापनमुत्तमं।
दक्षिणे त्वयने पूर्व्वं विपर्य्यासे भयावहं॥
अयहं स्थापनं नेष्टं तथा वै दक्षिणायने।
अपक्षे स्थापिते लिङ्गे व्याधिना पीड्यते प्रजा॥
कुमाराः सम्प्रपीड्यन्ते कन्यानाशश्च जायते।
धनधान्यस्त्वलोपश्च तदा राज्ञां प्रजायते॥
कर्त्तुः क्षयः सदा प्रोक्तो ग्रहे भवति दारुणः।
तस्माच्च स्थापयेद्देवं अयने दक्षिणायने॥
स्थापनन्तु प्रकर्त्तव्यं शिशिरादावृतुत्रये।
माघेपि स्थापितं लिङ्गं भवेदरक्षयोगदं॥
हेमन्ते ज्ञानदं लिङ्गं शिशिरे सर्व्वभूतिदं।
शक्तिप्रदं वसन्ते च ग्रीष्मे च जय-शान्तिदं।
यतीनां सर्व्वकाले च लिङ्गस्थारोपणं मतं॥

रत्नावल्यां।

माघ-फाल्गुन-वैशाख-ज्यैष्ठाषाढेषु पञ्चसु।
मासेषु शुक्लपक्षेषु सदुष्टपक्षवर्ज्जिते॥
द्वितीया पञ्चमी षष्ठी सप्तमी नवमी तथा।
द्वादश्येकादशी षाष्ठा पूर्णिमा च त्रयोदशी॥
गुरु शुक्रो बुध सोमोवरश्चेन्तु मुक्तानद्।

आर्द्रा शतभिषा स्वाती रोहिणी श्रवणद्वय ॥
पूर्वाषाढोत्तराषाढा ज्येष्ठाश्विना च रेवती ।
चित्रा-हस्तौ धनिष्ठा स्यादनुराधा च सिद्धिदा ॥

लक्षणसमुच्चये ।

नक्षत्रे यत्र तत्रापि सर्वकाल दिनत्रयो ।
लिङ्गस्य स्थापन शस्त यते कामार्थिनो ध्रुव ॥

रत्नावल्या ।

सौभाग्य शोभनायुष्मान् सिद्ध साध्य शिव शुभ ।
वृद्धि प्रीतिर्धृति सिद्धि ध्रुव शुक्ल सुशोभनम् ॥
बवश्च बालवश्चैव कौलवश्चेति शुभम् ।
मेष वरलग्नेचश्च समस्तेष यथा शुभम् ॥
कुम्भ वृश्चिक सिंहो मेषोमिथुन कर्कटौ ।
तथा कन्या तुला कुम्भौ वृषभश्च प्रशस्यते ॥
रविहस्ते भवेत्सिद्धि सोमे मृगशिरस्तथा ।
कृत्तिका भौमवारे स्यादनुराधा बुधे सदा ॥
रेवती भृगुसत्तमा शुक्रवारे पुनर्वसु ।
श्रवण शनिवारे च सिद्धियोगा शुभा मता ॥
जन्मभमध्यतथोऽथ षटस्थैकादशा शुभा ।
भौम मन्दौ त्रयस्तौ च द्वि-सप्ताद्य सुरेगुरु ॥
जन्म-तुर्य-रसाष्टम्यो दशमस्थ शुभो बुध ।
रस-सप्त दशान्यस्य शुक्रस्याथ प्रयत्नत ॥
देवमध्ये यदा सर्वे यमकण्टेति निश्चिता ।

यस्मात्ते सर्वकार्य्यघ्नास्तस्मात्तेष्वभियोजयेत् ॥
क्षीणचन्द्रस्तथा मन्दः(१) कुजार्कौ तैर्युतो बुधः ।
पापाः पापाश्रयाः यस्मात्तस्मात्तांश्च विवर्जयेत् ॥
केन्द्रस्थे च गुरौ शुक्रे न शुभेन्दोर्यदा ग्रहाः ।
नष्टचन्द्रे तथा शुक्रे गुरावस्तं गते सति ।
प्रतिष्ठादिशुभारम्भान् दूरयात्रां विवर्जयेत् ॥
अन्यद्बहुतरं यत्तत् ज्योतिःशास्त्रविशारदः ।
समालोच्य निपुणेन सर्वथाप्यन्यथाचरेत् ॥

लक्षणसमुच्चये ।

सुदिने शुक्लपक्षे च रविवारर्क्षवर्जिते ।
सुचन्द्रतारकायोगे सुलग्ने करणान्विते ॥
द्वैते द्वैते प्रतिष्ठा स्यान्मिश्रे च सितपक्षके ।
अद्वैते चैव कार्य्योऽपि मन्त्र-मूर्त्तिप्रभेदतः ॥
द्वैता सिद्धाग्निकी रौद्री शर्वं सर्वाणि तिष्ठति ।
पञ्चराशौ हरेर्मिश्रा पञ्चमोवर्णसंस्थितिः ॥
अद्वैता भैरवी या तु वाम-दक्षिणमन्त्रजा ।
अनाद्यन्तन्तु या तिष्ठेत् बाणलिङ्गस्वयम्भुवा ॥

इति शिवप्रतिष्ठा ।

---

(१) निम्न इति क० ।

## अथ विष्णुप्रतिष्ठा ।

वैखानससंहितायां ।

अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितम् ।

देवीपुराणे वैखानससंहितायां ।

मार्गशीर्षक-माघौ द्वौ निन्दितौ ब्रह्मणा पुरा ।
माघेषु फाल्गुन श्रेष्ठ चैत्रो वैशाख एव च ।
तैषेऽन्याषाढयुक्ताये श्रावणे मासि वा भवेत् ॥

तन्त्रसारसंहितायां ।

प्रतिष्ठार्थमिभि प्रोक्ता या अमावस्युतेऽप वा ।
प्रतिपच्च द्वितीया च नवमी च त्रयोदशी ।
दशमी द्वादशी पूर्णे शुक्लपक्षे शुभान्विता ॥

महापञ्चरात्रे ।

पौर्णमास्यां त्रयोदश्यां द्वादश्यां शुक्लपक्षतः ।
प्रतिपद्द्वितीययोर्वा पञ्चम्यां दशम्यामपि ।
अष्टिमासितयस्वैता चन्द्रयोग प्रयुक्ष ते ॥

वैखानससंहितायां ।

श्रवणे चैव रोहिण्यां स्वात्यां हस्ते पुनर्वसौ ।
त्रिषूत्तरेषु रेवत्यां श्रविष्ठे वारुणे तथा ॥
सौम्य लाप्तानुराधासु तिष्ये चैव विशेषतः ।
अन्यस्मिन् समप्रक्षे वा यथोक्तगुणसंयुते ॥
अश्विनी-रोहिणीयोगे पुनर्वसौ च पुष्यतः ।

भरण्यां श्रवणे हस्ते रेवत्यामुत्तरासु च।
क्षिप्र नक्षत्रयोगेषु क्रमेणैतून्नरायणे॥

यागरसंहितायां।

सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा।
एते सौम्या ग्रहा सौम्याः प्रतिष्ठा-योगकर्मणि॥

'ग्रहाः' वाराः। 'सौम्याः' अनुकूलाः।

महापञ्चरात्रे।

सौम्यपक्षे प्रशस्तदिने सोम-भार्गववासरे।
ग्रहयोग एव भवेत्प्रतिष्ठा-यज्ञकर्मणि॥

वैखानससंहितायां नृसिंहपुराणे।

पूर्वपक्षे शुभे काले स्थिरे चोर्द्धमुखेऽपि मे।
अनुकूले च लग्ने च हरिः स्थाप्योनरैस्तथा॥

नक्षत्रे च तिथौ युग्मे प्रशस्ते विष्टिवर्जिते।
गुरु-शुक्र-बुधेन्दूना एकवारयुते शुभे॥

यामस्य यजमानस्याप्यनुकूलेऽपि तत्र वै।
चरराशिं विवर्ज्याथ स्थिरराशिं प्रगृह्य च।

शुभलग्ने मुहूर्त्ते वै प्रतिष्ठां कारयेद्धरेः॥

कल्पसमुच्चये।

शुद्दिने सितपक्षे च सुरवारर्क्षभाषिते।
शुभचन्द्रतारकायोगे शुभग्रे करणान्विते॥

दैवे दैवे प्रतिष्ठा स्यात्स्थिरे च सितपक्षके।
चरेणे चैव कृष्णे च मन्त्र-मूर्त्तिप्रभेदतः॥

द्वैता सिद्धान्तिकी रौद्री शतवर्षाणि तिष्ठति ।
पञ्चरात्री हरेर्मिश्रा पञ्चशोवर्षसंस्थितिः ।
अद्वैता भैरवी सा तु वाम-दक्षिणमध्यमा ॥
मधूककाष्ठप्रतिमाप्रतिष्ठाकालस्तु वाराहपुराणे ।
शुक्लपक्षे तु द्वादश्यां नक्षत्रे रेवते तथा ।
तत्र संस्थापनं कुर्यात् भूमिसिद्ध्यर्थसाधनं ॥
इति विष्णुप्रतिष्ठाकालनिर्णयः ।

---

## अथ देवीप्रतिष्ठाकालः ।

देवीपुराणे ।

गुरौ मेषगते शुक्रे देवीश्चाप्य प्रतिष्ठपेत् ।
इहैव च भवेद्धन्यो ह्यतोऽगच्छेत्परम्पदम् ॥
तस्मान्मेषगते शुक्रे उत्तमा नवमी स्मृता ।
तथा आषाढ़िनी आषाढ़ुत्तमौ परिकीर्तितौ ॥
देवी तत्र सदा शुक्र-पांशुजापि प्रतिष्ठिता ।
भवेत् फलदा पुंसां कर्कस्थे च शुक्रस्थिते ॥
तथाच सिद्ध-गन्धर्वा नृपा वा राज्यकाङ्क्षिणः ।
ते यजन्तु सदा देवीं स्थापयित्वा विधानतः ॥
■ तिथिर्न च नक्षत्र नोपवासोऽत्र कारणम् ।
मात्स्य-भैरव वाराह नरसिंह त्रिविक्रमाः ।

महिषासुरहन्त्र्याश्च स्थाप्या वै दक्षिणायने ॥
तथाच मत्स्यप्रतिष्ठायाम् ।

ब्रह्मोवाच ।

स्थापनञ्च प्रवक्ष्यामि सर्वकामप्रसाधकम् ।
सर्वकालं प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥
रात्रिरूपा यतो देवी दिवारूपो महेश्वरः ।
अतः सकालपूजाभिः सिद्धिदा परमेश्वरी ॥

इति देवीप्रतिष्ठाकालनिर्णयः ।

---

## अथ वापी-कूपादिप्रतिष्ठाकालः ।

भविष्यपुराणे ।

वापी-कूप तडागानां तस्मिन् काले विधिः स्मृतः ।
सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥
कर्कटे पुत्रलाभन्तु सौख्यं तु मकरे भवेत् ।
मीने यशोऽर्थलाभस्तु कुम्भे च सुबहूदकम् ॥
वृषे च मिथुने वृद्धिर्वृश्चिके सत्फलं भवेत् ।
विरुद्धमिष्टं कन्यायां तुलायां शाश्वती गतिः ।
सिंहे मेषे धननाशं धनुषि हिंसां प्रयच्छति ॥
भविष्योत्तरपुराणे ।

तस्मिन् सलिलसम्पूर्णे कार्त्तिके प्रतिप्रेषतः ।
तडागस्य विधिः कार्य्यः स्थिरनक्षत्रयोगतः ॥
मुनयः केचिदिच्छन्ति व्यतीते चोत्तरायणे ।
न कालनियमस्तत्र सलिलं तत्र कारणम् ॥

इति वाप्यादिप्रतिष्ठाकालनिर्णयः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये प्रतिष्ठाकालनिर्णयो नाम पञ्चदशोऽध्यायः ।

## अथ षोडशोऽध्यायः ।

### अथ दीक्षाकालः ।

तत्र नानादेवतादीक्षाकालः कालोत्तरे ।

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ वरः ।
तयोरसम्भवे वर्षा नान्यथापि प्रशस्यते ॥
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यारम्भनकर्मणि ।
कार्त्तिक्यामेव वैशाख्यां स्वर्भानोरविदर्शने ॥

तत्रैव ।

चन्द्र-सूर्योपरागेषु षडशीतिमुखेषु च ।
ग्रह-नक्षत्रयोगेषु विषुवत्सुदिनेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

कारणे ।

पूर्वाषाढे माघे च आषाढे मृगशीर्षके ।
दीक्षां न कारयेद्धीमान् अन्यमासेषु कारयेत् ।
शुक्लपक्षे शुभर्क्षे च सुवार-तिथिभिर्युते ॥

क्रियाकाण्डशेखरे ।

न विना पर्व दीक्षा स्याद्दर्शासु मधु-पौषयोः ।
अन्यत्र तु सदा कार्या विशुद्धौ गुरु-शिष्ययोः ॥

वर्षादौ तु निमित्तानि प्रशस्तान्युपलक्षयेत् ॥

वर्षादिषु निषिद्धेष्वपि कालेषु कदाचिच्छुभशकुनाद्युपलम्भे सति दीक्षा कर्त्तव्येत्यर्थः ।

प्रसिद्धास्तिथयोराजदर्शनं गुरुपर्व च ।
पवित्रका तिथिश्चापि दीक्षाकर्मविधौ वरा ॥

रत्नावल्याम् ।

चतुर्थीं नवमीं षष्ठीमष्टमीञ्च[1] चतुर्दशीम् ।
पूर्णमासीं विना शेषा सिता शुक्लौ सुसत्तमु ।
आदित्यं मङ्गलं शौरिं त्यक्त्वा वारास्तु भूतये ॥

शम्भेदे ।

सप्तम्याञ्च नवम्यां वा एकादश्यामथापि वा ।
दशम्याञ्च त्रयोदश्यां दीक्षाकर्म प्रशस्यते ॥

क्वचित्तु त्रयोदश्याममावास्यामिति पाठः ।

सितेन्दु-ज्ञ-गुरूणान्तु परीक्षेत शुभाशुभैः ।
गुणैर्युक्तास्तु सर्वाह्ना गुणहीनांस्तु वर्जयेत् ॥

कालोत्तरे ।

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।
पूर्णमास्यां प्रकर्त्तव्यं भूतिकामैः सिते सदा ॥
मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत् ।
दिनच्छिद्राणि मुक्त्वा च यान्यान्यास्तिथयः स्मृताः ॥

तत्त्वसागरसंहितायाम् ।

---

(१) षष्ठीं सप्तमीञ्चेति क० ।

तां तां तिथिं पुरालोच्य तदुक्तां तत्र दीक्षयेत् ।

इन्द्र उवाच ।

कस्य का तिथिरुद्दिष्टा विशेषं वद नारद ।
सङ्क्षेपेणैव दीक्षायां विशेषावसरं तथा ॥

नारद उवाच ।

ब्रह्मणः पौर्णमासुक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी त्रिनेत्रोक्ता वाच' प्रोक्ता त्रयोदशी ॥
द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका ।
नित्यमार्गेषु पार्वत्या अष्टमी च चतुर्दशी ॥
चतुर्थी गणनाथस्य भानोः प्रोक्ता तु सप्तमी ।
एवंमुख्यास्तु संक्षेपात्तिथयः परिभाषिताः ।
अपरेण तिथीः सर्वाः पवित्रारोपणे स्मृताः ।

कारणे ।

पौष्णं रोहिण्यथादित्यं श्रवणञ्चाश्विनी तथा ।
सावित्रं त्वाष्ट्र-वायव्ये नैर्ऋतं मैत्रमेव च ॥
तिष्य त्रिरुत्तराख्यं तु श्रविष्ठा च विजन्मभम् ।
नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रत ॥

रत्नावल्याम् ।

पौष्णुत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम् ।
हस्ता स्वातिरनुराधा मघा मूलञ्च रेवती ॥
अभिजिच्छ्रवणश्चेति त्रियोगे चतुर्दशी ।
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः स्मृतः ॥

सुकर्मा च धृतिर्वृद्धिर्ध्रुवं सिद्धिश्च हर्षण ।
वरीयांश्च शिव सिद्धोब्रह्मा ऐन्द्रश्च योजयत् ॥
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ।
किन्तु देशिकसेवादौ शुभान्यन्यापि पूर्ववत् ॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा ।
पूर्वाभाद्रपदा ज्येष्ठा दशमी रोहिणी तथा ॥
द्वादश्या सर्पनक्षत्रमर्यम्णा च त्रयोदशी ।
नक्षत्रसन्ध्या ह्येते देवानामपि वामदा ॥

कारणे ।

राशयश्च चरा श्रेष्ठा मध्यमाश्चोभये स्मृता ।
स्थिरश्च नैधनस्थाने यश्च सर्वे विवर्जिता ।
आचार्य्य शिष्ययोरानुकूल्य शुभप्रद भवेत् ॥

क्रियाकाण्डशेखरे ।

राश्यादिवर्गसंशुद्धिर्लग्नचन्द्रार्कयोरपि ।
तत्र गोचरसंशुद्धिश्च योगयास्ते प्रतीयताम् ॥
लग्नदोष ग्रहदोषा सर्वे नश्यन्ति ते शुभे ।
लग्नस्थे भार्गवे मौढे केन्द्रस्थे च बृहस्पतौ ॥
इत्यादिनिपुण वीक्ष्य दीक्षा मौमुक्षवीष्यते ।
मौमुक्षवी प्रति ■ यत्कालादिनियम स्मृत ॥
मन्त्रवर्णेषु सिद्धान्ते सुसिद्धान्वेषयेद्बुध ।
वैवर्णवानुदासीनान् गणयेद्यभि पृथक् ॥
सिद्धराशौ हरेद्भाग वसुभिर्भानुभि स्वरै ।

झषराशिस्तु यः प्रोक्तो यामे षष्ठोदिता हि सा ॥
रिपुराशिगतः प्रोक्तो मासोऽसौ परिकीर्त्तितः ।
हरेत्पदद्वयं भाग तिथिज्ञानाय सत्तम ॥
मासि तस्मिंस्तथा यामे कुर्वीत यत्नं मनोः ।
ज्योतिःशास्त्रानुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥

अत्र दीक्षार्थं मलमासास्तियोः प्रतिपाद्य तत्त्वसागरसंहितायाम् उक्तं हि ।

तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सकृत्तत्र उपस्थिते ।
तदनुज्ञा यदा लब्धा स दीक्षावसरोऽभवेत् ॥
ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि ।
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥
प्राप्ता दीक्षा तदा ज्ञेया गुरौ च समुपस्थिते ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥

इति नानादेवदीक्षाकालः ।

---

## अथ विष्णुदीक्षाकालः ।

मतुपञ्चरात्रे ।

विज्ञाय भीतिप्रवण हि शिष्य-
शुद्ध्यातौ तीक्ष्णकरस्य काले ।

भौमस्य वृद्धौ शुभलग्नयुक्ते
मन्दोदयेऽदे कृपया गुरुस्तु ॥

महापद्मरात्रे ।

द्वादश्यां शुक्लपक्षस्य सूर्यपक्षमथो तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यायामथवा कालमुद्दिश्य देशिकः ।
तदेकदिवसं पूर्वमधिवासनमारभेत् ॥

तन्त्रसागरसंहितायाम् ।

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवे प्रोक्ता वाचः प्रोक्ता चतुर्दशी ॥

सौरपञ्चरात्रे नवकदीक्षाविषये ।

दीक्षाविधौ वा नवके च काले
स्याद्द्वादशी पञ्चदशी तिथिस्तु ।
एकादशी पञ्चदशी तिथिर्वा
भवेच्चतुर्दश्यथवाष्टमी च ।
शाक्तादिके योगविधौ प्रशस्ता
स्याद्देवतानां नवमी चतुर्थी ॥

इति श्रीमहाराजाधिराज श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये दीक्षाकालो नाम षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

### अथ नैमित्तिकादिदेवतापूजा-तदङ्गानां कालः ।

विष्णुधर्मोत्तरे ।

कालश्च द्विविधो ज्ञेयः स्थूल-सूक्ष्मोपलक्षितः ।
स्थूलश्च लौकिको ज्ञेयः सूक्ष्मश्चाध्यात्मिकस्तथा ॥
सर्वं स्थूले च कर्त्तव्यं स्थूलं कालविधिं शृणु ।
स्वस्थानकाचिनिमिषतुर्य्यभागस्त्रुटिः स्मृतः ॥
तद्द्वयन्तु लवः प्रोक्तो निमेषस्तद्द्वयं भवेत् ।
निमेषाः पञ्चदश काष्ठाः त्रिंशत्काष्ठाः कला स्मृता ॥
त्रिंशत्कला मुहूर्त्तश्च तदेव घटिकाद्वयम् ।
सार्द्धाश्च नाडिकाः सप्त यामस्तत्सन्धिरुच्यते ।
सन्ध्ययोऽष्टौ समाख्याता अहोरात्रं विचक्षणैः ॥
यजनं प्रतिमानन्तु उत्तमन्त्विति कीर्त्तितम् ।
उदये चैव मध्याह्ने प्रदोषे चार्द्धयामके ॥
यजनं मध्यमं सन्ध्य उदयेऽस्तमनं समं ।
पराह्वंमेषु कालेषु पूजयेत्तु विशेषतः ॥
द्विकालं वा त्रिकालं वा आत्मार्थं संप्रपूजयेत् ।
पूजारम्भाय चाद्यन्तं सर्वं सन्ध्याविधिं कुरु ॥
सन्ध्यादिकमणाद्दोषाः कृते चेत्तु न दोषकः ।

पूर्वाह्णे चैव मध्याह्ने प्रदोषे बलिमाहरेत् ॥
अन्यासु सर्वसन्ध्यासु नाचरेत्तु बलिक्रमम् ।
अर्द्धयामे बलिं कुर्य्यात् काम्यार्थी तु विशेषतः ॥
नित्योत्सवे च पूजायां तथा संवत्सरोत्सवे ।
कारयेत्तु विशेषेण अन्यथा नैव कारयेत् ॥
भास्करोदयमारभ्य यावत्तु दश नाडिकाः ।
प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ॥
पूर्वाह्णाद्य समारभ्य यावत्तु दश नाडिकाः ।
मध्याह्न इति विज्ञेयः स्थापनारोपणादिषु ॥
मध्याह्नात्तु समारभ्य यावत्तु दश नाडिकाः ।
सायङ्काल इति प्रोक्तः प्रदोषमधुना शृणु ॥
अस्तमानं समारभ्य सार्द्धाः सप्त च नाडिकाः ।
प्रदोष इति विख्यातस्त्वर्द्धयाममतः शृणु ॥
प्रदोषान्तं समारभ्य त्रिपादेन त्रिनाडिकाः ।
अर्द्धयाम इति प्रोक्तस्त्वर्द्धरात्रमथोच्यते ॥
अर्द्धयामान्तमारभ्य यावत्तु दश नाडिकाः ।
अर्द्धरात्रमिति प्रोक्तं रात्रिनैकमथोच्यते ॥
भास्करस्योदयात्पूर्वं त्रिपादेन त्रिनाडिकाः ।
रात्रिनैकमिति प्रोक्तं ज्ञात्वैव सर्वमाचरेत् ॥
जलसंग्रहणं पुष्पसंग्रहं यजनं तथा ।
उदयादेव कर्त्तव्यं रात्र्यन्ते वा जलग्रहः ।
देवतास्थापनं तीर्थं प्रातःकाले समाचरेत् ॥

प्रातःकालात्समारभ्य यावद्वै दश नाडिकाः ।
तावद्धापि प्रकर्त्तव्यं तीर्थकार्यं प्रजायते ॥
अङ्कुरार्पणकार्यं तु उत्सवस्याधिवासनं ।
सायञ्च प्रारभेद्धीमान् रक्षाञ्चैव प्रबन्धने ॥
स्थापने प्रोक्षणे चैव गर्भन्यासे तथैव च ।
अधिवासनानि सर्वाणि मध्यरात्रे तु कारयेत् ॥
रात्र्यन्तके विशेषेण सर्वदेवक्रियार्थकं ।
कुर्यात्परं महाशब्दं तदाशुभनिवृत्तये ॥

इति नित्य-नैमित्तिकादिदेवतापूजा-महद्धानां कालः ।

---

## अथ विष्णुपूजाकालः ।

तत्र विष्णुधर्मोत्तरे ।

एककालं द्विकालं वा त्रिकालं पूजयेद्धरिं ।
अपूज्य भोजनं कुर्वन् नरकाणि व्रजेन्नरः ॥

नारदीये ।

प्रातर्मध्यन्दिने सायं विष्णुपूजां समारभेत् ।
यथा सन्ध्या तथा नित्या देवपूजा स्मृता बुधैः ॥
अशक्तो विस्तरेणैव प्रातः सम्पूज्य केशव ।
मध्याह्ने चैव सायञ्च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने वा विस्तरेण सङ्क्षेपेणाथवा हरिं ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥

निमित्तेषु च सर्व्वेषु तत्काले च विशेषतः ।
पूजयेद्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥

इति विष्णुपूजाकालः ।

---

## अथ देवताविशेषपूजने तिथिविशेषाः ।

भविष्यपुराणे ब्राह्मीकल्पे ।

प्रतिपत्पावकी प्रोक्ता द्वितीया ब्रह्मणस्तु ।
तृतीया गिरिपुत्र्यास्तु चतुर्थी विघ्नहारिणः ॥
पञ्चमी नागराजानां षष्ठी स्कान्दी तिथिः स्मृता ।
सप्तमी सप्तसप्तेश्च अष्टमूर्त्तेस्तथाष्टमी ॥
नवमी योगिनीनान्तु यमस्य दशमी तथा ।
एकादशी धनेशस्य द्वादशी चक्रिणस्तथा ॥
त्रयोदशी त्वनङ्गस्य भूतेशस्य चतुर्दशी ।
पौर्णमासी भगेशस्य पितॄणां दर्श उच्यते ॥

इति देवताविशेषपूजने तिथिविशेषाः ।

---

## अथ कामनाविशेषात्तिथ्यादिविशेषे देवताविशेषपूजा ।

भविष्यपुराणे ।

अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यक्षतं घृतम् ।
सविधा सर्व्वधान्यानि प्राप्नुयादमितं धनम् ॥
ब्रह्माणञ्च द्वितीयायां सम्पूज्य ब्रह्मचारिणः ।

भोजयित्वा च विद्यानां सर्वासां पारगो भवेत् ॥
तृतीयायां च वित्तेशं वित्तेशो जायते ध्रुवम् ।
क्रयादिव्यवहारेषु लाभो बहुगुणो भवेत् ॥
गणेशः पूजितः कुर्य्यात् चतुर्थ्यां सर्वकर्मसु ।
अविघ्नं विदुषां विप्र कार्य्यनाशञ्च कर्हिचित् ॥
नागानिष्ट्वा च पञ्चम्यां न विषैरभिभूयते ।
स्त्रियं वा लभते पुत्रान् पराञ्च श्रियमाप्नुयात् ॥
सम्पूज्य कार्त्तिकेयन्तु द्विजः षष्ठ्यां प्रजायते ।
मेधावी रूपसम्पन्नो दीर्घायुः कीर्त्तिवर्द्धनः ॥
सप्तम्यां पूजयेत् देवं चित्रभानुं दिवाकरम् ।
अष्टम्यां पूजितो देवो गोचूडाभरणो हरः ।
ज्ञानं ददाति विपुलं कामजान् यच्छते गुणान् ॥
मृत्युहा धनदश्चैव पापहा च प्रपूजितः ।
दुर्गां संपूज्य दुर्गाणि नवम्यां तरतेच्छया ।
संग्रामे व्यवहारे च सदा विजयमादिशेत् ॥
दशम्यां धर्म्मराजस्तु सर्व्वव्याधिहरो ध्रुवम् ।
नरकादपमृत्योश्च समुद्धरति मानवम् ॥
एकादश्यां यथोद्दिष्टा विश्वेदेवाः सपूजिताः ।
प्रजां पुष्टिञ्च धान्यञ्च प्रयच्छन्ति महीं तथा ॥
द्वादश्यां पूजितो देवः सर्व्वैश्वर्य्यसमन्वितः ।
बहुपुत्रो बहुधनस्तथा स्यान्नात्र संशयः ॥
त्रयोदश्यान्तु सम्पूज्य कामदेवं महाबलम् ।

पूजितः परया भक्त्या धनं पुत्रांश्च दापयेत् ॥
चतुर्दश्यां महादेव उमाकान्तो जगद्गुरुः ।
सम्पूजितो महाभक्त्या सर्व्वान् कामान् ददात्यसौ ॥
पौर्णमास्याञ्च यः सोमं पूजयेत् भक्तिमान् नरः ।
सकृपत्वं भवेत् तस्य इति मे निश्चिता मतिः ॥
अमायां पितरः पिण्डैरिष्टाः कुर्व्वन्ति सर्व्वदा ।
पूजां वृद्धिं धनं रक्षामायुष्यं बलमेव च ॥
उपवासं विनाप्येते भवन्त्युक्तफलप्रदाः ।
पूजिता जपहोमैश्च तोषिता भक्तितः सदा ॥
मूलमन्त्रास्तु संज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्वञ्च पद्मपत्राः कर्त्तव्याश्च तिथीश्वराः ॥

एतेषाञ्च रूपाणि देवताकाण्डे आलोकनीयानि ।

गन्ध-पुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजा ग्राम्ये न कर्त्तव्या कृतापि न फलप्रदा ॥
आज्यधाराभिसिक्तैश्च दधि-क्षीराम्ल-माक्षिकैः ।
यथोक्तफलदो होमो जपः शान्तेन चेतसा ॥
कृत्वा यज्ञं दद्यान्दे च[1] फलान्येतानि भक्तितः ।
यथोक्तानि यथोक्तानि लभेतेष्वाधिकानि ॥
इह जन्मन्यथान्यस्मिन् निवसेच्च सुखी सदा ।
तेषां लोकेषु मन्त्रज्ञो यावतीह[2] तिथिः स्मृता ॥
इह तस्मात् परिभ्रष्टमन्त्रज्ञो जायते नरः ।

(१) दद्या-द्दे चेति ख० । (२) यावन्तेहेति ख० ।

शुक्लपोषणसम्पन्नो निर्जितारिर्महीपतिः ।
स्त्रीपुत्रपुंसको वापि जायते पुरुषोत्तम ॥

कूर्मपुराणे ।

देवताभ्यर्चनं नृणामशेषाघौघनाशनम् ।
अमावास्यां तिथिं प्राप्य यदाराधयते भवम् ।
ब्राह्मणं पूजयित्वा तु सर्वपापैः प्रमुच्यते ॥
कृष्णाष्टम्यां महादेव तथा कृष्णचतुर्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वेशं प्रथमे यामे सर्वपापैः प्रमुच्यते ॥
अमावास्यामथावाप्य ब्रह्माणं च पितामहम् ।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्वपातकैः ॥
षष्ठ्यामुपोषितो देव शुक्लपक्षे समाहितः ।
सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः ॥
भरण्यां च चतुर्थ्यां च शनैश्चरदिने यमम् ।
पूजयेत् सप्तजन्मस्थैर्मुच्यते पातकैर्नरः ॥
एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते ॥

विष्णुधर्मोत्तरे ।

मार्कण्डेय उवाच ।

कालं तवाहं वक्ष्यामि देवतापूजने पृथक् ।
पक्षादेव सर्वत्र सोपवासस्य सर्वदा ॥

ब्रह्माणं पूजयेद्देव सततं प्रथमेऽहनि ।
पक्षद्वये महाभाग यथाशक्त्युपोषितः ॥
संवत्सरेण धर्म्मज्ञ विधानकृत्सुवर्णकम् ।
हंसयुक्तेन यानेन ब्रह्मलोकं प्रपद्यते ॥
चैत्रमासस्य या शुक्ला प्रथमा प्रतिपद् भवेत् ।
तदह्नि ब्रह्मणः कृत्वा सोपवासस्तु पूजनम् ।
संवत्सरमवाप्नोति सौख्यानि भृगुनन्दन ॥
काष्ठाश्चावयवाः सर्वे तस्मिन्नहनि पूजिताः ।
यच्छन्ति च धर्म्मज्ञ सौख्यं वपुरनुत्तमम् ॥
संवत्सराधिपं नागं तस्मिन्नहनि पूजयेत् ।
यशश्च सौख्यमाप्नोति ह्यारोग्यमप्यथैव च ॥
तथापि ब्रह्मणा सृष्टं त्रैलोक्यं प्रथमं द्विज ।
दक्षं प्रजापतिं नित्यं द्वितीयायामथार्च्चयेत् ।
फलमाप्नोति धर्म्मज्ञ गोमेधस्य न संशयः ॥
तथा नासत्ययोः कृत्वा तस्मिन्नहनि पूजनम् ।
नित्यमारोग्यमाप्नोति तथा रूपञ्च भार्गव ॥
शुक्लपक्षे द्वितीयायां बालचन्द्रस्य पूजनम् ।
कृत्वा दृष्ट्वा च सततं मासाच्चौ सुभगो भवेत् ॥
साध्या द्वादश ये प्रोक्तास्तेषां कृत्वा तु पूजनम् ।
तृतीयायां महाभाग द्वादशाहफलं भवेत् ॥
तृतीयायां तदाभ्यर्च्य ब्रह्म-विष्णु महेश्वरान् ।
पृथक् पृथक् महाभाग त्रिवर्गफलभाग् भवेत् ॥

चैत्रे लोकाय नद्या नाम सम्यक् संपूज्य यत्नतः ।
ऐश्वर्यं महदाप्नोति गतिमग्र्यां च विन्दति ॥
तृतीया श्रावणे कृष्णा या स्यात् श्रवणसंयुता ।
तस्यां संपूज्य गोविन्दं पुष्टिमग्र्यामवाप्नुयात् ॥
वैशाखे शुक्लपक्षे तु तृतीयायामुपोषितः ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥
सा तथाच कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्व्वमक्षयमुच्यते ॥
अक्षया सा तिथिस्तस्मात् तस्यां सुकृतमक्षयम् ।
अक्षतैः पूजितो विष्णुस्तेन साप्यक्षया मता ॥
अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् ।
विप्रान् सुसंस्कृतांश्चैव कृत्वा चैव तथाक्षतान् ॥
विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् ।
यवान्नं सुमहाभाग फलमक्षयमश्नुते ॥
एकामप्युक्तवत् कृत्वा द्वितीयां भृगुनन्दन ।
एतासन्तृतीयानां सर्वासान्तु फलं लभेत् ॥
मौक्तास्तु भृगवो नाम देवा द्वादश ये पुरा ।
चतुर्थ्यां पूजनं तेषां कृत्वा दिवमवाप्नुयात् ॥
यमराजपूजनं कृत्वा चतुर्थ्यामेव धार्म्मिकः ।
नाप्नोति नारकं दुःखं तुष्टे रविसुते नरः ॥
विनायकमथाभ्यर्च्य चतुर्थ्यां यदुनन्दन ।
सर्व्वविघ्नविनिर्मुक्तः कार्य्यसिद्धिमवाप्नुयात् ॥

निद्रां रतिं तथा श्रद्धां कीर्त्तिं मेधां सरस्वतीम् ।
प्रज्ञां पुष्टिं तथा कान्तिं तथैवाहनि पूजयेत् ॥
तत्प्रसादादवाप्नोति यथेष्टं मनुजोत्तम ।
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥
देवानां मातरः सर्वास्ताश्च तथाद्रि पूजिताः ।
सर्वकामप्रदा ज्ञेयाः पुरुषस्य विपश्चितः ॥
पञ्चम्यां पूजनं कृत्वा तथा च मनसा नरः ।
सौभाग्यं महदाप्नोति यमस्याप्यस्य विन्दति ॥
पञ्चम्यां पृथिवीं देवीं तथा संपूजयन्नरः ।
तामवाप्नोति यत्नेन मात्र कार्य्या विचारणा ॥
विश्वेदेवास्तु ये प्रोक्ताः पूर्वमेव तथा द्विज ।
तेषां संपूजनं कृत्वा पञ्चम्यां दिवमाप्नुयात् ॥
इष्टं गन्धर्वमभ्यर्च्य पञ्चम्यां सुभगो भवेत् ।
तथा चित्ररथं तेषां राजानन्तु विशेषतः ॥
देवभार्य्यास्तथा सर्वाः संपूज्य सुभगो भवेत् ।
इष्ट्वा त्वप्सरसश्चैव तथा रूपमवाप्नुयात् ॥
इष्टं नागं तथाभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ।
वारुणे पुष्करस्थाञ्च पञ्चम्यां समारभेत् ॥
सर्वकामसमृद्धस्य यज्ञस्य सफलं भवेत् ।
तथा च पूजयेद्राजन् तथैव नलकूवरम् ॥
श्रियः संपूजनं कृत्वा पञ्चम्यां प्रयतः सदा ।
श्रियमाप्नोति विपुलां संवत्सरमपोदिताम् ॥

सर्वेषां नृप पञ्चम्यां रतिं प्रीतिं सरस्वतीम्।
क्षमां मेधां भद्रकालीं तथा कात्यायनीमपि ॥
धृतिं स्वाहां स्वधामृद्धिं अनसूयां तथा क्षमाम्।
सुरभिं देवसेनाञ्च वेलां ज्योत्स्नां तथा शचीम् ॥
गौरीं वरुणपत्नीञ्च यमपत्नीं तथैव च।
धूम्राख्यां सुमहाभागां मृत्युच्छायां तथैव च ॥
अभीष्टदेवजननीं देवपत्नीं तथैव च।
पूजयेत् काममाप्नोति तस्मात्सर्वकामसमन्वयम् ॥
ऐरावतञ्च गरुडमुच्चैःश्रवसमेव च।
वरुणं वृषभञ्चैव तक्षकाद्यानहीनि च।
तथा सम्पूजयेद्राजन् विजयं समुपाश्नुते ॥
तथा भाद्रपदे मासि शुक्लपक्षस्य पञ्चमी।
नागसम्पूजनं कृत्वा धनभागी भवेन्नरः ॥
कुमारश्च तथा स्कन्दो विशाखश्च गुहस्तथा।
चतुरात्मविनिर्दिष्टो भगवान् क्रौञ्चसूदनः ॥
तमभ्यर्च्य नरः षष्ठ्यां पुत्रानाप्नोत्यभीप्सितान्।
पाशानां पूजनात् श्रेयो नरः प्राप्नोत्यसंशयम् ॥
सद्गुणा पूजनं तत्र कृत्वा तु सुखमाप्नुयात्।
स्कन्दपार्श्वचरान् राजन् रुद्रपार्श्वचरानपि।
यमपार्श्वचरांश्चैव रोगमुक्तिमवाप्नुयात् ॥
काश्यपाख्यायामभ्यर्च्य सूर्यपत्नीं सुवर्चसम्।
ईष्टान् कामानवाप्नोति नात्र कार्या विचारणा ॥

एवमेकोनपञ्चाशत् मरुतो नाम कीर्त्तिताः ।
तेषां सम्पूजनं कृत्वा सप्तम्यां दिवमाप्नुयात् ॥
दक्षस्य पूजां शैलस्य तदा कृत्वा सुखी भवेत् ।
पूजयित्वा यथाभीष्टं चरितं पुण्यभाग् भवेत् ॥
वह्निसम्पूजनं कृत्वा वह्निष्टोमफलमाप्नुयात् ।
वायोः सम्पूजनं कृत्वा प्राप्नोति परमां गतिम् ॥
सम्पूज्य च ऋषीन् सप्त सोमयज्ञास्तु ये स्मृताः ।
सदा प्राप्नोति तानेव गतिमग्र्याञ्च विन्दति ॥
सप्तम्यां षड्गाह्वं स दक्षमभ्यर्च्य मुनिम् ।
स्वाध्यायफलमाप्नोति तदापि फलमश्नुते ॥
पूजयित्वा समुद्रांश्च द्वीपमध्ये तदा नरः ।
पातालस्थान् महाभाग भुवमाप्नोत्यभीप्सिताम् ॥
सप्तलोकांस्तथा तत्र पूजयित्वा सुखी भवेत् ।
धीदाश्चैव तथैवाग्र्यां गतिमप्रमितां लभेत् ॥
गङ्गां सप्तप्रकाराञ्च तथा देवीं सरस्वतीम् ।
सप्त यज्ञानवाप्नोति नरः सम्पूज्य वै भुवम् ॥
आदित्यं पूजयित्वा वै शीघ्रं रोगैः प्रमुच्यते ।
सप्तम्यां यादवश्रेष्ठ गतिमग्र्याञ्च विन्दति ॥
एकानंशां तदा देवीं तथा सम्पूजयन्नरः ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥
नरेन्द्रपूजनं कृत्वा गतिमग्र्यां तथा लभेत् ।
अनन्त प्रकृतनयं पूजयित्वा सुखी भवेत् ॥

षष्ठ्यां पूजनं कृत्वा वसूनां धर्म्मवित्तमः[1] ।
नाकलोकमवाप्नोति वह्निश्च[2] मनसेप्सितम् ॥
चतुष्पथेषु रथ्यासु तथैवोदूखलेषु च ॥
गिरिशृङ्गेषु रथ्यासु नदीतीरेषु चाप्यथ ।
गुहासु च गत्वा रथ्यां[3] पिशाचानां बलिं हरेत् ॥
ब्रह्मादीनाञ्च देवानां कृत्वा सम्पूजनं ततः ।
तेषां बलिं विनिक्षिप्य क्षेममाप्नोति मानवः ॥
आयुधं पूजयित्वा तु सदा विजयमाप्नुयात् ।
दशम्यां पूजयित्वा वै विश्वदेवांस्तथा दश ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सम्पूजयेद्राजन् तथैव च दिशो दश ।
क्रियासु फलमाप्नोति यत्र यत्राभिजायते ॥
धर्मं सम्पूज्य देवेशं सर्वसत्त्वसुखावहम् ।
धर्म्यां गतिमवाप्नोति धर्म्मस्य फलमेव च ॥
एकादश्यान्तु संपूज्य रुद्रानेकादश प्रभो ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
तथा सर्वगतान् रुद्रान् सदा[4] सर्वत्र पूजयेत् ।
सर्व्वान् कामानवाप्नोति सर्व्वगानपराजितान् ॥
तथा च द्वादशादित्यान् द्वादश्यां पूजयेन्नरः ।

---

(१) धर्म्मवित्तत्त्व इति क० । (२) वह्निं चेन्मनसि स्थितमिति क्वचित्पाठः ।
(३) रथ्या प्राप्येत्यर्थः । (४) सदेति ग० ।

द्वादश्यां समवाप्नोति गतिमग्र्याञ्च विन्दति ॥
द्वादश्यां देवदेवेशं पूजयित्वा जलाधिपम् ।
पुण्डरीकमवाप्नोति वरुणं यादसां पतिम् ॥
सर्व्वदेवेश्वरं शक्रं पूजयित्वा तथा नरः ।
सर्व्वान् कामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥
विष्णोः सपूजनं कृत्वा कामानाप्नोत्यभीप्सितान् ।
दृष्टमर्थं फलं प्राप्य गतिमग्र्याञ्च विन्दति ॥
त्रयोदश्यामथाभ्यर्च्य कामदेवं जगत्पतिम् ।
सौभाग्यं समवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रशुक्लत्रयोदश्यां कामदेवमथार्च्चयेत् ।
अर्च्चनात् सर्व्वमाप्नोति फलं संवत्सरोदितम् ॥
यक्षाणां राक्षसानाञ्च चतुर्द्दश्यान्तु पूजनम् ।
कृत्वा क्षेममवाप्नोति क्रियाफलमथैव च ॥
पूजयित्वा धनाध्यक्षं तदा वैश्रवणं प्रभुम् ।
अक्षवित्तमवाप्नोति फलं संवत्सरोदितम् ॥
शङ्ख-पद्मौ तथाभ्यर्च्य निधाने सुपूजिते ।
मणिभद्रं तथाभ्यर्च्य धनं प्राप्नोत्यसंशयम् ॥
पूजयित्वा महादेव सर्व्वान् कामानवाप्नुयात् ।
माघमासे चतुर्द्दश्यां कृष्णपक्षे विशेषतः ॥
तथा पितृगणान् राजन् क्षीणचन्द्रे तु पूजयेत् ।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥
श्राद्धं कृत्वा तथा राजन् सर्वान् कामानवाप्नुयात् ।

स्वर्णमिन्दुं तथाभ्यर्च्य सौभाग्यं महदाप्नुयात् ॥
दृष्ट्वा शङ्खमथाभ्यर्च्य नक्षत्रमथवा नृप ।
तस्मात् क्षेममवाप्नोति कामञ्च यदुनन्दन ॥
मासनाम च नक्षत्रं करणं योगमेव च ।
पूजयित्वा तथा राजन् सौभाग्यं महदाप्नुयात् ॥
सोपवासस्तु नवमं नवमेशमथार्चयेत् ।
मघवामभागे च तस्मात् काममवाप्नुयात् ॥
कार्त्तिकेयं महाभागं कृत्तिकास्वर्चयेन्नरः ।
अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत् ॥
कृत्तिकासु तथाभ्यर्च्य वह्निं विजयमाप्नुयात् ।
भोगिनं नागमभ्यर्च्य श्रियमाप्नोत्यनुत्तमाम् ॥
कामदेवमथाभ्यर्च्य भार्य्या सौभाग्यमाप्नुयात् ।
सावित्रे च तथा हस्ते ब्रह्मा साफल्यमाप्नुयात् ॥
इष्टपर्वार्चितं देवं तस्माग यज्ञमेव च ।
गन्धर्व्वं वा यक्षं वापि तस्मात् कामानवाप्नुयात् ॥
कृष्णपक्षे चतुर्द्दश्यां महाकालमथार्चयेत् ।
सर्व्वान् कामानवाप्नोति तथैश्वर्य्यं न संशयः ॥
महेश्वरं मातृगणं तथा यक्षिं प्रपूजयेत् ।
एकां वा मातरं राजन् काममाप्नोत्यभीप्सितम् ॥
तथा कुसुमगन्धर्व्वपद्मकं पूजयेन्नरः ।
सर्व्वत्र जयमाप्नोति नात्र कार्य्या विचारणा ॥
कृत्तिकासु नरोऽभ्यर्च्य स्कन्दपार्षदांस्तथा ।

आरोग्यं महदाप्नोति यदा वा मनसेप्सितम् ॥
नृसिंहप्रतिमायाश्च पूर्णचन्द्रे समर्चयेत् ।
नरो मातृगणान् राजन् सर्वकाममनोरमान् ॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान् ।
यानसत्यमवाप्नोति पूजयित्वा वनस्पतीन् ॥
देवानां मानवानाञ्च तत्पत्ना ये तथापरे ।
तेषां सम्पूजनं कृत्वा चतुर्दश्यां सुखी भवेत् ॥
करणे वा मुहूर्त्ते वा यथावद् देवमर्चयेत् ।
तस्मात् काममवाप्नोति गतिमग्र्याञ्च विन्दति ॥
चैत्रमासमथारभ्य यथोक्तेऽह्नि नरः सदा ।
इष्टदेवमथाभ्यर्च्य यथोक्तं फलमश्नुते ॥
नक्षत्रेण धर्मज्ञ नक्षत्रे यदि वा तिथौ ।
पर्वेषु सर्वधर्मज्ञ सोपवास समाहित ॥
संवत्सरे चायने ऋतौ मासे च तद्दिने ।
नक्ताशी यत्र पूजा कृता तत्स्वामिनं सदा ।
तावत्कालं महाभाग तस्मात् काममवाप्नुयात् ॥

चैत्रात् समारभ्य महानुभाव
रोचेत यस्य सुरमर्चयानः ।
तस्येह तोषात् परमं स कामम्
प्राप्नोति यस्मात् यदुवंशचन्द्र ॥

इति कामनाविशेषेण तिथ्यादिविशेषे देवताविशेषपूजा ।

## अथ कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

देवता यत्र नक्षत्रे यदा दृष्टिस्थिता तदा ।
तदृक्षो यजेद्देवन्तु तदा स फलभाग् भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथाक्रमम् ।
नक्षत्राणि च सर्वाणि यज्ञार्थैव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीड़ितः ॥
भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः ।
तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमुच्यते ॥
अनलः कृत्तिकायान्तु ऋद्धिं सम्पूजितः पराम् ।
(१)रक्तमाल्यादिभिर्दद्यात् घृतहोमेन [illegible] ध्रुवम् ॥
रुद्रः प्रजापतिः पूज्य इष्टान् दद्यात्पशूंस्तथा ।
रोहिण्यां देवमाहूय दद्याच्च हरिकुञ्जरान् ॥
मृगशीर्षे तथा सोमं ज्ञानमारोग्यमेव च ।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमश्नुते ॥
शिवैः पद्मादिभिर्द्रव्यैर्दैवत्वं पयसा च वै ।
पुनर्वसौ चाप्यदितिं सदा सम्पूजनादिभिः ॥
चरणा तर्पिता चैव तामेव परिरक्षति ।

(१) रक्तेति क० ।

तिष्ये वृहस्पतिर्बुद्धिं ददाति विपुलं धनम् ॥
धान-गन्धादिभिर्नागा अश्लेषायां प्रपूजिताः ।
तर्पितस्तु पितृगणो भक्ष्याद्यैर्मधुरैः शुभैः ॥
मघायां विजयन्दद्यात् पूर्व्वायान्तु भगस्तथा ।
भर्त्तारमीप्सितं कुर्य्यात् कन्यायाः पुरुषस्य च ॥
[illegible] जन्मनि चार्य्यमुत्तरस्थो तथार्य्यमा ।
पूजितः सविता हस्ते विश्वतेजोनिधिः सदा ॥
गन्धैः पुष्पादिभिः सर्व्वैर्ददाति विपुलन्धनम् ।
राज्यं त्वष्टा च चित्रायां निष्कण्टकं प्रयच्छति ॥
स्वात्यां सन्तर्पितोवायुर्दद्यादायुर्बलं परम् ।
इन्द्राग्नी च विशाखायां पीतरक्तैः प्रपूजयेत् ॥
धनं राज्यं बलं चेन्द्रतेजांसि लिवसेत् सदा ।
अनुराधां समासाद्य मित्रे सम्पूज्य भक्तितः ॥
प्रियो भवति सर्व्वेषां निर्मलं चित्तमाप्नुयात् ।
ज्येष्ठायां पूर्व्ववच्छक्रमिन्द्रं पुष्टिमवाप्नुयात् ॥
गुणैः सर्व्वैश्च सम्पूज्य कर्म्मणा च धनेन च ।
मूले तु निर्ऋतिं सम्यक् भक्त्या सम्पूज्य पूर्व्ववत् ॥

इति कामनाविशेषेण नक्षत्रविशेषे देवताविशेषपूजा ।

---

## अथ निमित्तनक्षत्रादेः संयोगविशेषे देवता-विशेषपूजा ।

देवीपुराणे ब्रह्मोवाच ।

शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
नक्षत्रेश महापुण्यं पक्षर्क्ष-तिथियोगिकम् ॥
शृणु कृष्णाष्टमीयोगं शिवयोगेषु चोत्तमम् ।
मृदुवर्गश्च भाग्यश्च उमया भृगुवासरे ॥
दैवयोगाद्यदा षष्ठी पुष्यर्क्षे रविवासरे ।
स्कन्दयागस्तदा कार्य्यः सर्वकामप्रसाधकः ॥
यदा तु सूर्य्यवारेण सप्तमी विजया तु सा ।
तदा प्रभवते भानोर्याग सर्वगुणावहः ॥
अशिरिकाष्टमायोगे आर्द्रर्क्षे मातृपूजनम् ।
मायाद्याः कालिकाद्याश्च यष्टव्या विधिना मुने ।
सम्पूर्णं फलमाप्नोति स्वस्थाने खेचरो भवेत् ॥
पुष्पैरिष्ट्वा जलं येतैः पूर्वाह्णे च पूर्ववत् ।
स पापात् मुच्यते क्षिप्रं शारीरात् मानसात्तथा ॥
आषाढ़ासु तथा विद्यादुत्तराषाढयोगतः ।
विश्वान् सम्पूज्य पुष्पाद्यैः स्वर्गमाप्नोति चात्मनः ॥
श्रावणे त्वसिते विष्णोः पुष्पैर्धूपैश्च भक्तितः ।
सन्तर्प्य श्रियमाप्नोति धन विजयमेव च ॥
धनिष्ठायां वसुनिष्ठा न भय विन्दते क्वचित् ।
मघान्तोऽपि तथा तेषां गन्ध-पुष्पादिभिः शुभैः ।

वरुणन्तु समभ्यर्च्य व्याधिभिर्मुच्यते ध्रुवम् ॥
आतुरः पुष्टिमाप्नोति स्वास्थ्यमैश्वर्य्यमेव च ।
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्य्या विचारणा ॥
उत्तरायामहिर्बुध्न्यं पराङ्गतिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति सततं पशून् ॥
क्षितिः पुष्टिं स्थितिं चैव धृतिं विजयमेव च ।
एवं चैते समाख्याता यज्ञाः सङ्क्षेपतो मया ॥
नक्षत्रदेवतानाञ्च साधकानां हिताय वै ।
भक्त्या वित्तानुसारेण भवन्ति फलदा ध्रुवम् ॥
गन्तुं चेच्छेद् यदा ग्रामं यात्रायां ध्रुवमेव च ।
नक्षत्रदेवतायज्ञं कृत्वा तत्सर्वमाचरेत् ।
एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ॥
क्रियाफलञ्च सम्पूर्णमित्युक्तं भानुना स्वयम् ।
यज्ञाभावे जपङ्कुर्य्याद्धोमङ्कुर्य्यादथेप्सितम् ॥
इति तिथिनक्षत्रादिसंयोगविशेषे देवताविशेषपूजा ।

---

## अथ पवित्रारोपणकालः ।

तत्र शिवपवित्रारोपणकालः ।

शिवधर्म-भविष्यत्पुराणयोः ।

पौर्णमास्यां तथा षष्ठ्यां शिवं सम्पूज्य यत्नतः ।

उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् ॥
पुनरेव च कार्त्तिक्यां पूज्य शम्भुं क्षमापयेत् ।
यतिभ्यो दक्षिणां दद्यात् सूत्रवस्त्रादिपूर्व्विकाम् ॥
यः कुर्य्यादब्दमध्येवं चातुर्मास्यं पवित्रकम् ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥
पुण्यक्षयात्परिभ्रष्टश्चतुर्वेदश्च जायते ।
इहागतो भवेद्राजा गुणरूपसमन्वितः ॥

शिवरहस्ये ।

पवित्रारोपणं शम्भोः कुर्य्यान्नभसि वा शुचौ ।
चतुर्द्दश्यामथाष्टम्यामधिवास्य विधानतः ॥
श्रावणे प्रौष्ठपद्यां वा पवित्रारोपणन्तु यः ।
कुरुते नापवित्र(१) स्यात्तस्य संवत्सरान्तरा ।
शम्भोः पवित्रमारोप्य शिवः सम्पूर्णतामियात् ॥
पवित्रास्तु पवित्रन्तु शान्त्यर्थं शृणु नन्दन ।
अपवित्रं पवित्रं स्याद्देहकर्माखिलं नृणाम् ॥

कालोत्तरे ।

पूर्णां कृत्वा प्रकर्त्तव्यं नित्यमेव पवित्रकम् ।
अथवा नियमेनैव कुर्य्यान्मासत्रयान्तरे ॥
आषाढ़ान्ते चतुर्द्दश्यां नभस्य-नभसोस्तथा ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोः क्रमम् ।
पवित्रारोपणं कार्य्यं न तु कालान्तरे स्थितम् ॥

---

(१) अपवित्रमिति भावप्रधानो निर्देशः अपवित्रत्वमित्यर्थः ।

एवं काले ह्यतिक्रान्ते प्रायश्चित्तं समाचरेत् ।
मौक्तिकानां विशेषेण शुक्लपक्षे ह्ययं विधिः ॥

( 'आषाढ़ान्ते चतुर्द्दश्यामिति पौर्णमास्यां चान्द्रमासविवक्षया आषाढ़शुक्लचतुर्दश्यामित्यर्थः ।

तथाच मोक्षधर्मोत्तरे ।

आषाढ़स्य तथाष्टम्यां श्रावणस्य सिताष्टमी ।
सप्तम्यान्तु चयोदश्यां तथ तन्तुपवित्रकम् ॥
चयोदश्यां प्रकर्त्तव्यं पवित्रं गन्धसंज्ञितम् ।
पवित्रमथ भाद्रायामाषाढ़नियमः स्मृतः ॥

एवं तथापि विष्णुस्वापाभावे न कर्त्तव्यम्, किन्तु विष्णुस्वापानन्तरमेव कर्त्तव्यम् ।

उक्तञ्च ।

आषाढ़ेऽपि न कर्त्तव्यमसुप्ते मधुसूदने ।
कालोऽप्यनियतस्तत्र श्रूयतां विधिनिर्णयः ॥
शुक्लाषाढ़चतुर्दश्यां कुर्य्याच्छ्रावण-भाद्रयोः ।
अष्टम्यान्तु चतुर्दश्यां पक्षयोरुभयोरपि ॥

नन्वाषाढ़चतुर्द्दश्यामित्यनेनैव[१] विष्णुस्वापानन्तरकालः स्वयमेव लभ्यते, तत्र किमिति प्रस्तुत एव मधुसूदन इति । सत्यम् । किन्तु आषाढ़स्तावद्द्विविधश्चान्द्रः सौरश्चेति तत्र चान्द्रे सर्वकालं स्वपिति पुनरधिकमासे सौरमासिककर्कटसङ्क्रान्तावेव विष्णुः स्वपितीत्येतदुक्तमिति ■ दोषः ।

(१) न आषाढ़चतुर्द्दश्यामित्यनेनैवेति ख० ।

उक्तञ्च ज्योतिःशास्त्रे ।

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति ।

तथा ।

दर्शद्वयमतिक्रम्य यदा सङ्क्रमते रविः ।
अधिमासः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

इति वचनाच्च । पूर्वाषाढे पवित्रं न कुर्यादित्यभिप्रायः । यदा तु चैत्रादिषट्सु मासेष्वन्यतमस्मिन्नधिकमासे द्विराषाढः स्यात्तदा श्रावणे विष्णुस्वापः ।

तथाच ज्योतिःशास्त्रे ।

माधवादिषु षट्सु एकमासे दर्शद्वयं तदा द्विराषाढस्तदापि स्यान्नैव श्रावणे स्वप्नः, अतस्तदा श्रावणादौ पवित्रारोपणं परं कार्य्यम् ।

उक्तञ्च मोक्षचौरीश्वरे ।

दीक्षादिस्थापनानाञ्च पवित्रादि व्रतक्रतोः ।
पवित्रादि न कुर्वीत यदिच्छेच्छुभमात्मनः ॥
दर्शद्वयं भवेद्यत्र रविसङ्क्रान्तिवर्जितम् ।
अधिमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
तुल्यमासेऽधिमासे च कर्त्तव्यन्तु पवित्रकम् ।
शुभे चैव हृषीकेशे दोषभागन्यथा भवेत् ॥

ननु किं चान्द्रमासेन सौर एव ग्राह्यो भवेत् तथाधिकमासस्य सद्भावात्, नैव । प्रायेण पवित्रारोपणे चान्द्र एव मासोऽभिमतो न तु सौरः, कस्मात्ते रसो प्रायश्चित्ताभिधानात् ।

आषाढादिषु मासेषु सुप्त एव जनार्दने ।
शुक्लपक्षेऽथवा कृष्णे प्रशस्ता सूत्ररोहणे ॥
रोगाभिवृद्धिसंयुक्तः प्रवासी राजपीडितः ।
उक्तमासत्रये यस्तु न कुर्यात् सूत्ररोहणम् ।
अर्घौ कन्यागते भानौ यथा दशाणुना युतम् ॥

'दशाणुना' अघोरमन्त्रेण ।

कुर्यात् पवित्रकं शम्भोस्तुलायां न कदाचन ।
मलिम्लुचं परित्यज्य सर्वकर्मसु गर्हितम् ॥

कारणे ।

आषाढादिचतुर्मासास्तदन्यानि विवर्जयेत् ।
कर्त्तव्यं पक्षयोः शुक्ल-कृष्णयोरुभयोरपि ।
चतुर्दश्यामथाष्टम्यां रोपयेत्तु पवित्रकम् ॥

रत्नावल्यां ।

यदा नैकदिने शम्भोः पवित्राद्य चिकीर्षति ।
कृतनित्यस्तदा सन्ध्यां कृत्वा नैमित्तिकीं चरेत् ॥
अध्यगान्धाद्यकं कृत्वा पवित्रं पूजयेन्नरः ।
यदा खण्डतिथिश्चात्र तदा तत्तिथिभागयोः ॥

यदा चतुर्दशी पौर्णमास्यर्द्धसम्मिश्रा तदा कालान्तरे ऽभिहितम् ।

यद्वा तत्रैव कर्त्तव्यं यदि व्यग्रतया तदा ।
गोदोहान्तरितं कृत्वा साधिवासं पवित्रकम् ।
चतुर्दशीचर्यां कुर्याच्छेषं शेषतिथौ चरेत् ॥

सप्तम्यां वा त्रयोदश्यां कृत्वा गन्धपवित्रकम् ।
अष्टम्याञ्च चतुर्दश्यां कुर्य्यात् पवित्रकं तथा ॥
अपरेऽहनि कर्त्तव्यं सुपवित्रमिति स्थितिः ।
अथ द्वाभ्यां दिनैकेन कर्त्तव्यञ्चापरे जगुः ॥
अधिवासत्रयोदश्यामपरेऽह्नि विधिद्वयम् ।
मोहोत्सान्तरित कृत्वा यदि स्यात् व्ययमानसः ॥
चतुर्दशीदिने कुर्यात् साधिवासं पवित्रकम् ।
सुपवित्रं पौर्णमास्यां तिथिभेदे त्वयं विधिः ।
अष्टम्यामपि चोद्दिश्य क्रमोऽयं सूत्ररोपणे ॥

इति शैवपवित्रारोपणकालः ।

---

## अथ विष्णुपवित्रारोपणकालः ।

तच्च पवित्रारोपणं काम्यं नित्यञ्च ।

तत्र विष्णुरहस्ये ।

पवित्रारोपणं विष्णोर्भुक्ति-मुक्तिप्रदायकम् ।
स्त्रीपुंसोर्निर्गद पुण्यं सुखसम्पद्धनावहम् ॥
दुःस्वप्नान्तु तथा पुण्यं सर्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
संवत्सरे नरो भक्त्या समभ्यर्च्य जनार्दनम् ।
यत्फलं समवाप्नोति पवित्रारोपणेन तत् ॥
न करोति विधानेन पवित्रारोपणन्तु यः ।

तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ॥
तस्माद्भक्तिसमायुक्तैर्नरै-र्विष्णुपरायणैः ।
वर्षे वर्षे प्रकर्त्तव्यं पवित्रारोपणं हरेः ॥

मन्त्रप्रकाशे तु ।

पवित्रारोपणं वक्ष्ये सर्वपूजाफलप्रदम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ।
विधिना शास्त्रदृष्टेन यो न कुर्यात् पवित्रकम् ॥
वर्षे वर्षे ततः कार्य्यं विधिदृष्टेन वर्त्मना ।
भक्त्या परमया युक्तो हरिप्रीत्यै पवित्रकम् ॥

तस्मादावश्यकं पवित्रारोपणकर्म भवति कामनानुसारेणायुरा-दीन्यपि फलानि भवन्तीति द्रष्टव्यम् ।

विष्णुरहस्ये ।

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायान्तु गतेऽथवा ।
तस्यामेव तिथौ सम्यक् तुलास्थे न कथञ्चन ॥

तथा ।

शरत्पर्वसु कुर्वीत पवित्रारोपणं शुभम् ।
द्वादश्यां श्रवणे चापि पञ्चम्यामथवा द्विज ।
चतुर्द्दश्येव कर्त्तव्यं चतुर्दश्यामथापि वा ॥

मन्त्रतन्त्रप्रकाशे ।

कर्कटकगते सूर्य्ये तथा सिंहगतेऽपि वा ।

पञ्चमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता ॥
मातॄणां नवमी प्रोक्ता वासवे(१) दशमी स्मृता ।
एकादशी मुनीनाञ्च द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी ।
पौर्णमासी सुरश्रेष्ठ पितॄणां कथिता तिथिः ॥
देव्यास्त्रिपुरभैरव्याः कथिता तु चतुर्थिका ।
अन्यासामपि नित्यानामष्टमी नवमी स्मृता ॥
तिथयस्ते समाख्याताः पवित्रारोपणे शुभाः ।
पञ्चम्यां शिवलिङ्गानि नियमेन समर्चयेत् ॥
पवित्रारोपणं तत्र पृथङ्मुख्यतमेरितम् ।
भवेत् द्रव्यस्य सम्पत्त्यै देशस्यापि तथा भवेत् ॥
यस्य मुख्यतया देव प्रोक्ता तत्तिथौ भवेत् ।
इति कालः समाख्यातः शृणु सूत्र सुराधिप ॥

विष्णुरहस्ये ।

तिथयः सूत्रविख्याताः पृथगुक्तास्तपोधनाः ।
प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः ॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः ।
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य तु ॥
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य तु ।
सप्तमी भास्करे प्रोक्ता दुर्गायाश्चाष्टमी स्मृता ॥

(१) वासवेदशमी स्मृतेति ख० ।

मातृणां नवमी प्रोक्ता दशमी वासुके स्मृता ।
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी ।
मम देव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता ॥
यथोक्ता शुक्लपक्षे तु निषये श्रावणस्य तु ।
सर्वेषामेव देवानां कार्य्यन्तासु यथाविधि ॥

तथाच कालोत्तरे ।

विशेषेणोच्यते[1] वत्स प्रतिपत्प्रभृतिक्रमात् ।
ब्रह्मेन्द्र ब्रह्मणो गौर्य्या गणेशादिषु पञ्चमी ॥
षण्मुखस्य तु सूर्य्यस्य शिवस्याष्टमी स्थिता ।
अम्बिकाया दशान्तस्य रुद्राया चक्रपाणिनः ॥
कामस्य च त्रयोदश्या चतुर्दश्यां शिवस्य च ।
पितृणाञ्चैव पूर्णायां गुरुयोगञ्च कारयेत् ॥
चतुर्दश्यामथाष्टम्यां सर्वं साधारणं स्थितम् ॥

देवीपुराणे देवीमधिकृत्य ।

अथवाषाढमासे तु श्रावणे वापि कारयेत् ।
अष्टम्यां वा चतुर्दश्यामधिवास सुराधिप ॥
इति नानादेवतापवित्रारोपणकालः ।

---

## अथ दमनकारोपणकालः ।

देवीपुराणे ब्रह्मोवाच ।

चैत्रादौ कारयेत् पूजां मम वत्स यथाविधि ।

---

(१) विशेषेणोत्तरे इति ख० ।

गन्धधूपार्चनाद्यैर्मालाभिर्दमनोद्भवैः ॥
सहोमं पूजयेद्देवं सर्वकामानवाप्नुयात् ।
सर्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत् ।
हविष्यमन्नं नैवेद्यं देयं गन्धार्चनं पुनः ।
फलमाप्नोति विप्रेन्द्र उमया यत् प्रभाषितम् ॥
पञ्चम्यां पूजयेन्नागाननन्ताद्यान् महोरगान् ।
क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ॥
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्वोपहारिकी ।
इहैव सुखसौभाग्यमन्ते स्कन्दपदं व्रजेत् ॥
दशम्यां धर्म्मराजस्य पूजा कार्य्यातिगन्धिकी ।
विगतारिर्निरातङ्क इह चान्ते परं पदम् ॥
एकादश्यामृषेः पूजा कार्य्या सर्वोपहारिकी ।
धनवान् पुत्रवान् कान्त ऋषिलोके महीयते ॥
कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ।
रतिप्रीतिसमायुक्तमशोकमणिभूषितम् ॥
कुम्भे वा सितवस्त्रे वा लेख्यपात्रे पटादिभिः ॥
पौर्णमास्यां तथा कार्य्या सर्वकामसमृद्धये ॥
रुद्राय सहशिष्याय कायिकं लभते फलम् ।
अखण्डमिष्टं प्रयच्छेद् यः सौभाग्यमतुलं लभेत् ॥
इति दमनकारोपणकालः ।

---

## अथ मासविशेषेण पुष्पविशेषाः ।

आषाढ़े बिल्व-कह्लारैरीप्सितं लभते फलम् ।
नवमल्लिकया पूजा नभोमासि महाफला ॥
कदम्बैश्चम्पकैरेवं नभस्ये सर्वकामदा ।
आश्विने पङ्कजैः शम्भोर्मालत्या पूजनं शुभम् ॥
ईप्सितं लभते सर्वं सर्वकामफलप्रदम् ।
माघ-फाल्गुनयोः पुष्पैः पूजनं कुन्द-सुन्दरैः ।
चैत्रे दमनकैश्चापि पूजनं शतपत्रकैः ॥
चन्दनैः कुसुमैश्चापि पूजनाच्च जगद्गुरोः ।
पूर्णे संवत्सरे मर्त्यस्त्रिदशैः समतां व्रजेत् ॥

भविष्यत्पुराणे ।

पूजा चम्पक मालत्या इषेऽभ्युदयदायिनी ।

'इषे' आश्विने ।

शतपत्रिकया पूजा कार्त्तिके सार्वकामिकी ।
मार्गशीर्षोत्पलैः पूजा पुष्यैः स्यात् कुङ्कुमैः शुभा ॥
माघेऽथ कुन्दकुसुमैर्मरुवकेन फाल्गुने ।
शतपत्रैस्तथा चैत्रे यः कुर्यात्सुरसत्तम ।
लभते सर्वयज्ञानां सर्वदानफलं तथा ॥

इति मासविशेषेण पुष्पविशेषाः ।

---

## अथ रात्र्यादिभेदेन पुष्पभेदाः ।

कनकानि कदम्बानि रात्रौ देयानि शङ्करे ।

दिवाशेषाणि देयानि दिवारात्रौ च मल्लिका ।
प्रहरन्तिष्ठते जाती करवीरमहर्निशम् ॥

प्रहरमहर्निशं वा पूजायां स्थापनानन्तरमुत्तारणीयमित्यर्थः । कालिकाकारणयोः[1] ।

नन्द्यावर्त्तं त्रियावर्त्तं श्वेतार्कं श्वेतपुष्पकम् ।
पुन्नाग पङ्क्ति पीठ मालतीमुदये हरेत् ॥
पङ्कज कुन्दनी ब्राह्मी व्याघात करवीरकम् ।
चम्पक पाटली द्रोण मध्याह्ने तु प्रदापयेत् ॥
चम्पक केतक भद्रा धुस्तूर चक्रकर्णिकाम् ।
मालती मल्लिकाश्चैव दापयेत्तु प्रदोषके ॥
जाती नीलोत्पलञ्चैव पुष्प कुन्द कदम्बकम् ।
दिवर्णञ्चैव भद्रञ्च अर्द्धयामे प्रदापयेत् ॥
नीलोत्पलसमं पुष्पं न भूतं न भविष्यति ।
कदम्ब चम्पक जाती देय चार्धरात्रके ।
अन्यपुष्पाणि सर्वाणि अन्यसन्ध्यासु दापयेत् ॥
इति रात्र्यादिभेदेन पुष्पभेदाः ।

## अथ सार्वकालपुष्पाणि ।

बिल्वपुष्पं शमीपुष्पं करवीरञ्च मालती ।
उन्मत्तकं चम्पकञ्च पद्मं मौक्तिकं मम ॥
चम्पकाशोक पुन्नागं सकह्लारास्तथा मम ।

(१) कालिककारणयोरिति ख० ।

ऋषयो द्विजशार्दूल ये चान्ये मङ्गलार्थिनः ।
एतैर्हि पूजितो नित्यं प्रीतिं शीघ्रं व्रजाम्यहम् ॥
यै कैश्चापीह कुसुमैर्जल स्थलरुहै शिवम् ।
सपूज्य प्रोषितो भक्त्या शिवलोके महीयते ॥

इति कालविशेषेण शिवपुष्पविशेषपूजनम् ।

---

अथ पुष्पादीनामभावे पत्रादिभिः पूजा कार्येऽति-निरूप्यते ।

स्कन्दपुराणे ।

अभावे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ।
शालितण्डुलगोधूमैर्यवैर्वापि समर्चयेत् ।
गाणपत्यमवाप्नोति रुद्रलोके वसेच्चिरम् ॥

भविष्यत्पुराणे ।

अभावेन हि[1] पुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यभावे तु फलान्यपि निवेदयेत् ॥
फलानामप्यभावे तु तृणगुल्मौषधीस्तदा ।
औषधीनामभावे तु भक्त्या भवति पूजितः ॥

इति पुष्पाद्यभावे पत्रादीनां पूजासाधनत्वं निरूपितम् ।

---

(१) अभावेनेत्यत्र विशेषणे तृतीया, पुष्पाभावविशिष्ट इत्यर्थः ।

## अथ सामान्यतः क्षुद्रकर्मकालः ।

नारायणीये ।

कुलिकः स्थविरो योगस्तारा वैनाशिकं कुजः ।
अष्टमोराशिरित्याद्याः कालाः स्युः क्षुद्रकर्मणीति ॥

कुलिकलक्षणम् शनैश्चराद्यारभ्य अष्टौ दिगाधिपमुख्योदयिनो दिवा रात्रौ वा परार्द्धमुदितं कुलिकोदयाख्यम्[1] । प्रपञ्चितश्चायं विषहरप्रकरणे ।

स्थविरोनाम

गुरुत्र्यम्बके चेत् तयोरेव दिनं यदि ।
तद्दिने स्वांशके रिक्ते रोगपीडादिप्रतिक्रिया ॥

ताराश्च

तिस्रश्च पूर्वा भरणी मघा च
पञ्चोपवीर्याणि वदन्ति तज्ज्ञाः ।
रौद्रेन्द्र मूलो-रग-दैवतानि
क्रूराणि तेषूग्रपरिग्रहः स्यात् ॥
वैनाशिकं यथोविधं वराहमिहिरोदितम् ।
दारिद्र्यकन्तु मन्दाद्यैरष्टावीत्येकशब्दितम् ॥

'कुजः' मङ्गलवारादिनम्, 'अष्टमोराशि' उत्पत्तिकाले यस्मिन् राशौ चन्द्रो वर्त्तते तस्मैवाष्टमो राशिकालः । आदिशब्देन कला-तिथिवेलाग्रहणम् । तत्र कला नाम शुक्लपक्षे चन्द्रकला वर्द्धन्ते क्षीयन्ते च कृष्णपक्षे तत्रापि क्षयकालेऽष्टमीमारभ्यामावास्यापर्यन्त

---

(१) पाठोऽयं चादर्शसम्मत एव मुद्रित परन्त्वयं न समीचीनः ।

कुर्य्यात्। 'तिथय.' चतुर्थ्यादय, चन्द्रोदयमारभ्य पञ्चदशघटिकापर्य्यन्तं यमुद्दिश्य यो भौ भवति सा चन्द्रवेला, नाम तदा स्तम्भादिकर्म न कुर्य्यात्। तदारभ्य पुनः पञ्चदशघटिकापर्य्यन्तं वेला नास्ति, तदा स्तम्भं कुर्य्यात्।

इति मासाद्यतः क्षुद्रकर्मकालः।

## अथ वश्यादिकर्मविशेषेण कालविशेषः कथ्यते।

मन्त्रतन्त्रप्रकाशे।

शिशिरादिषडृतुनामं कर्माङ्गं तच्च कथ्यते।
साधार्थं कथितं पूर्वं कर्मणां सिद्धिकारणम्॥
दिनादिद्याभिनीशान्ते ऋतवः षडूव्यवस्थिता.।
शिशिराद्या' समारभ्य नाडीदश दश क्रमात्॥
आरक्तधवलो याभ शिशिरे शस्यकर्मणि।
उच्चाटनेऽथ विद्वेषो वसन्तो लोहितो युवा॥
ग्रीष्मो धूम्रशरीरश्च मारणे स नियुज्यते।
प्रावृट् धूम्रशरीरा तु स्तम्भने सा नियोजिता॥
शरत् कृष्णा मताकाष्ठा मन्त्रज्ञैर्गुरुपूजकैः।
हेमन्तो धवलो वृद्धः शान्तिवश्यादिकर्मकृत्॥

मन्त्रतन्त्रे।

श्रीकामश्च जपेत्काले मन्त्रं पूर्वाह्णिकेऽथवा।
महाशारस्वतजप काले पूर्वाह्णिकेऽथवा॥
तथा काले च पूर्वाह्णे वश्यार्थी प्रजपेन्मनुम्।
आकर्षणे निशि प्रोक्त यामात् पूर्वेन्तु तत् दिने॥

मन्त्रतन्त्रप्रकाशे ।

पूर्वाह्णे शुभदं कर्म प्रात्तो वापि निगद्यते ।
सद्योपारस्थल नाम आहुस्ते तान्त्रिका यथा ।
आयुषो वर्द्धनश्चेति यच्छुभानि प्रवर्त्तते ।

मन्त्रतन्त्रे ।

प्रदोषो बुद्धिनाशाय सम्भवश्चापराह्णिकम् ।
विद्वेषाय जपेन्मन्त्रं मध्याह्ने तु ज्वराय च ॥
उच्चाटनार्थाय जपेन्मध्याह्नात् परतो मनुम् ।
मारणे तु प्रकर्त्तव्य यामादूर्द्धं तृतीयकात् ॥

इति मन्त्रजपादिकर्मविशेषेण कालविशेषः ।

---

## अथ विष्णुशयनादिकालनिर्णयः ।

तत्र भविष्यत्पुराणे ।

आभाकाशितपक्षेषु मैत्र श्रवण-रेवती- ।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सव ॥

नारदीये ।

मैत्राद्यपादे स्वपितीह विष्णु
श्रुतेश्च मध्ये परिवर्त्तमेति ।
पौष्णावसानेन सुरादिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥

अल्पकालेषु मासेषु मधुरे माधवस्य च ।

द्वादश्यां शुक्लपक्षे च प्रस्वापावर्त्तनोत्सवः ॥
पौष्णपौषे यदा नाह्नि मैत्राद्यमपि नो निशि ।
द्वादश्यामपि नो कुर्यात् उत्थानं शयनं हरेः ॥

द्वादश्यां तथा कुर्यादिति पठिता ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥

विष्णुधर्मोत्तरे ।

विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षयोगे पादयोगो न कारणम् ॥

पुराणात् ।

उत्थाने शयने चैव तथा पार्श्वविवर्त्तने ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

वाराहपुराणे ।

न भाद्रनियमश्चात्र स्वापे वा परिवर्त्तने ।
पादयोगो यदा तत्र चन्द्रेणापि तदा भवेत् ॥

मत्स्यपुराणे ।

रेवतीश्रवपर्यन्ते शेषपर्यङ्कावलोकिते ।
उन्निद्रत्वं हृषीकेशं योगनिद्रा निमुञ्चति ॥
रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥
रेवत्यादिरथान्तो वा द्वादश्या च विना भवेत् ।
उभयोरप्यभावे तु सन्ध्यायां तु महोत्सवः ॥

पुराणात् ।

> रेवत्यन्तो यदा रात्रौ भाद्रे नारायणोत्सवे ।
> पादयोगमनात्तत्र स्वाप एव प्रवर्त्तते ॥
> रेवत्यन्तो यदा रात्रौ गत पादान्तरेऽपि च ।
> अपराह्णे तदा विष्णुर्योगनिद्रां व्यपोहति ॥
> रेवत्यन्तो यदा रात्रौ द्वादश्या च विना भवेत् ।
> उभयोरप्यभावे स्यात् सन्ध्यायां तु महोत्सवः ॥

वाराहपुराणे ।

> द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
> आभाकासितपक्षेषु शयनावर्त्तनादिकम् ॥

अयमर्थः ।

हरिशयनादौ शुक्ला द्वादशी आषाढ भाद्रपद कार्त्तिकानामनुराधा श्रवण रेवतीनाम् आदिमध्यान्तपादयुक्ता रात्रिसन्ध्या दिवाक्षयुक्ता च प्रशस्ता, यदा तु यथोपदर्शितकाले पादयोगो न प्राप्यते तदा द्वादशीनक्षत्रयोग आदरणीयात्[1] । पादयोरुभयोरुत्सवेन स्वाप विशेष । दिवा रेवती द्वादशीयोगे रात्रिगामिनि नक्षत्रे शेषदिनान्ते विष्णोरुत्थानं यदा तु रेवत्या विना द्वादशी तदा द्वादशीसन्ध्यायामुत्थानादिकं भवति ।

तदुक्तं ।

> द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
> आभाकासितपक्षेषु शयनावर्त्तनादिकमिति ॥

---

(१) आदरणीय इत्ययं पाठो युक्तः ।

अत्र केचिदाहुः ।

यदि मैत्रादीनि नक्षत्राणि द्वादशीं विहाय त्रयोदश्यां भवन्ति तदा चतुर्दश्यां तदनन्तराणि ज्येष्ठादीनि तत्र पौर्णमास्यां तदनन्तराणि मूलादीनि, तथा सति आषाढ इति विरुध्येत तत्र नक्षत्रयुक्ता पौर्णमासी सन्धिव्यवधानादिगमने भाद्रपदमासस्य यथाकथञ्चित् प्राप्यते, "आद्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मत । ज्ञेया मासा द्विभा ज्ञेया" ॥ इति वचनात् । न धनिष्ठा ज्येष्ठादौ परिशयनादि भविष्यति ।

यदुक्तं विष्णुधर्मोत्तरे ।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति ॥

आचारसारे तु "द्वादश्यामृक्षयुग्मादिति पठितम् । तेनान्यतिथिगतमैत्रादौ पादसम्बन्धे कटद्वादश्यां सन्धिसमये शयनादिक्रिया ।

अत्र श्रीकरः प्राह[1] यदा गतकाले अमावस्यादय भवति तदा मिथुनादितरेष्वाषाढीभावात् सप्तचन्द्रसूर्ये चत्वारशयनदैवत्यादयो यदि वा चतुर्दश्यां भवन्ति तदापि मध्यरयो मत्योत्थानविलोकनासिद्धत्वात् दुर्लभम् । तदा[2] इच्छिते नक्षत्रमासानुसारेण क्रियमाणे पञ्चममासप्राप्तौ "प्रबुध्यते मासचतुष्टयेनेत्यस्यानुपपत्तेः पादयोगादन्यथाव्यवस्थय एव कल्पत्वादनादरणीयः । द्वादश्यां सन्धिसमय इति तु मातुरकल्पाद्यवक्षेनोक्तम् दिवा हि वैष्णवाना-

---

(१) श्रीकरमतं आदर्शपुस्तकमेव मुद्रितं परन्त्विदमादर्शदोषेणात्यन्तापरिशुद्धमिति । (२) तदेति गचिह्नितपुस्तके पाठः ।

मनुष्ठानं कार्यं माथुरस्य तद्दिनरतस्य तत् । माथुरी द्वादशी-पुरस्कारेण नक्षत्रमनपेक्षणेन च इति तु नक्षत्रपादयोगपुरस्कारेण द्वादश्यपेक्षायाम च तिथिनक्षत्रमेलने च पक्षद्वये प्रशस्ततेन वैदिकशाखाविकल्पन्यायेनोपपत्तिः । तदाह तिथि नक्षत्रयोमानुष्ठानविकल्पः । कथं तर्हि हरिशङ्करयोः सहोत्थानेत्यस्य नान्यातिथिरस्ति तस्मात् सर्वमनाकुलमिति । अत्र पण्डितपरितोषकृता दूषणमभिहितं असुपपन्नमेतत्, यथा हि पादयोगादन्यतिथौ द्वादश्यामन्वयोग इत्यस्य कोऽर्थः, द्वादश्या अन्या एकादशी त्रयोदशी एकादशी-द्वादशीतुल्ये च न तस्यां नक्षत्रयोगः पादयोगादृते । तदुक्तं विष्णुधर्मोत्तरे ।

एकादश्यां द्वादश्यां च नित्यं सन्निहितो हरिः ।
अत्र नक्षत्रयोगे पादयोगो न कारणमिति ॥

अथ त्रयोदश्यामिति वाक्यं तथाधृत्याप्रमाणं इति विरुध्यते । न च कार्त्तिकप्रभृतिमासचतुष्टयप्रबोधनानुरोधेन प्रायिकं "आभाका-इत्यन्तरे सङ्ख्यायामप्रसिद्धस्य नियतत्वात्मासचतुष्टयेनेत्यस्यैव प्रायिकानुवादत्वं युज्यते । तथा च कार्त्तिकोदयमाषाढोत्तरमासाश्रयणेन कार्त्तिक एव विष्णुप्रबोधे यद्यपि मिथुनादित्ये स्वपने अधिमासे सति पौर्णमासीद्वयस्य सत्त्वात् । पञ्चभिरपि मासैरुत्थानं न विरुध्यते । यद्यपि द्विवसैर्मास इति चतुर्मासोपपत्तिः, द्विराषाढे विवेचकं दर्शयिष्यामः । न च हरि-शङ्करयोः सहोत्थानमिति लोकप्रसिद्धिर्नियामिका, तस्याः प्रमाणसिद्धितो दौर्बल्यात् । किञ्चैववादिना शयने किं वाच्यं यदानुरोधात्कालप्रमाणं इत्यादिके भवति

तदा किं तत्रैव हरिशयनं सतायाङ्‌ अपेक्षणीयः। तथापि चतुर्द्दश्यां नक्षत्रप्राप्तौ हरि-शङ्करयोः प्रबोधोत्थानमिति लोकप्रसिद्धिर्निर्यामिका, यथाः शास्त्रं किं लोको न जल्पति, मिथुनादित्ये वा चतुर्दश्यामनुराधाप्राप्तौ तथायाढ़ग्रह्णपौर्णमासीलङ्घितमासपेक्षित-तयोत्थाने कथा युक्तापि छता तस्याक्षयनाद्‌वाषाढ़प्रतिनियमात्‌ ब्धेष्टादौ मासवलाभेऽपि शयनादिनिमित्तकरणं तदाधिमासपाता-वसम्भवात्‌ हिरायाढ़कल्पनमाश्रित्य तदनुष्ठानानन्तरव्यतिरेकेण तथाविधमासप्राधान्यानुपपत्तेः अथापि भवति तथापि आभाका-इत्यस्यावश्यादरणीयत्वं। किञ्चैवमादिना आश्विनेऽपि लोकप्रसिद्धिं पुरस्कृत्य देवोत्थापनमभिदधता स्वयं लिखितमपि प्रसक्तं यद्यापि द्विवर्षमासो भवतीति तस्मादन्यथा वर्णनीयम्‌।

तत्र यदुक्तम्‌।

> निशि स्वापोद्दिवोत्थानं सन्ध्यायां परिवर्त्तनम्‌।
> पादयोगादन्यतिथौ द्वादश्यामृक्षयोगत इति॥

तस्यायमर्थः।

पादयोगादन्यस्यां त्रयोदश्यामपि पादयोगे सन्ध्यायां परिवर्त्तनम्‌। द्वादश्यां नक्षत्रयोगे सति निशि स्वापोद्दिवोत्थानं भवति। न पुनस्तस्यादिक्रमयन्यतिथौ नक्षत्रपादयोगादेवं सति आभाका-इति मासचतुष्टयेनेति च द्वयमुपपद्यते, एवञ्चैकादश्यामपि नक्षत्र-योगे वचनान्तरबलेन शयनाद्याचरणीयम्‌। यत्तु "द्वादश्यामेव तत्‌ कुर्यादिति, तस्याप्युक्तन्यायश्रवणेन, यदि द्वादशीं विहाय एकादश्यां नक्षत्रलाभः तथापि द्वादशीसन्धिसमय एव शयनादिकमनुष्ठेयम्‌।

यद्येकादश्यां नक्षत्रयोगो यदि वा त्रयोदश्यां सर्व्वेषामभावात्प्राप्तौ द्वा-दश्यां सन्धिवशे शयनादिकं सन्ध्यायाश्च रात्रि-दिवसोभयात्मकत्वात् "निशि स्वापो दिवोत्थानमित्यपि नात्यन्तविरुद्धम् इति स एव मधुरमाधवकल्पेन नक्षत्रफलमस्तु एकादश्यां वा नक्षत्रप्राप्तौ प्रशस्त-तमत्वेनान्यतरानुष्ठानं त्रयोदश्यां वापि कार्त्तिकाविरोधेनेत्युक्तमिति, तदेतदयुक्तं, "निशि स्वापो दिवोत्थानमिति वाक्ये भवदुक्तार्थस्वीकारे व्यवस्थितसम्बन्धप्रसङ्गात् षष्ठ्यर्थस्य वचनादप्रतीतेः तथाचामासान्तरा-धिमासनिपाते तुला-वृश्चिकयोर्विकल्पेन दिवोत्थापनविधायकवचनस्य वक्ष्यमाणत्वात् । तदभिप्रायेणास्य वचनस्यार्थवत्त्वेनोपपत्तेर्न भवदुक्तार्थ-स्वीकारे कारणमस्ति । तेन श्रीकराणां मतमेव साधु । कार्त्तिक-शब्दश्च तुल्य एवाविकल्पाभिप्रायेणोपपद्यते । यच्च कार्त्तिकस्या-धिमासत्वे शुद्धकार्त्तिक एव विष्णुप्रबोध इत्युक्तं तदपि विकल्पस्य वक्ष्यमाणत्वादयुक्तम् । तस्माद्यथोक्तमेव साधीय ।

भविष्योत्तरे ।

प्राप्ते भाद्रपदे मासि एकादश्यां शुभे दिने ।
कटदानं भवेद्विष्णोर्महापातकनाशनम् ॥

'कटदानं' शयानस्य विष्णोरङ्गपरिवृत्तिकरणम् ।

तथा ।

कार्त्तिके शुक्लपक्षस्य एकादश्यां समाहित ।
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेद्द्विज ॥

वाराहपुराणे ।

इयन्तु द्वादशी देव प्रबोधार्थन्तु निर्मिता ।

तयैषा सर्वलोकानां हितार्थं शेषशायिना ॥

एवमन्येषामपि देवानां स्वीयस्वीयतिथिवशेन नक्षत्रवशेन च शयनाद्याचरणीयमिति ।

तदुक्तं मत्स्यपुराणे ।

यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च या ।
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकमिति ॥

केचित्तिथिवशेन केचिन्नक्षत्रवशेन सर्वेषां शयनादिकमाचरन्ति। प्रतिपदादिपञ्चदशतिथयो धनदादीनां देवानां, तथैकैव तिथिरनेकदेवताका यथा प्रतिपद्ब्रह्मणो धनदस्य च। तथा सुप्तानविकल्प-एवान्याय्य' सप्तविधतिनक्षत्राण्यपि तत्तद्देवव्यापीनीति नागपरशा-दीनां नक्षत्रयोगेन च शयनादिकमाचरणीयम् । नक्षत्रतिथिमेलनं च रुद्रादीनां शयनाद्यावाहनादौ नोक्तम्, न हि कदाचिच्चतुर्दश्या-माषाढ्यां रौद्रमार्द्रानक्षत्रं सम्भवति । एवमन्यत्रापि द्रष्टव्यम् । तस्मात्तिथिवशेनैव तेषां शयनादिकं विद्येत नक्षत्रवशेनापीति ।

पूर्वेद्युरपरत्र स्यात् पूर्वाह्णे स्वापबोधयोः ।
अपराह्णे यदा तौ तु तदहर्नियमं विदुः ॥

पूर्वाह्णमारभ्य रात्रिविशेष एव पूर्वाह्ण एवोच्यते दिवास्वापस्य निषेधात् । एवमेव च रात्रावुदयमाने तु गरुडध्वजे पूर्वेद्युरपरत्र स्यादपरेद्युर्धर्ममाचरेत् इति बोद्धव्यम् ।

काश्यपपञ्चरात्रे ।

सदुत्थाने च शयने तथा पार्श्वपरिवर्त्तने ।
अथ यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः ॥

अन्न वा यदि भुञ्जीत फलमूलमथापि वा ।
अपराधमहं तस्य [illegible] क्षमामि कदाचन ।
क्षिपामि नरके घोरे यावदिन्द्राश्चतुर्दश ॥

नैव यावद्भगवतो वासुदेवस्य शयनादिकालोऽवधारित[1] ।
अधिमासनिपाते [illegible] कर्कटे दक्षिणे च पुष्पादिकमाचरणीयमिति ।
तद्विधे बह्वेपरदिक विधीयते ।

आह ज्योतिःपराशर ।

अतीते च दशे खाद्रैं पञ्चपञ्चे दिनदये ।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासक ॥
दिवसस्य हरत्यर्कं षष्टिभागमृतौ[2] तत ।
करोत्येकमपच्छेदं तथैवैकञ्च चन्द्रमा ॥

एव सूर्याचन्द्रमसौ उत्तरायणानन्तर यावत् दक्षिणायनात् प्राग्-वैशाखादौ गतिविशेषवशेनाधिमास जनयत । दक्षिणायनात् पर क्वचित् ।

आह मरीचि ।

अधिमासो भवेद् यस्मिन् दिराषाढो भवेत् तदा ।
अमावास्याद्वय यत्र दिराषाढ प्रकल्पयेत् ॥

आषाढि ।

मिथुनस्थो यदा भानुरमावास्याद्वय स्पृशेत् ।
द्विराषाढ स विज्ञेयो विष्णु स्वपिति कर्कटे ॥

---

(१) पाठोऽय न पूर्व्वापरसङ्गत । (२) पाठोऽय आदर्शसम्मत एव मुद्रित परन्त्वय न समीचीन, षष्टिभागस्तावितीव पाठो युज्यते ।

कृष्णपक्षे दशम्यादौ मेषं गच्छेद्दिवाकरः ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

दशम्यादौ पञ्चम्यामिति ।

तथा ।

माधवाद्येषु[1] मासेषु यदस्य दर्शद्वयं यदा ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

विष्णुः ।

अमावास्यामतिक्रम्य यदा सङ्क्रमते रविः ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
पञ्चम्यां कृष्णपक्षे च मेषं गच्छेद्दिवाकरः ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥

अत्रायं सङ्क्षेपार्थः । अधिमासो यदा दक्षिणायनात् प्राक् मेषादिषट्के पतति तदा द्विराषाढः प्रथमवर्ष एव सम्पद्यते, तदा दक्षिणायनानन्तरं विष्णुः स्वपिति यदा कर्कटादिषट्के अधिमासः पतति तदा आगामिवर्षे शेषकर्कटादित्ये श्रवणमाषाढी-पौर्णमासी भवति तस्या वा आषाढत्वात् तत्रैव विष्णुः स्वपिति, द्विविधस्यापि च मासपातस्य नामावास्याद्वयादि सत्, तथा च सति यदा कर्कटादिषट्के अमावास्याद्वयं भवति तदा शुक्ल-प्रतिपदि द्वितीयायां वा कन्यातुलासङ्क्रान्तिर्भवति, आगामिवर्षे मेषसङ्क्रान्तिरपि तथैव, प्रतिमासं सङ्क्रमणे च दिनद्वयवृद्ध्या पञ्चम्यां षडशीतिमिथुनसङ्क्रान्तिर्भवति तदा द्विराषाढ प्रकारस्य कर्कटे-

(१) माधवाद्येष्विति ख० ।

ऽस्ति शयनं न तु परमार्थतो द्विराषाढः । तथाच गणितकुश-लानां मिथुनादित्ये भोगे अतीतेऽपि गम्यमाने भास्करे मिथुन-भाग एवादित्यस्य गणिते आषाढेति न तत्त्वतो गणितामावास्या-दिनाभ्यां द्विराषाढो गम्यते ।

तदाह मत्यः ।

> एषं त्यक्त्वा चतुर्थ्यन्ते षडशीतिं स्थिते यदा ।
>
> तदा दैवविदा चिन्त्यं द्विराषाढस्य कल्पनम् ॥

तथाच ज्योतिःशास्त्रे ।

> अश्वचतुर्थीमतिक्रम्य यदा सङ्क्रमते रविः ।
>
> द्विराषाढं प्रकल्प्यैव कर्कटादौ स्वपेद्धरिः ॥
>
> प्रथमे च द्वितीये वा शस्ते मेषमिथाद्रवि ।
>
> द्विराषाढक्रिया तावद्यावद्विष्णुप्रबोधनम् ॥

विष्णुः परकर्कटके स्वपेत् । शेष प्रतोत्सवादि यथाक्तक्रमेण कार्य्यं ।

तथा हि ।

> द्विराषाढविकल्पोऽयं वैष्णवशयनं प्रति ।
>
> ध्वजस्तु[1] शतयज्ञस्य सिद्ध एव विधीयते ॥

बौधायनश्च ।

> द्विराषाढक्रिया तावद् यावद्विष्णोः प्रबोधनम् ।
>
> विष्णुद्धे तु हरौ कार्य्या सूर्य्यगत्यैव सा क्रिया ॥

यदा तु प्रथमे वर्षे द्विराषाढे कर्कटे हरिशयन तदा कन्यायां

---

(१) अत्र ध्वजस्तु शतयज्ञस्य इत्येव पाठो युक्त तथाच शतयज्ञस्य शतक्रतो-रिन्द्रस्य ध्वजस्तु इन्द्रध्वज सिद्धे विधीयते इत्यन्वय ।

परिवर्त्तनं शक्रोत्थापनञ्च, तुलायां दुर्गोत्सवः, वृश्चिके वासुदेवोत्थापनं।

यदाह विरिञ्चिः।

दक्षिणाभिमुखे भानौ स्वपेद्यदि हरिस्तदा।
कन्या-वृश्चिकयोरेव विवर्त्तन-विबोधने॥

तथा।

कर्कटके हरौ सुप्ते शक्रध्वजक्रियादिने।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्दनम्॥

इति। यदा तु प्रकल्प्यते हिरापाढ़ः, यदा च खरूपतस्तदा शुक्लपक्षे श्रवणद्वयं भवति।

यथा कर्त्तव्यमाह मत्स्यः।

हिरापाढ़े तु सम्प्राप्ते यदि सिंहे हरिः स्वपेत्।
परत्र स्थापयेच्छक्रं कन्यायान्तु विसर्जयेत्॥

अथ कन्यायामेव श्रवणद्वयं भवति तदा नामादिश्रवणे शक्रोत्थापनं, अपरस्मिन् दुर्गोत्थापनं। तदाह।

सिंहकन्येऽथ पक्षे च शुक्लादेः पक्षसंयुते।
सिंहे परे शक्रमहः कन्यायां सिंह-दुर्गयोः[१]॥
शुक्लपक्षद्वये पूर्वा कल्पोऽयमपरः स्मृतः।
हिरापाढ़श्च विद्वद्भिः खसमासिश्च तावता॥

कुत इत्यपेक्षायामाह।

शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तनम्।
मासद्वयेन निर्दिष्टं शयनादि न कोविदैः॥

(१) वचनमिदं आदर्शसम्मतमेव मुद्रितं परन्तु न सम्यक्।

दुर्गायाय त्रिभिर्मासैरधोमासं विनैव तत् ।
अधिमासनिपाते तु कन्यादिन्द्रादिकान् हरीन् ।
कन्या तुला वृश्चिकेषु रूपघोत्थापयेद्ध्रुवम् ॥

अधिमासनिपात इत्यस्यायमपरोऽर्थं यदा कर्कटादिषु पौर्णमासीद्वय भवति "अधिमासनिपाते तु कन्यादिन्द्रादिकान् हरीन्"। इति(१) ।

तथा हि ।

आषाढद्वयसंयुक्त पौर्णमासद्वय यदा ।
द्विराषाढ स विज्ञेयो विष्णु स्वपिति कर्कटे ॥ इति।

तथाप्युक्तं ।

चैत्रादितुलान्ते तु यदि पूर्णाद्वय भवेत् ।
द्विराषाढ स विज्ञेय शयनावर्त्तनादिषु ॥

चैत्रादीत्युपलक्षण फाल्गुनद्वयस्यापि मासस्य चिन्त्यमानतया सम्भवात् तत्र फाल्गुनादावधिमासपाते कर्कटे हरिशयने सति मासचतुष्टयेनोत्थान भवति कर्कटादिचतुष्टये त्वधिमासपाताभिप्राये एवाषाढादौ हरिशयने कृते श्रावणादीनामन्यत्र द्वैविध्ये वृश्चिक एव कार्त्तिकमासो वर्त्तते तेन पञ्चभिरपि मासैस्तत्रैवोत्थान "आभाकाङ्क्षितपक्षेष्विव्यस्य बहुपक्षतमनाधिकत्वात् "प्रबुध्यते माघचतुष्टयेनेत्यस्य प्रायिकाभिप्रायिकानुवादत्वात् एक एवासौ मास ।

यदाह बादरायण ।

एकमासस्थिते सूर्य्ये यदि स्यादधिमासक ।

---

(१) इत्यय पाठ पूर्व्वापरग्रन्थविरोधित्वात् न समीचीन ।

एक एव हि मासोऽसौ(१) षड्भिर्दिवसैर्मतः ॥ इति ।

एवं द्विराषाढ़पक्षे प्राप्ते द्विराषाढ़ उच्यते न तु स्वरूपतो द्विराषाढ़ः एवं परिवर्त्तन-दुर्गोत्सवयोरपि बोद्धव्यं। तथाहि श्रावणोदयं भाद्रपदोदयं भवति तदा देवशयनात्मासद्वयेन कन्यायां शक्रोत्थापनम् परत' तस्माच्च मासेन दुर्गोत्थापनं मासद्वयेन विष्णोः। यदा त्वाश्विनोदयं भवति तदा सिंह एव शक्रोत्थापनं परिवर्त्तते तस्मान्मासद्वयेन दुर्गोत्सवेन च त्रयेण च विष्णोरुत्थापनं, यदा तु कार्त्तिकोदयं भवति तदापि द्विराषाढ़ेन द्विराषाढकल्पनं कर्कटे परिवर्त्तनं शक्रोत्सवादि तु यथाकालमित्युक्तं। भविष्योत्तरे अधिमासनिपातेऽपि तुलायामेव कृष्णोत्थापनमभिहितं ।

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलायाञ्च महाराज पुनरुत्थापयेत् तु तम् ॥
अधिमासे प्रपतिते एष एव विधिक्रमः ।
नान्यथा स्वापयेत्कृष्णं नान्यथोत्थापयेत्तथा ॥

इत्यलमतिविस्तरेण ।

ब्रह्माण्डपुराणे ।

द्वादश्यान्तु सिते पक्षे मासे प्रौष्ठपदे तथा ।
शक्रमुत्थापयेद्राजा विश्व-श्रवण-वासवे ॥

'विश्वं' उत्तराषाढा, 'वासवं' धनिष्ठा, श्रवणनक्षत्राद्यपादे द्वादश्या योगः सुप्रशस्ततमः ।

तदुक्तं ।

---

(१) द्विमासोऽसाविति ख० ।

वैष्णवादिगते चन्द्रे शक्रमुत्थापयेन्नृप ।
भरण्यामन्त्यपादे च निशि सुप्ते विसर्जयेत् ॥
श्रवणस्याद्यपादे च भरण्या समभागके ।
शक्रं प्रपातयेद्देवं यथा राजा न पश्यति ॥
सौर-भौमाधिपे वारे सूतके मृतकेऽपि वा ।
भूमिकम्पादिकोत्पाते शक्रं नैव प्रपातयेत् ॥

निमित्तविशेषोपनिपाते तु भरण्यन्तपादानारभ्येत्यनुसन्धेयम् ।

आह वृद्धवशिष्ठः ।

चन्द्रगृहगते भानौ यदा स्वपिति केशवः ।
शशिपुत्रगृहे भानौ न चोत्थाप्य पुरन्दरः ॥

'चन्द्रगृह' कर्कटक, 'शशिपुत्रगृह' कन्येति ।

अथवाह ।

हिराषाढे च कन्यायां शक्रं नोत्थापयेद्यदि
राज्ञो राज्यं विनश्येत प्रजा चैव निपीड्यते ॥
काले तु स्थापिते शक्रे चिरं जीवति पार्थिवः ।
प्रजानामूर्जनादेव भवेद्धनवती क्षितिः ॥ इति ।

एष हिराषाढविवेकदर्शितमनुसन्धेयमिति ।

देवीपुराणे ।

प्रौष्ठपदेन चाष्टम्यां शुक्लायां शोभनर्क्षके ।
आश्विने वाथ शुक्लायां श्रवणे वा समुच्छ्रयेत् ॥

गर्गः ।

सिंहं गते दिनकरे सितपक्षपक्षे

वर्षांसु पादगुपगच्छति वै शशाङ्के।
उत्तिष्ठते विविधमन्दिरवृन्दवन्द्यो
यस्यां ततो निशि सिषेऽदति वज्रपाणि॥ इति।
अत्र च हरिशब्देन हरिदैवत्य श्रवणनक्षत्रमुपलक्ष्यते।
भविष्योत्तरे।
राज्ञान्येनापि कर्त्तव्यो वर्षे वर्षे महोत्सवः।
इन्द्रध्वजसमुत्थाने महादानरत यदि।
ततस्तु द्वादशे वर्षे कर्त्तव्य नान्तरा पुनः॥
देवीपुराणे। सूर्यरथयात्रायां कथञ्चिदकरणे द्वादशाब्दे शक्रध्वजः कर्त्तव्य इत्यभिधायोक्तम्।
इन्द्रध्वजस्य चाप्येवमुक्तोयो न कृतो यदि।
ततो द्वादशमे वर्षे कर्त्तव्यो नान्तरा पुनः॥
शक्रोत्सवो नभसे तु कार्य्यः सिंहगते रवौ।
द्वादश्यां शुक्लपक्षे तु नवमे विष्णुदैवते॥
सम्पातश्च भरण्यां स्यादवश्यमादिमस्तु तु।
अर्च्चयित्वा भगवतीं तत सद्यो विसर्जयेत्॥
भागवते।
कन्यायां कृष्णपक्षे तु पूजयित्वा स्वपेद्दिवा।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः॥
शुक्लपक्षे चतुर्थ्यां तु देवीकेशविमोचनम्।
प्रातरेव तु पञ्चम्यां स्नापयेत्तु शुभैर्जलैः॥
षष्ठ्यामम्बिकापूजा अष्टम्यां पशुपोषणम्।

प्रताय जागरेणैव नवम्यां विधिवद्द्विजैः ॥
सम्प्रेषणं दशम्यान्तु क्रीडाकौतुकमङ्गलैः ।
नीराजनं दशम्याञ्च बलवृद्धिकरं महत् ॥

वाराहे ।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयन् ।
उत्तरेणार्चनं कृत्वा श्रवणेन विसर्जयेत् ।
मूलेन सकलां विल्वशाखामाहृत्य पूजयेत् ॥
अजपादो निशाभागे श्रवणस्य यदा भवेत् ।
तदा देव्याः समुत्थानं नवम्यां दिनभागतः ।
दशम्यां बलवृद्ध्यर्थं कुर्यान्नीराजनं नृप ॥
स्वात्यादित्यहरीयादौ समारब्धाश्विने सति ।
रक्षां कृत्वा दशम्यान्तु प्रजा नीराजयेत्तदा ॥

नीराजनसंज्ञितां शान्तिं कुर्यादित्यर्थः ।

आह व्यासः ।

आर्द्रायां बोधयेद्देवीं मूलेन प्रतिपूजयेत् ।
तदा देव्याः समुत्थानं नवम्यां च पुनर्दिवा ॥
अजपादो दिवाभागे श्रवणस्य यदा भवेत् ।
तदा सम्प्रेषणं देव्या दशम्यां साधकोत्तमैः ॥
चतुर्थये ॥ मूलादौ नवम्यामाश्विने सिते ।
चण्डिकामुपचारैश्च पूजयेद्राष्ट्रवृद्धये ॥
पूर्वाषाढे ॥ कन्यायामुत्थानं नवयोषितः ।
कुर्वीतेर हीयते राष्ट्रं प्रजा च विकला भवेत् ॥ इति।

ब्रह्माण्डपुराणे ।

तुलायां तिलतैलेन सायंसन्ध्यासमागमे ।
आकाशदीपं यो दद्यान्मासमेकं निरन्तरम् ।
सश्रीकाय श्रीपतये स श्रिया न वियुज्यते ॥
दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥

इति दीपदानमन्त्रः ।

अमावास्या तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रिस्वरूपा सा प्रदीपोत्सवनाय वै ॥
कुसुमकुङ्कुमैर्गन्धैर्दीपैर्गोरोचनाफलैः ।
वस्त्रैर्धूपनवधूप्य(१) पृच्छेत् कुशलया गिरा ॥
पूजयेच्च सदा लक्ष्मीमलक्ष्मीं मलनाशिनीम् ।
रथे पद्मपताकानां ध्वजमेकं रथे न्यसेत् ॥

वाराहे ।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
तस्मिन् शुक्ले सदा विष्णुस्तुलायामेव हृष्यते ॥

लक्ष्मीप्रबोध दीपालिकेति यस्य लोके प्रसिद्धिः ।

कौमुदी यक्षरात्रिश्च कौसुमी फाल्गुनी तथा ।
वासन्तिरिति विज्ञेया देशस्य महिमाश्रये ॥
आश्विने पौर्णमास्याञ्च निशादौ कौतुकं स्मृतम् ।
कौमुदी सा समाख्याता कार्या लोकविभूतये ॥

---

(१) पाठोऽयं आदर्शानुरूप एव मुद्रितः परन्तु न समीचीनः ।
वस्त्रैर्धूपनवस्त्रैरेति पाठो युज्यते ।

कार्त्तिके सितपक्षादौ तिथौ तु कुसुमांशुकैः ।
यक्षार्चा यक्षरात्रिः स्यात् कार्य्या चेष्टसुखाय सा ॥
माघशुक्लचतुर्थ्यान्तु वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजा सा कौसुमी स्मृता ॥
फाल्गुने पौर्णमास्यान्तु यदा वामविलासकः ।
ज्ञेया सा फाल्गुनी लोके कार्य्या लोकसमृद्धये ॥
चैत्राष्टम्यामशोकैस्तु त्रयोदश्यां स्मरार्चनम् ।
तत्र कार्य्यमशोकार्थं ज्ञेया वासन्तिकेति सा ॥

अथ ज्योतिःशास्त्रे ।

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
तस्मिन् शुक्ले यदा विष्णुस्तुलायामधिगच्छति ।
उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्दशीम् ॥

अथ भविष्यत्पुराणे ।

स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत् ।
प्रतिपद्रुक्मकस्यापि गुडमिश्रैः सदीपकैः ।
वासोभिरक्षतैश्चार्घैर्गच्छेत्तद्ब्रह्मणः पदम् ॥
पुष्पैर्गन्धैर्नवैर्वस्त्रैरात्मानं पूजयेद्बुधः ।
तस्यां प्रतिपदायाञ्च स गच्छेद्ब्रह्मणः पदम् ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये विष्णुशक्रादिकालनिर्णयो नाम सप्तदशोऽध्यायः ।

## अथाष्टादशोऽध्यायः ।

### अथ विष्णुनामकीर्त्तने कालविशेषः ।

विष्णुधर्म्मोत्तरे वज्र उवाच ।

कस्मिन् काले तु देवस्य किं किं नाम प्रकीर्त्तयेत् ।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥

मार्कण्डेय उवाच ।

पुरुषं वामदेवञ्च व्यासं सङ्कर्षणं प्रभुम् ।
प्रद्युम्नमनिरुद्धञ्च क्रमादिषु प्रकीर्त्तयेत् ।
बलभद्रं तथा कृष्णं कीर्त्तयेत दिनद्वये ॥
माधवं पुण्डरीकाक्षं तथा वै भोगशायिनम् ।
पद्मनाभं हृषीकेशं तथा देवं त्रिविक्रमम् ॥
क्रमेण राजशार्दूल वसन्तादिषु कीर्त्तयेत् ।
विष्णुञ्च मधुहन्तारं तथा देवं त्रिविक्रमम् ॥
वामनं श्रीधरञ्चैव हृषीकेशं तथैव च ।
दामोदरं पद्मनाभं केशवञ्च यदूत्तमम् ॥
नारायणं माधवञ्च गोविन्दञ्च तथा क्रमात् ।
चैत्रादिषु च मासेषु देवदेवमनुस्मरेत् ।
प्रद्युम्नमनिरुद्धञ्च पक्षयो शुक्लकृष्णयो ॥
शर्वं सर्वं शिवं स्थाणुर्भूतादिर्निधिरव्ययः ।
आदित्यादिषु वारेषु क्रमादेवमनुस्मरेत् ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभु ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावन ॥
अव्यक्त पुण्डरीकाक्षो विश्वकर्म्मा शुचिश्रवा ।
सम्भवो भावनो भर्त्ता प्रभव प्रभुरीश्वर ॥
अप्रमेयो हृषीकेश पद्मनाभोऽमरप्रभु ।
शरण्य शाश्वतो धाता छण्णयैतामनुस्मरन् ।
देवदेवस्य नामानि कथितानि च यादव ॥
ब्रह्माणं श्रीपतिं विष्णुं कपिलं श्रीपतिं प्रभुम् ।
दामोदरं हृषीकेशं गोविन्दं मधुसूदनम् ॥
भूधरं गदिनं देवं शङ्खिनं पद्मिनं तथा ।
चक्रिणञ्च महाराज प्रथमादिषु संस्मरेत् ।
सर्वदा सर्वदेवानां देवदेवस्य यादव ॥
नामानि सर्वाणि जनार्दनस्य
कालत्रये सर्वं पुरुषप्रवीर ।
तस्मात्सदा सर्वगतस्य नाम
ग्राह्यं यथेष्टं वरदस्य राजन् ॥

वज्र उवाच ।

कार्यारम्भे कथं कस्मिन् किं नाम परिकीर्त्तयेत् ।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥

मार्कण्डेय उवाच ।

चक्रिणं हलिनञ्चैव शार्ङ्गिणं खड्गिनं तथा ।
मोक्षार्थी प्रवसन् राजन् दिक्षु प्राच्यादिषु स्मरेत् ॥

अच्युतञ्चाधिकञ्चैव मन्त्रे सर्वेश्वरं प्रभुम् ।
संस्मरेत् पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥
कौर्म्मं वाराहं मात्स्यं वा जलसन्तरणे स्मरेत् ।
भ्राजिष्णुमग्निजनने जपेन्नाम ह्यतन्द्रितः ॥
संग्रामाभिमुखो गच्छन् संस्मरेदपराजितम् ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ।
अच्युतञ्चामृतञ्चैव जपेदौषधकर्मणि ॥
गरुडध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदुष्टशिरोरोगविषवीर्यं प्रशाम्यति ॥
ग्रहनक्षत्रपीडासु देवबाधाटवीषु च ।
दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तथा तीव्रे नरसिंहेति कीर्त्तयेत् ॥
नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणम् ।
वामनं खड्गिनञ्चैव दुःस्वप्नेषु तु संस्मरेत् ॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ।
बलभद्रन्तु युद्धार्थी कृष्यारम्भे हलायुधम् ।
उत्तारणे वणिज्यार्थी श्रीरामभ्युदये नृप ॥
जगतो मङ्गलं विष्णुं माङ्गल्येषु च कीर्त्तयेत् ।
अग्निघातेष्वशेषेषु विशोकेषु तथा जपेत्[१] ॥
उत्तिष्ठन् कीर्त्तयेद्विष्णुं प्रस्वापे माधवं नरः ।

(१) विशोकेति तथा जपेदिति ख० ।

भोजने चैव गोविन्दं सर्वत्र मधुसूदनम् ॥
नारायणं सर्वकालं क्षतप्रस्खलितादिषु ।
स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ॥
कीर्त्तयेद्वासुदेवञ्च प्रसुप्तोऽपि च यादवम् ।
कार्य्यारम्भे तथा राजन् यथेष्टं नाम कीर्त्तयेत् ॥
सर्वाणि नामानि हि तस्य राजन्
सर्वार्थसिद्धौ तु भवन्ति पुंसः ।
तस्माद्यथेष्टं खलु देवनाम
सर्वेषु कार्य्येषु जपेत भक्त्या ॥
इति विष्णुनामकीर्त्तने कालविशेषः ।

## अथ मुख्यकालातिक्रमे कालाः ।

ते च गौणा आपत्कालाश्चेति द्विप्रकाराः । तदेवं विचार्य्यते मुख्यकालाभावे गौणकालग्रहणं कार्य्यं न वेति, तत्र को मुख्यः को वा गौणः । यो विहितः स मुख्यः । यथा उषःस्नानादौ प्रातरादिः । यथाविहितः तत्समीपवर्त्ती तेष्वेवाङ्गभाव गौणमानः सङ्गवादिः स गौणः । तदाह त्रिकाण्डमण्डनः ।

स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालतः ।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि ॥ इति ।

अस्यार्थः पूर्वोत्तरयोः पूर्वस्य कर्मणो यः स्वकालस्तस्मादुपरितनः उपरितनकर्मकालाच्च पूर्वभावी पूर्वापरयोरन्तरालकाल इति यावत् सपूर्वस्मिन् कर्मणि गौणः । यदा यथोक्तान्तरालवदागामिक्रिया-

मुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्त इति । कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानाय ग्रहणमायुज्यते यतः स्वकालात् प्रच्युतं पूर्वं कर्म तावदिनष्टप्रायं उत्तरस्य स्वकालादप्रच्युतत्वादविनष्टरूपं तत्र यद्युत्तरकर्मकाले पूर्वं कर्म क्रियते तदा विनष्टसमाधानार्थं ह्यविनष्टविनाशनं प्रसज्यते । तन्मृतजीवनाय जीवन्मरणमिव स्यात्। अत्र ब्रूमः। उत्तरे कर्मकाले द्वयोरवकाशो यतीदमुच्यते न पुनरन्यस्यापि तस्मिन्निति। ननु मुख्यकालसमीपवर्त्तिनः कालस्याभिधयाविनाभूतसम्बन्धितलक्षणयाश्रयणीयत्वमेवोचितं, सत्यमेवं, तथापि तत्कालोपलक्षणीभूतातपमार्द्दवादिगुणोपनीतया लौकिक्या मातरादिशब्दप्रवृत्त्या तस्य गौणत्वमप्यस्त्येवेति गौणत्वोक्तिर्न विरुध्यते। ननु तदनुपदेशात्कथं ग्राह्यत्वमाश्रीयते, प्रतिनिधिन्यायेनेति ब्रूमः। नन्वेवं तर्हि यथाकथञ्चित्सादृश्यात्मध्याह्नादावपि कदाचित् मातरादिशब्दानि प्रयुज्येरन्, किमयानिष्टं क्रियते एवं हि कदाचिदप्यसादृश्यतः प्रचुरगौणप्रयोगशक्तिनः शब्दादेरभावात्, तदेवमस्मिन् माये कश्चित् पूर्वाह्णे दैविकं श्राद्धमित्यादिकालसंयुक्तेषु वाक्येषु कालं प्रति कर्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकालातिक्रमेण गुणभूतकर्मानुग्रहाय कालान्तरानुष्ठानं न कार्य्यमिति पूर्वपक्षमभिप्रेत्य सिद्धान्तितवान्, काले हि कर्म चोद्यते न कर्मणि कालः अतः कर्मत्वेन प्राधान्यं कालमनूद्य कर्मणो विधानात्। ततः कर्म प्रति गुणभूतविहितकालातिक्रमे प्रधानभूतकर्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्य्यं। कालहाने कर्मणोऽपि त्यागस्यान्याय्यत्वात्। न ह्येकचक्षुषा विना शेषभोजनमेव त्यज्यते। तदयुक्तम्। न तावत्कर्म-

गुणीभावेनाच पूर्वपक्षो घटते कर्मणः फलसम्बन्धात्। फलवत्सन्निधावफलं तदङ्गमिति न्यायेन कालस्यैवाङ्गत्वात्। न च कर्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थवाद इति वाच्यम्। कालस्य फलवत्कर्मार्थत्वावगमात् नापि कालगुणीभावोक्तः सिद्धान्तो घटते, असिद्धहेत्वाभासोपन्यासात् न ह्यत्र कालानुवादेन कर्म विधीयते कालस्यान्यतः प्राप्तिविरहात्। ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽप्यमावास्यादिरूपेण लोकव्यवहारादेव ज्ञातस्यानुवादो भविष्यति। नैवम्। लोकसिद्धकालस्वरूपानुवादेन कर्मविधावस्य स्वयमफलत्वेन फलवत्कर्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गात्। किं चास्मिन् कर्मण्युपदेश्यस्य कालस्य न कर्मान्तरसम्बन्धो घटते तस्यैतत्कर्मानुष्ठानेऽनन्तरमेवाऽनुष्ठितत्वात्। नन्वेवं तर्हि यजेत स्वर्गकाम इत्यत्रापि लोकादेवावगतं स्वर्गकामिनमनूद्य यागविधेरवधारणात् कथं न विध्यानर्थक्यम्, उच्यते, यद्यपि स्वर्गकामस्योद्देश्यतया वाक्येऽन्वयः प्रतीयते तथापि भावनायाः प्रथमं भाव्यापेक्षणात् पुरुषस्य च सिद्धरूपतया तदनर्हत्वात्स्वर्गकामपदेन कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्प्यते स्वर्गकामस्तु पूर्वसिद्ध एवानूद्यते, यथा लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरत्वं वाच्यं एवमिहापि। तदुक्तं मण्डनमिश्रैः।

अपेक्षितत्वात् भाव्यस्य कामशब्दो हि तत्परः।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितमिति॥

अत्र कालानुवादेन तत्र कर्मविधिरित्ययुक्तम्। तदेव यद्योऽन्यै पूर्वोत्तरपक्षावयुक्तौ कौ च तर्हि तौ युक्तौ। उच्यते। तत्र तावत्पूर्वपक्षः नित्य नैमित्तिक आवश्यकत्वेन प्राप्ते तादृग्विधस्वरूपनिवारणार्थं यथा प्रकृत्यादिव्युपबन्धे विचितायाप्तौ तत्सद्भावसनिनिधिपक्ष

कर्त्तव्यमितिस्थिते स्वकालासम्पत्तौ गौणकालग्रहणं कार्य्यम्।

तदाह त्रिकाण्डमण्डनः।

मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेदिति॥

'ईदृश' मुख्यकालसदृशः, अनेनास्य प्रतिनिधित्वेन योग्यता दर्शिता। स्मृतिथावपि गौणकालग्रहणं दर्शयन्ति।

यथाकथञ्चित् कर्त्तव्यं नित्यं कर्म विजानता।
न मासस्य विलोपोऽस्ति पैतृकस्य विशेषत इति॥

तथा।

दिवोदितानि कर्म्माणि प्रमादादकृतानि वै।
यामिन्याः प्रहरं यावत्तावत् सर्व्वाणि कारयेत्।
सन्धौ रात्रौ न कर्त्तव्यं श्राद्धं खलु विचक्षणैः॥ इत्यादि।

सन्ध्यादिकालविशेषनिषेधस्य गौणत्वेन तत्कालग्रहणप्राप्तौ सत्यामेवावकल्पते। "नित्यनैमित्तिकेषु च यथा शक्नुयात् तथा कुर्य्यादित्युपपन्नसामर्थ्यान्नित्यवदन्यतोऽन्यान्यङ्गान्यनित्यानि भवन्ति।

तथाच पैठीनसिः।

प्रधानप्रतिवान्यङ्गानि भवन्ति न भवन्ति चेति।

ननु यदि मुख्यकालातिक्रमे गौणकालग्रहणं न विरुद्धम् तर्हि दर्शपूर्णमासपार्वणश्राद्धादीनाममावास्यादिविहितकालाभावे प्रतिपदादिषु कर्त्तव्यत्वं प्रसज्येत। का नामैषा प्रसक्तिरभिमतमेव हि गौणकालस्वीकारवादिमतात् तदनुष्ठानम्। एतच्च गौणकालग्रहणं न काम्येषु। तत्र हि सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारसम्भवात्। गौणकालग्रहणे तु कर्मानुष्ठाने कश्चिद्विशेषस्त्रिकाण्डमण्डनोक्तप्रसङ्गादुच्यते।

गौणेष्वेतेषु कालेषु कर्म चोदितमाचरेत् ।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥

कालान्तरोदितं कर्म एतेषु पूर्वोक्तलक्षणेषु गौणकालेष्वाचरेत् । प्रकारान्तरमपि तेनैवोक्तं ।

प्रायश्चित्तमथवा वा गौणकाले समाचरेत् ।

अथवेत्यत्र पूर्वकालताप्रतीतिरविवक्षिता । तदेवं गौणकालपक्षे प्राप्तेऽभिधीयते सर्वत्र शास्त्रनिर्दिष्टस्य कालस्यानुपादेयत्वे उद्देश्यैकत्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्यं विहितकालाभावेऽधिकाराभावः धान्तपनीयाधिकरणे प्रायणाच्च निमित्तत्वेत्यत्र सूत्रे प्रतिपादितः ।

अत एव लौगाक्षिः ।

मखिताश्चायते कालः काले तिष्ठन्ति देवताः ।
वरमेकाहुतिः काले नाकाले लक्षकोटिभिः ॥

यत्तु त्रिकाण्डमण्डनेन गौणकालग्रहणमुक्तं तत् पूर्वपक्षन्यायस्यैव सिद्धान्तन्यायविरुद्धत्वेऽनेनोक्तमित्युपेक्षणीयं । यत्तु यथाकथञ्चिदित्यादिस्मरणं न तत्र गौणकालग्रहणं प्रतिपाद्यते किन्त्वन्यदेव । यतस्तत्रायमर्थोऽवगम्यते स्वकालप्राप्तस्य कर्मणो मुख्यद्रव्याद्यसम्पत्तिवशाद्विलोपेऽननुष्ठानं न कार्यम्, किन्तु स्वकाल एव यथाकथञ्चिन्मुख्यद्रव्यसदृशोपादानेन किञ्चिद्विकलमपि कर्त्तव्यमिति । यदपि "द्विवोदितानि कर्माणीत्यादिवचनं न तेन सर्वेष्वपि कर्मसु सर्वेषां च गौणकालानां गौणकालयुक्तया ग्रहणमुच्यते किन्तु केषुचिदेव कर्मसु किञ्चिदेव कालान्तरमनुकल्पत्वेन मुख्यकालस्याप्यादप्राप्तमेव विधीयते । अतो नैतद्वचनबलेन संवत्सरर्त्तु-मास-तिथ्या-

दिकालविशेषविहितानि कर्माणि तत्तत्कालातिक्रमे कालान्तरेऽपि कर्त्तुं युज्यन्ते। यत्तु सन्ध्या-रात्र्योः श्राद्धनिषेध सोऽपि रागत प्राप्तस्य भक्षणादेरिव न्यायाभासोत्पादितमोहप्राप्तस्योपपद्यते। अथवा।

"द्रव्य ब्राह्मणसम्पत्तिः श्राद्धं प्रतिरूपिकतया ।
अकाले यदि वा काले तीर्थश्राद्धं सदा नरै ॥
प्राप्तेरेव हि कर्त्तव्यम्"। इत्यादिभिरपराह्णादिव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य सन्ध्यादिकालेष्वय प्रतिषेध । यत्तु मुख्यकालातिक्रमे नित्य-नैमित्तिकाना गौणकालेऽनुष्ठान दृश्यते तत् क्वचित् शिष्ट-गर्हापरिहार-मन परितोषार्थं, क्वचिच्चानुकल्पत्वेन कालान्तरविधि-रित्यनवद्यम् । उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्य-लोभान्मुख्यकालातिक्रमो न कार्य्य, एतदेव च सन्देहपूर्वकमुपन्यस्य त्रिकाण्डमण्डनेन निर्णीतम् ।

मुख्यकाले हि मुख्यश्चेत् साधन नैव लभ्यते ।
तत्काल-द्रव्ययो कस्य मुख्यत्व गौणतापि वा ॥
मुख्यकालमुपाश्रित्य गौण मुख्यस्य साधनम् ।
न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम् ॥

तदेवमेतत्सिद्ध वचनमन्तरेण गौणकालग्रहण न कार्य्य सति तु वचने गौणस्य, तस्मात् परस्यापि ग्रहण कार्य्यमिति ।

इति श्रीमद्राजाधिराज-श्रीमहादेवीयसमस्तकरणाधीश्वरसक-लविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णय समाप्त ।

शिवमस्तु ।

---